# प्राक्कथनम्

वटोदरसंस्कृतमहाविद्यालयतो ज्योतिषशास्त्रविषये प्रथमवर्गे विशेषयोग्यता–सहितमाचार्यपदवीप्राप्त्यनन्तरं संशोधनकार्य कर्तुं ममातीव दृढा मनीषा जाता। तदनुसारतः संशोधनविषयार्थं तथा च सुयोग्यमार्गदर्शकप्राप्तये प्रयत्नः प्रारब्धः। मम भ्राता वे.शा.सं.श्रीकान्तिलाल ल. याज्ञिकोऽस्मिन्विषये मह्यं सहाय्यं कृतवान्। तेन च प्रो.डॉ. मुकुन्द वाडेकरमहोदयैः साकं मम परिचयः कारितः। विषयचयने मार्गदर्शनं च कर्तुं स मदर्थमभ्यर्थितः। अन्तरं च क्रमशः कार्यं प्रगतिपथमारूढम्। एतदर्थं मम भ्रातुः प्रथमं धन्यवादान् स्मरामि।

मम मार्गदर्शकैः प्रो. डॉ. मुकुन्द वाडेकरमहोदयैर्विषयचयने हस्तलिखितपठने–पाठनिर्धारणे–विषयप्रस्तुतीकरणे च निरन्तरं मार्गदर्शनं कृतम्। तेन चेदं कार्यं पूर्णतां सफलतां च गतम्। सदा सर्वदा संशोधनमग्नैरनेककार्यव्यस्तैरपि सायं–प्रातः यदा–कदापि मया गतं तदा सोत्साहमविश्रान्तं सर्वप्रकारकं सुयोग्यं मार्गदर्शनं विद्यादानं च कृतम्। मम ज्ञानदीपकश्च प्रज्वालितः। तेषामहं हृदयेनोपकारभारान् स्मरामि।

प्राच्यविद्यामन्दिरस्थैः संशोधकैः कार्यकारिभिश्च मम संशोधनार्थमुपयुक्तानां पुस्तकानां  हस्तलिखितानां च सरलतया सम्प्राप्तिः कारितः। विशेषतः डॉ.मीना पाठक, डॉ.शर्मिला बागची, डॉ.मिलिन्द जोशी, श्री. प्रफुल्ल सुर्वे –इत्यादीनां हार्दिकं धन्यवादज्ञापनं करोमि।

आनन्दाश्रमसंस्था, पुणे, रणवीर – संस्कृत – पुस्तकालयः, जम्मु, प्राच्यविद्यामन्दिरं, वडोदरा– एताभिः संस्थाभिर्हस्तलिखितानां प्रतिकृतिप्रदानेन संशोधनकार्ये सहाय्यं कृतम्। तेषामहमाभारं निवेदयामि।

वटोदरसंस्कृतमहाविद्यालयस्य प्राचार्याः श्री. योगेश ओझा महोदयानां तथा च कलासंकायस्य प्रमुखानां प्रो. डॉ. नितिन व्यास महोदयानां संशोधनकार्ये सौविध्यकरणार्थं धन्यवादाः। मम गुरूणां श्री. सञ्जय जोशीमहोदयानामपि संशोधनकार्ये पुस्तकादिना सहाय्यकरणार्थमुपकारभारं स्मरामि। येषां केषांचन प्रत्यक्षमप्रत्यक्ष सहाय्यं मम गृहीतं किन्तु विस्तारभयान्नोल्लेखो कृतस्तेषां सर्वेषामुपकारस्मरणं करोमि।

अन्ते च मम जनन्या जनकस्य चोपकारभारं स्मरामि। येषामहं सदैवाधमर्णोऽस्मि। कर्तुमकर्तुमन्यथा कर्तुं समर्थस्यागाधमहिम्नः परमेश्वरस्य केन वचसोपकारभारः स्मर्यते? तस्यैव कृपाप्रसादादिदं सर्वं सिद्धं भवति। तस्मै तु केवलं पुनः पुनर्नमस्कारः।

**अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम।।**

अनन्तचतुर्दशी **दीपककुमार लक्ष्मीशङ्कर आरम्भडिया**

११/०९/२०११

| | अनुक्रमणिका | |
|---|---|---|
| क्र. | विषयवस्तु | पृ.क्र. |

# महानिबन्धे प्रयुक्तसंक्षेपाक्षरसूचिः-

| क्र. | संक्षेपः | ग्रन्थनाम |
|---|---|---|
| १) | आ.ध.सू. | आपस्तम्बधर्मसूत्रम् |
| २) | अेन सी सी | न्यू  कॅटॅलॉगस् कॅटॅलॉगोरम् |
| ३) | क. | जम्मुनगरस्थितरणवीरसंस्कृतानुसन्धानसंस्थानपुस्तकालयतः प्राप्तहस्तलिखितम्, क्रमाङ्कः स्टेन-१५६ |
| ४) | क.सं. | कश्यपसंहिता |
| ५) | गौ.ध.सू. | गौतमधर्मसूत्रम् |
| ६) | जै.उ.ब्रा. | जैमिनीयोपनिषद्ब्राह्मणम् |
| ७) | ना.सं. | नारदसंहिता |
| ८) | पा.शि. | पाणिनीयशिक्षा |
| ९) | पु. | पुणेनगरस्थिताया आनन्दाश्रमसंस्थातः प्राप्तहस्तलिखितम्  क्रमाङ्कः-२९३७ |
| १०) | बृ. | बृहदारण्यकम् |
| ११) | बृ.सं. | बृहत्संहिता |
| १२) | भ.सं. | भद्रबाहुसंहिता |
| १३) | म.व. | महाभारतम् वनपर्वम् |
| १४) | म.स्मृ. | मनुस्मृतिः |
| १५) | मा.पु. | मार्कण्डेयपुराणम् |
| १६) | या.शि. | याज्ञवल्क्यशिक्षा |
| १७) | व.१ | वडोदरास्थितप्राच्यविद्यामंदिरस्य प्रथमहस्तलिखितम्, क्रमाङ्कः-२३७१ |
| १८) | व.२ | वडोदरास्थितप्राच्यविद्यामंदिरस्य द्वितीयहस्तलिखितम्, क्रमाङ्कः-९१७७ |
| १९) | व.३ | वडोदरास्थितप्राच्यविद्यामंदिरस्य  तृतीयहस्तलिखितम्, क्रमाङ्कः-९२३५ |
| २०) | व.सं. | वसिष्ठसंहिता |
| २१) | वा.पु. | वायुपुराणम् |
| २२) | वं.ब्रा. | वंशब्राह्मणम् |
| २३) | शां.भ.सू. | शाण्डिल्यभक्तिसूत्रम् |
| २४) | सि.शि. | सिद्धान्तशिरोमणिः |
| २५) | सू.सि. | सूर्यसिद्धान्तः |

# प्रथमो विभागः

## प्रथमं प्रकरणम्

## ज्योतिषशास्त्रस्य व्याख्या प्रयोजनमितिहासः

---

(प्रस्तावना, ज्योतिषशास्त्रस्य व्याख्या, व्याप्तिः, महत्त्वम्, वैविध्यम्, त्रिविधत्वं–सिद्धान्तः, संहिता, होरा, यज्ञयागादीनां समयनिर्धारणम्, आधुनिककाले च योग्यमुहूर्तस्यावश्यकता, फलज्योतिषं जीवन आवश्यकम्, संहिताग्रन्थानां विषयाः, संहिताग्रन्थानां परिचयः, ज्योतिषप्रवर्तकाः, उपसंहारः।)

ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति चत्वारो वेदाः सन्ति। वैदिकं वाङ्मयं संहिता–ब्राह्मण– आरण्यक–उपनिषद्–रूपेण वैविध्यपूर्णम्। वेदज्ञानार्थं सहायकानि षड् वेदाङ्गशास्त्राणि –शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। तेषु ज्योतिषशास्त्रमेकतमम्। अस्य भारतीयप्राचीनविद्यासु महत्त्वपूर्णं स्थानं वर्तते। सर्वसाधारणजना अप्यस्य सदुपयोगं कुर्वन्तीति सर्वलोकप्रियमिदम्। विवाहादिविविधसंस्कारेषु, नूतनकार्यारम्भे, गृहप्रवेशे शुभसमयनिर्धारणाय मुहूर्तज्ञानार्थं च ज्योतिषशास्त्रस्य समुपयोगो भवति। सूर्योदय–सूर्यास्तज्ञानार्थं, विविध (सायन–निरयन)पञ्चाङ्गनिर्माणे (तिथि–वार–नक्षत्र–योग–करणज्ञानार्थं)देश–प्रदेशस्य कालगणनार्थे, यात्रामुहूर्त (दिक्शूल–कालहोरा–राहुकालादि) ज्ञानार्थं ज्योतिष–शास्त्रस्यावश्यकता वर्तते। वर्तमानसमये राशिफलमत्यन्तं लोकप्रियं वर्तते। भविष्यफलदर्शके शास्त्रे वैदेशिका जना अपि जिज्ञासायुक्ता दृश्यन्ते। सर्वे जनाः स्वभाविकालविषय अत्यन्तं जिज्ञासायुक्ताः सन्ति। ज्योतिषशास्त्रं न केवलं

कालबोधकं शास्त्रम्, अपि तु जनानां मार्गदर्शकं शास्त्रम्। विविधभाग्यावरोधकयोगानाम्, अरिष्टयोगानां, विविधोत्पातानां निर्णय एवं तद्दोषनिवारणार्थं विविधा उपाया अपि वर्णिता ज्योतिषशास्त्रे। चतुर्वेदेषु ज्योतिषशास्त्रस्य ज्ञानं विवर्णितं दृश्यते। तथापि ज्योतिषशास्त्रस्य लगधप्रणीतो वेदाङ्गज्योतिषाख्य: स्वतन्त्रो ग्रन्थ:।

**ज्योतिषशास्त्रस्य प्रादुर्भावो विकासश्च-**

जिज्ञासा हि मनुष्याणां मौलिकप्रवृत्तिष्वन्यतमा। यथा भोक्तुमिच्छन्ति, पातुमिच्छन्ति, रन्तुमिच्छन्ति, तथैव स्वं परञ्च ज्ञातुमिच्छन्ति। जिज्ञासैव ज्ञानस्य-विज्ञानस्य जन्मदात्री। ग्रह-नक्षत्रविषयकी जिज्ञासैव ज्योतिषशास्त्रस्याविर्भावकारिणी। व्यवहारे मानवोऽनादिकालादेव दिन-रात्रि-अयन-तारकादिविषये स्वल्पमपि जानाति स्म। स एव सूर्य-चन्द्र-ताराकानि-नक्षत्राणि दृष्ट्वा तेषां यत्किञ्चिदपि चिन्तनं करोति। तदेव चिन्तनमनुभवोपचितं वैदिकसंहितासु प्रस्फुटितं दृश्यते। तत् पश्चाच्च नवीनानुभवसंयोजनपूर्वकं लौकिकग्रन्थेष्वपि प्राप्यते। तेन हि ज्योतिषशास्त्रस्य विकास: पञ्चावस्थासु क्रमतो दृश्यते-१)प्राग्वैदिककाल:, २)वैदिकसंहिताकाल:, ३)वेदाङ्गकाल:, ४)सिद्धान्तकाल:, ५)आधुनिककालश्चेति। अन्यदृष्ट्या-१)अज्ञातकाल:, २)आदिकाल:, ३)पूर्वमध्यकाल:, ४)उत्तरमध्यकाल:, ५)आधुनिककालश्चेति। अस्य प्राग्वैदिककालो वा नितान्तमेवाज्ञातोऽस्माभि:। वैदिकसंहितासु यादृशं ज्योतिषस्य निरूपणं दृश्यते, तदनुसारतो यत्तत्पूर्वमपि ज्योतिषस्य यत्किञ्चिदपि स्वरूपं सुनिश्चितमासीदिति। वैदिककालश्चास्य ऋग्वेदाकालादारभ्य लगधकालपर्यन्तं चलति। यद्यपि वेदानामपौरुषेयत्वादनादिनिधनत्वं सर्वै: स्वीक्रियते तथापि तेषां सङ्ग्रहणे प्रयोजनं

गृह्णीमः। तेन ऋग्वैदिककालस्तदैव यदा या हि ऋचः सम्प्रतिलभ्यन्ते तासां सङ्ग्रहकालो न तु प्रणयनकालः। लगधस्य वेदाङ्गज्योतिषमारभ्य पूर्वमध्यकालोदयस्तत आर्यभट्टीयाविर्भावपर्यन्तम्। सिद्धान्तानां स्पष्टीकरणं ज्योतिषस्य त्रिस्कन्धानां स्पष्टविभाजनं पञ्चाङ्गस्य विकासश्चास्य कालस्य वैशिष्ट्यानि सन्ति। आर्यभट्टस्य आर्यभट्टीयमारभ्य कमलाकरदैवज्ञस्य सिद्धान्ततत्त्वविवेक-पर्यन्तमुत्तरार्धोऽस्य आर्यभट्ट-ब्रह्मगुप्त-वराहमिहिर-भास्कराचार्य-कमलाकर-भट्टास्तत्कालस्य ख्यातय-शस्काः ज्योतिषशास्त्रविशेषज्ञाः। तत आधुनिककालेऽपि चापीयत्रिकोणगणितकारो नीलाम्बरः, सरलत्रिकोणमितिप्रणेता बापूदेवः, गणकतरङ्गिणीप्रभृतिग्रथानां प्रणेता सुधाकरः, ज्योतिषशास्त्रेतिहासस्य प्रणेता शङ्करबालकृष्णदीक्षितश्च कालस्यास्य लब्धप्रतिष्ठिता ज्योतिर्विज्ञाः।

**ज्योतिषशास्त्रव्याख्याः**-

किन्नाम ज्योतिषमिति प्रश्ने तावदिदमुत्तरम्-ज्योतींषि प्रतिपाद्यन्ते। अस्य व्युत्पत्तिः-अर्श आदिभ्योऽच् (अष्ट.५/२/१२४) इति सूत्रेण निष्पन्नतया ज्योतिषशब्दो ज्योतिःप्रतिपादकं शास्त्रम्। यद्वा द्योतन्ते प्रकाशन्ते ग्रहनक्षत्रादीन्यनेनेत्युणादिसूत्रनिष्पन्नोऽयं शब्दः।

१) ज्योतिःपदार्थानां ज्ञानम्- इति ज्योतिषशास्त्रम्।

२) भटोत्पलमतेन- ज्योतींषि ग्रहनक्षत्रादीनि, तान्यधिकृत्य कृतं शास्त्रं ज्योतिःशास्त्रं ग्रहनक्षत्रयोगेन जगतः शुभाशुभसम्भवात्।[१]

---

[१] बृ.सं. भट्टोत्पलविवृतौ-१.८

ज्योति:शास्त्रम्- ज्योतिषां सूर्यादीनां गत्यादिज्ञापकं शास्त्रम् [२]। ज्योतिषमागमं शास्त्रम् [३]। सूर्यादिग्रहगत्यादिबोधके कालज्ञाने वेदाङ्गे शास्त्रभेदे [४]। अपरिमिते गगनमण्डले यानि हि तेजोमयानि बिम्बानि दृश्यन्ते, तानि सर्वाणि समष्ट्या ज्योति:शब्देनोच्यन्ते। अपरिमिते गगनमण्डले परिभ्रमणमाणानां प्रतिदिनं भिन्न-भिन्ननक्षत्रग्रहतारादिज्योति:पिण्डानां स्थितिगतिप्रभावादिवर्णनपरं शास्त्रं ज्योतिषशास्त्र-पदेनाभिधीयते।

**ज्योतिषस्य वेदाङ्गत्वम्-**

**ब्रह्मर्षिकश्यपवचनम्-**

सम्बन्धस्तस्य शास्त्रस्य वेदाङ्गमिति धातृत:।[५]

**तत्र भास्कराचार्य:-**

शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी
श्रोत्रमुक्तं निरुक्तं च कल्प: करौ।
यातुशिक्षाऽस्य वेदस्य सा नासिका
पादद्वयं छन्द आद्यैर्बुधै:।। [६]

**नारदोऽपि-**

वेदस्य निर्मलं चक्षुर्ज्योति:शास्त्रमनुत्तमम्।

---

[२] वाचस्पत्यम्, खं.४, पृ.३१६३

[३] वाचस्पत्यम्, खं.४, पृ.३१६३

[४] वाचस्पत्यम्, खं.४, पृ.३१६३

[५] कश्यपसंहिता अ.१श्लो.१८

[६] सिद्धान्तशिरोमणि:, गणिताध्याय:, श्लो.१०

अस्य शास्त्रस्य सम्बन्धो वेदाङ्गमिति कथ्यते।।[७]

**ज्योति:शास्त्रस्य प्रयोजनम्-**

**ब्रह्मर्षिकश्यपः-**

शुभाशुभस्य जगतामभिधेयं निरूपणम्।
ग्रहग्रहणसङ्क्रान्तिर्यज्ञाध्ययनकर्मणाम्।।
प्रयोजनं ततोद्वाहक्रियाणां कालनिर्णयः।
एतद्विना न सिद्ध्यन्ति श्रौतस्मार्ताखिलक्रियाः।।[८]

**आचार्यभास्करोऽपि-**

वेदास्तावद्यज्ञकर्मप्रवृत्ता
यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।
शास्त्रादस्मात् कालबोधो मतः स्याद्
वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्।।[९]

**वेदाङ्गज्योतिषेऽपि-**

वेदा हि यज्ञार्थमभिप्रवृत्तः
कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं
यो ज्योतिषं वेद स वेद यज्ञान्।।[१०]

---

[७] नारदसंहिता अ.१ श्लो.४-५

[८] कश्यपसंहिता अ.१श्लो.१९-२०

[९] सि.शि. गणिताध्याये, श्लो.९

[१०] वेदाङ्गज्योतिषम्-३६

योग्यायोग्यकालबोधो ज्योतिषशास्त्रेणैव भवति। समस्तशुभाशुभकर्मणां कालनिर्धारणं विना कृतं कर्म विनश्यति। अकाले कृतं कर्म विनश्यति। ज्योतिषं शुभाशुभकालबोधकं शास्त्रं विद्यते। ग्रहाणामुदयास्त–स्थित्यादिस्तस्य फलकथनं, सूर्य–चन्द्रग्रहणकालनिर्णयः, संक्रान्तिनिर्णयः, यज्ञारम्भकालनिर्णयः, विवाहमुहूर्तनिर्णयः, षोडशसंस्कारस्य कालनिर्णयः – इत्थं श्रौतस्मार्तादिसमस्तकर्माण्यनुकूलसमये फलदानि, अकाले निष्फलानि भवन्ति। अतः ज्योतिषशास्त्रस्यावश्यक्ता।

सिद्धान्त–संहिता–होरात्मकं त्रिविधं ज्योतिषशास्त्रं षड्वेदाङ्गनामेकतमम्।

**उक्तं च ब्रह्मर्षिकश्यपेन–**

स्कन्धत्रयात्मकं शास्त्रमाद्यं सिद्धान्तसंज्ञकम्।
द्वितीयं जातकस्कन्धं तृतीयं संहिताह्वयम्।।[11]

**नारदोऽप्याह–**

सिद्धान्तसंहिता होरा स्कन्धत्रयात्मकम्।[12]

संसारस्य शुभाशुभाविषयाणि केवलं नयनेन दृश्यन्ते, तथैव वेदविहितशुभाशुभकर्मणामुपादानमेवं त्यागः– अर्थात् कानि कर्माणि कदा कार्याणि एवं कदा न कार्याणि –इत्यादि नेत्रस्य कार्यं ज्योतिषशास्त्रेणैव भवेत्। यथा नेत्रवान् जनो मार्गे स्थितकण्टकादीनि दृष्ट्वा स्वरक्षां कर्तुं शक्तः, तेनैव ज्योतिषशास्त्रज्ञाता सम्पूर्णशुभाशुभकर्मसमयं ज्ञात्वा योग्यकालाचरणात् सुखभोक्ता भवेत्। ज्योतिषशास्त्रस्य ज्ञानेन पुण्यप्रदा उत्तमगतिः प्राप्यते।

**उक्तं ब्रह्मर्षिकश्यपेन–**

---

[11] कश्यपसंहिता अ.१श्लो.४

[12] नारदसंहिता अ.१ श्लो.४

ज्ञातव्यमध्येतव्यं तु पुण्यमायुर्यशस्करम्।
पुण्यकालपरिज्ञानादश्वमेधफलं लभेत्।।

पुण्यकालं च यो वेत्ति स तु वेत्ति पराङ्गतिम्।
कालज्ञानेऽतिकुशलं तं देवा ब्राह्मणं विदुः।।[१३]

**ज्योतिषशास्त्रस्य प्रशंसा–**

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद् वेदाङ्गशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम्।।[१४]

**अन्यच्च–**

अप्रत्यक्षाणि (विफलान्यन्य)शास्त्राणि विवादस्तेषु केवलम्।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र(यस्य) साक्षिणौ।।[१५]

**सूर्यसिद्धान्तवचनम्–**

दिव्यं चाक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम्।
विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम्।।[१६]

**गर्गवचनम्–**

ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम्।

---

[१३] कश्यपसंहिता अ.१श्लो.२१–२२

[१४] वेदाङ्गज्योतिषम्–श्लो.४

[१५] सिद्धान्ततत्त्वविवेकः, भाग–३, भूमिका– पृ.५; वशिष्ठसंहिता प्राक्कथन– पृ.१९; सुगमज्योतिषम्–१.६२ (संज्ञाध्याये पृ.३७)

[१६] सूर्यसिद्धान्तः –१४.२३

ज्योतिर्ज्ञानं च यो वेद स याति परमाङ्गतिम्।।[१७]

**आचार्यवर्यवराहमिहिरवचनम्-**

न सांवत्सरपाठी च नरके परिपच्यते।

ब्रह्मलोकप्रतिष्ठां च लभते दैवचिन्तकः।।[१८]

**ज्योतिषशास्त्रस्य प्राचीनत्वम्-**

भारतीयज्योतिषशास्त्रमतीव प्राचीना विद्या वर्तते। विश्वस्य सर्वाधिकप्राचीना ग्रन्था वेदाः- ऋग्वेदः-यजुर्वेदः-सामवेद;-अथर्ववेदः- इत्येते सन्ति। वेदचतुष्टये ज्योतिषविद्याविषयकेऽनेके मन्त्रा दृश्यन्ते। वेदस्य प्राचीनत्वे कापि शङ्का-मतभेदो न वर्तते। अनेके विद्वांसो वेदस्य तथा तदन्तर्गतज्ञान-विज्ञानस्य प्राचीनत्वं जानन्ति। सर्वं ज्ञानं विज्ञानं च वेदे प्रतिष्ठितम्। उक्तं च-

स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः।[१९]

भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति।।[२०]

वेदस्य प्रवर्तको ब्रह्मा वर्तते। वेदस्य कर्ता-लेखकः कोऽपि न विद्यते। अर्थात् चतुर्वेदा अपौरुषेयाः सन्ति। उक्तं च-

**न कश्चिद्वेदकर्ता स्याद्वेदस्मर्ता चतुर्मुखः।**[२१]

---

[१७] नारदसंहिता प्राक्कथन- पृ.१०

[१८] बृ.सं.२.२८ (पृ.१३)

[१९] म.स्मृ.२.६ (पृ.६०)

[२०] म.स्मृ.१२.९७ (पृ.४८२)

–पराशरस्मृतौ

वेदस्य षडङ्गानि वर्तन्ते। उक्तं च **षडङ्गो वेद उच्यते** [22]। एतद्विना वेदस्य कल्पनापि न कर्तुं शक्यते। अर्थाद् यथाङ्गहीनस्य पुरुषस्य कल्पना वयं कर्तुं न शक्नुमः। अतः षडङ्गानि वेदनारायणस्याभिन्नान्यङ्गानि वर्तन्ते। यथा वेदस्य प्राचीनत्वं तथैव ज्योतिषशास्त्रस्य प्राचीनत्वं वर्तते।

**ज्योतिषस्य वेदाङ्गत्वम्–**

**पाणिनिशिक्षा–**

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। [23]

**भटोत्पलः–**

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः।

छन्दसां लक्षणं चैव षडङ्गो वेद उच्यते।।

–बृहत्संहिताटीकायां [24]

**तत्र भास्कराचार्यः–**

वेदचक्षुः किलेदं स्मृतं ज्यौतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते।

संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाऽङ्गेन हीने न किञ्चित्करः।।

---

[21] पराशरस्मृतौ १.१७

[22] बृ.सं.भट्टोत्पलविवृतौ १.१

[23] पा.शि.४१–४२

[24] बृहत्संहिताटीकायां १.१पृ.२

–सिद्धान्तशिरोमणौ [25]

**१) नारदः–** वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम्। [26]

**२) भास्कराचार्यः–**

वेदाङ्गमग्र्यमखिलं ज्योतिषां गतिकारणम्। [27]

**३) ब्रह्मर्षिकश्यपवचनम्–**

सम्बन्धस्तस्य शास्त्रस्य वेदाङ्गमिति धातृतः।। [28]

**वेदपुरुषः–**

**ज्योतिषशास्त्रस्य सम्बन्धाभिधेयप्रयोजनकथनम्**–यथा परम्पराप्राप्तश्लोकेषु सर्वेषु कार्येषु प्रयोजनकथनस्य महत्त्वं प्रतिपाद्यते। यथा–

---

[25] सि.शि. १.१०(ग्रहगणिताध्याये)

[26] ना.सं.–१.४

[27] सू.सि.–१.३

[28] कश्यपसंहिता–१.१८

सिद्धिः श्रोतृप्रभृतीनां सम्बन्धकथनाद्यतः।
तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते।।
किमेवात्राभिधेयं स्यादिति पृष्टस्तु केनचित्।
यदि न प्रोच्यते तस्मै फलशून्यं तु तद्भवेत्।।
सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।
यावत्प्रयोजनं नोक्तं तावत्केन गृह्यते।।[२९]

१) **सम्बन्धः**-

वाच्य-वाचकलक्षणं हि सम्बन्ध उच्यते। वाच्यं नाम अर्थः, एवं वाचकः शब्दो वा उपायः। एवमुपेयलक्षणः सम्बन्धः कथ्यते। उपायं हि प्रस्तुतं शास्त्रं तथा उपेयं हि ज्ञानं वर्तते।

२) **अभिधेयम्**-

येन शास्त्रेण यद्ग्रह-नक्षत्रोत्पन्नं शुभाशुभं तथा दिव्यान्तरिक्षभौमादि - उत्पातस्य फलज्ञानं भवति, तदेव हि अभिधेयमुच्यते।

**उक्तं च कश्यपसंहितायां**-

शुभाशुभस्य जगतामभिधेयं निरूपणम्।[३०]

३) **प्रयोजनम्**-

चरा-चरसंसारस्य शुभाशुभफलकथनं हि प्रयोजनं कथ्यते। एवं सम्यग्ज्ञानात् (अन्तिमं लक्ष्यं) मोक्षप्राप्तिः प्रयोजनं उच्यते। यावत् सर्वशास्त्रस्यैवं कार्यस्य प्रयोजनं नोच्यते, तावत् तच्छ्रास्त्रस्य केन ग्रहणं भवति?

---

[२९] बृहत्संहिताटीकायां भट्टोत्पलः १.१ (पृ.२)

[३०] कश्यपसं.अ.१, श्लो.क्र.-१९

**उक्तं च कश्यपसंहितायां–**

ग्रहग्रहणसङ्क्रान्तिर्यज्ञाध्ययनकर्मणाम्।।

प्रयोजनं ततोद्वाहक्रियाणां कालनिर्णय:।[31]

**अत्र नारदोऽपि–** वेदस्य निर्मलं चक्षुर्ज्योति:शास्त्रमकल्मषम्।[32]
विनैतदखिलं कर्म श्रौतं स्मार्तं न सिद्ध्यति।।[33]

**आचार्यभास्करोऽपि–**

वेदास्तावद्यज्ञकर्मप्रवृत्ता

तज्ज्ञा: प्रोक्तास्ते तु कालाश्रयेण।

शास्त्रादस्माद् कालबोधो मत:

स्याद् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्।।

–सिद्धान्तशिरोमणौ[34]

सम्बन्ध–अभिधेय–प्रयोजनं कथनमत्यावश्यकम्। तेन कारणादत्राद्ये सम्बन्धकथनम्।

**उक्तं च कश्यपसंहितायां–**

सम्बन्धस्तस्य शास्त्रस्य वेदाङ्गमिति धातृत:।[35]

अर्थादस्य शास्त्रस्य सम्बन्धो वेदाङ्गत्वेन वर्तते।

कानि वेदाङ्गानि?

---

[31] कश्यपसं.अ.१,श्लोक: क्र.–१९,२०,२१,२२

[32] नारदसंहिता अ.१, श्लो.४

[33] नारदसंहिता अ.१, श्लो.७

[34] सिद्धान्तशिरोमणौ, ग्रहगणिताध्याये–९, ११

[35] क.सं.१.१८

**वेदस्य षडङ्गानि -**

१) शिक्षा–नासिका २)कल्पः–करौ ३)व्याकरणम्–शब्दशास्त्रं मुखरूपम् ४)निरुक्तम्–श्रोत्रम् ५)ज्योतिषम्–नयनम् ६)छन्दः–पादद्वयम्।

**अथ ज्योतिषशास्त्रस्य प्रयोजनं व्यवहारिकोपयोगः-**

**१) कालगणना**– समयमापनं, दिनमानं, रात्रिमानं, अहोरात्रमानं, सप्ताहमानं, पक्षमानं, मासमानं, वर्षमानं, नक्षत्रमानं, सावनदिनमानं, सौरदिनमानं, इत्यादिकम्। कालगणनारहितमितिहासस्य लेखनज्ञानं कदापि न शक्यम्।

**२) कृषिः**– अन्नात् भवन्ति भूतानि– इति श्रीमद्भगवद्गीतावाक्यानुसारेण[३६]– अन्नं हि भूतस्य आत्मा(पोषकं) अस्ति। अतः सर्वजनानां जीवनमन्नं वर्तते। अन्नस्योत्पादनं ऋतु(वर्षा–काल)वशात् भवेत्। तत्कारणात् कालस्य परिगणनाज्ञानमावश्यकम्। अकाले सेविता कृषिर्नाशमाप्नोति। अर्थात् कालज्ञानरहिता कृषिर्न फलदा।

**३) जलयानम्**– समुद्रे दिग्ज्ञानार्थमपि ज्योतिषशास्त्रस्य ज्ञानमत्यावश्यकम्। समुद्रे जलस्तरस्य क्षीणत्व–वर्धत्वस्य ज्ञानं तिथेर्ज्ञानाद् भवति। तस्यास्तिथेर्ज्ञानं ज्योतिषशास्त्रज्ञानादेव जायते। अर्थादत्रापि ज्योतिषज्ञानमतीवावश्यकम्।

**४) खगोल–तारादिज्ञानम्**– एतज्ज्ञानमपि ज्योतिषशास्त्रविषयकमस्ति। तारा–ग्रहादीनां समस्तखगोलिकपदार्थानामुदयास्तादिकं सर्वं ज्ञानं ग्रह–गति–अवलम्बितं वर्तते। तस्य ज्ञानार्थं ज्योतिषशास्त्रस्य ज्ञानमत्यावश्यकम्।

**५) भौगोलिकस्थान(देश–प्रदेश)ज्ञानम्**– एतज्ज्ञानं देशान्तरादि– अक्षांश–रेखांश–रेखान्तरादिकं(खगोलिकमेवं भौगोलिकं) ज्योतिषशास्त्र–गणिताधारेण ज्ञातुं

---

[३६] श्रीमद्भगवद्गीता–३.१४

शक्यते। तत्सर्वमपि ज्योतिषशास्त्र–गणितोपरर्यवलम्बितं वर्तते। अतो भौगोलिक–स्थान(देश–प्रदेश)ज्ञानार्थं ज्योतिषशास्त्रस्य ज्ञानमत्यावश्यकम्।

**६) सूर्योदय-सूर्यास्तज्ञानम्**- एतज्ज्ञानं ज्योतिषशास्त्र–गणिताधारेण ज्ञातुं शक्नोति। तत्सर्वमपि ज्योतिषशास्त्र–गणितोपरर्यवलम्बितं वर्तते। अतो ज्योतिषशास्त्रस्य ज्ञानमत्यावश्यकम्।

**७) सूर्यग्रहण-चन्द्रग्रहणस्य ज्ञानम्**- सम्मीलनादारभ्य ग्रहणमोक्षकालपर्यन्तं दशावस्थाज्ञानार्थं ज्योतिषशास्त्रस्य ज्ञानमत्यावश्यकम्।

यथा वैदिककाले प्राचीने यज्ञादिक्रियाणां सुसंपादनार्थं योग्यसमयज्ञाननिर्धारणार्थमिदं शास्त्रं प्रवृत्तम्, तथाधुनिकालेऽपि योग्यकार्यस्य कृते सुयोग्यसमयज्ञानार्थमस्य समुपयोगो भवति। क्रिया हि योग्यसमये विहिता सिद्धिप्रदा सुफला च भवति– इति वैज्ञानिकः सिद्धान्तः। आगामिनः शुभाशुभसमयस्य ज्ञानेन कार्यानुकूल्यं प्रातिकूल्यं च ज्ञायते। तदुपायस्य पूर्वमेवायोजनं कर्तुं शक्यते– इति सांप्रदायिकः सिद्धान्तः। इति ज्योतिषस्याधुनिककालेऽपि महत्त्वं वर्तते।

**स्कन्धत्रयात्मकं ज्योतिःशास्त्रम्ः-**

**तथा च भगवान्गर्गः-**

गणितं जातकं शाखां यो वेत्ति द्विजपुङ्गवः।
त्रिस्कन्धज्ञो विनिर्दिष्टः संहितापारगश्च सः।।[३७]

गणितं जातकं तथा (ज्योतिषस्य अन्यां) शाखां संहितां यो द्विजश्रेष्ठो जानाति, स एव ज्योतिषशास्त्रपारगो विद्वान् भवति।

---

[३७] बृ.सं.भट्टोत्पलविवृत्तौ–अ.१,श्लो.९ (पृ.–१९)

**ज्योतिषशास्त्रं त्रि-स्कन्धात्मकम्-**

ज्योतिषशास्त्रं त्रि-स्कन्धात्मकं भवति। तत्र प्रथमं सिद्धान्तः(गणित-तन्त्रं) द्वितीयं होरा(जातकं) एवं तृतीयं संहितास्कन्धो वर्तते।

**१) गणितं(सिद्धान्त-तन्त्रं), २) होरा(जातकं), ३) संहिता**

गणित-संहिता-होराभिधानैस्त्रिभिः स्कन्धै रचितस्य महतो ज्योतिश्शास्त्रस्यैकः स्कन्धो भवति संहिता। गणित-संहिता-होरेति शाखाभिर्विस्तृतस्य ज्योतिःशास्त्रस्य स्वरूपवर्णनमनेकैराचार्यैर्विस्तरतः कृतमस्ति। तत्रैकैकस्कन्धस्य स्वरूपावबोधकं लक्षणं संक्षेपेण निर्दिश्यते।

**१) सिद्धान्तः(गणित-तन्त्रं):-**

प्रथमं गणितस्कन्धलक्षणम्-

यस्मिन् ज्योतिषशास्त्रे सूर्यादिग्रहाणां गतिः-मेषादिराशौ सञ्चरादिगणितं वर्तते स एव सिद्धान्तस्कन्धो भवति।

**भास्कराचार्यकृते सिद्धान्तशिरोमणौ-**

त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदाः क्रमा-
च्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः।।[३८]

---

[३८] मध्यमाधिकारे श्लोकः क्र.-६

ब्रह्मर्षिकश्यपमतेन ज्योतिषशास्त्रस्य ग्रन्थे निम्मलिखितो विषयस्तत्र वर्तते सः सिद्धान्तः(गणित-तन्त्रं) कथ्यते।

**तद्यथा-**

ग्रहाणां मध्यमा भुक्तिः स्फुटभुक्तिरनन्तरम्।
दिक्साधनं ततश्छाया लग्नकालविनिर्णयः।।५।।
चन्द्रार्कग्रहणं सम्यक् तयोश्च परिलेखनम्।
समागमो युद्धभेदो ग्रहाणां युतयस्ततः।।६।।
उदयास्तमयज्ञानं चन्द्रशृङ्गनतोन्नतिम्।
पातवैधृतयोर्भेदौ भूगोलं यन्त्रलक्षणम्।।७।।
मानक्रिया मानभेदाश्चाद्यस्कन्धे प्रकीर्तिताः।[३९]

**२) होरा(जातकं):-**

स्कन्धत्रयेषु सर्वापेक्षया विस्तृतो जातकस्कन्धः। तत्संक्षिप्तं प्रयोजनं सारावलीग्रन्थारम्भे **श्रीकल्याणवर्मणोक्तम्-**

विधात्रा लिखिता यासौ ललाटेऽक्षरमालिका।
दैवज्ञस्तां पठेद्व्यक्तं होरानिर्मलचक्षुषा।।१।।[४०]

ब्रह्मर्षिकश्यपमतेन ज्योतिषशास्त्रस्य ग्रन्थे निम्नलिखितो विषयस्तत्र वर्तते सा होरा(जातकं) कथ्यते।

**तद्यथा-**

---

[३९] क.सं.अ.१, श्लो.५-८

[४०] सारावल्यां-२.१

राशिभेदः खेटयोनिर्वियोनिर्जन्मलक्षणम्।।८।।

निषेको जननं पुंसामरिष्टं भङ्गलक्षणम्।

आयुर्दायो दशा भेदा भेदाश्चान्तर्दशासु च।।९।।

अष्टवर्गः कर्मजीवो राजयोगाश्च संज्ञकाः।

चान्द्रयोगा द्विग्रहाद्याः प्रवज्यायोगसंभवाः।।१०।।

राशिशीलं दृष्टिफलं ग्रहभावफलं ततः।

आश्रयाख्याश्च ये योगा योगाः सङ्कीर्णसम्भवाः।।११।।

स्त्रीजातकं नेष्टयोगं निर्वाणं नष्टजातकम्।

द्रेष्काणश्च क्रियायोगा द्वितीयस्कन्धसम्भवाः।।१२।।[४१]

**१) संहिताः-**

बृहत्संहितार्वाचीनो ग्रन्थः। अस्यां संहितायां विविधसंहिताकाराणामुद्धरणानि वर्तन्ते। विविधसंहितानां सङ्कलनं विधाय विविधावैज्ञानिकानामशक्यप्रायाणां गणित-तर्क-प्रत्यक्षता-शास्त्रप्रमाणादीननुसृत्य पूर्वाचार्याणां मतखण्डन-मण्डनपूर्वकं स्वमतस्य विद्वत्तापूर्वकं स्थापना दरिदृश्यते। बृहत्संहिताया भट्टोत्पलकृता विवृतिरतिप्रसिद्धा वर्तते। अस्यां संहितायां बहवो विषयाः सङ्गृहीतास्यापि पूर्णतया पञ्चाङ्गवर्णनं, षोडशसंस्कारमुहूर्तविवेचनं च न प्राप्यत इति विचारणीयम्।

नारदसंहिता कश्यपसंहिता चार्षसंहिते। प्राचीने संहिते स्तः। नारद-कश्यपसंहितयोरनेकविषय-विवेचनादिकं समानं दृश्यते। उभे संहिते संस्कारमुहूर्तविवेचनं, पञ्चाङ्गविवेचनं, श्राद्धविवेचनमिति बहुविधा विषया वर्णेते। वसिष्ठसंहितायां संहिताविषयानां विस्तारपूर्वकं वर्णनं प्राप्यते। समस्तसंस्काराः, पूर्णतया

---

[४१] क.सं.अ.१, श्लो.८-१२

पञ्चाङ्गं, शकुनादिसमस्तविषययाणां विवेचनं प्राप्यते। तथाप्युत्पातशान्तिवर्णनं पूर्णतया न वर्णितम्।

गर्गसंहिता अद्य समये न लभ्यते, तथापि तस्या उद्धरणानि मुहूर्तचिन्तामणौ पीयूषधाराटीकायां वर्तन्ते। वराहमिहिरोऽपि स्वसंहितायां तस्या उल्लेखं कृतवान्। भट्टोत्पलस्य बृहत्संहिताटीकायां विविधोद्धरणानि प्राप्यन्ते। अद्भुतसागरेऽपि गर्गवचनानि दृश्यन्ते। गर्गसंहिताप्यार्षसंहिता।

भृगुसंहिताद्यसमये प्राप्यते, किन्तु न तु प्राचीना भृगुसंहिता। केषांचन विदुषां मतेन भृगुसंहितायां समस्तजनानां कुण्डली–फलादेशो लिखितः। अद्यसमये प्राप्तभृगुसंहितायां द्वादशलग्ने सूर्यादिग्रहाणां फलं प्राप्यते न तु समस्तजनानां कुण्डली–फलादेशः। न तु संहिताविषयकं ग्रहचारादिवर्णनं प्राप्यते। संहितायां केवलं जातकं शास्त्रं प्राप्यते। ममानुमानतः कालप्रकोपादियं संहिता भ्रष्टा–नष्टा जाता। तेन संहिताविषयकविषयाणि नोपलभ्यन्ते, केवलं जातकविषयकं वर्णनं प्राप्यते। कश्यप–नारद–पराशरेणास्योल्लेखः ज्योतिषशास्त्रप्रवर्तकत्वेन कृतः। रावणसंहितापि सत्यरूपा न लभ्यते। हिन्दीभाषायां प्राप्यते। कालप्रभावादियं संहितापि नष्टा जाता।

भद्रबाहुसंहिता जैनधर्मप्रभावसम्पन्नग्रन्थो दरिदृश्यते। न तु प्राचीनग्रन्थः। जैनमूर्ति–शकुन–केचनोत्पात–ग्रहचारादिकं वर्णितम्। पञ्चाङ्ग–षोडशसंस्कारादिवर्णनं न दृश्यते। शौनक–लोमश–पौलिश–यवनसंहिता अपि अतीव प्राचीनाः सन्ति। ता आर्षसंहिताः सन्ति। कश्यपादिभिरेतेषामुल्लेखोऽष्टादशप्रवर्तकेषु कृतः।

**संहिताव्याख्या–**

१) सम्यग् हितं प्रतिपाद्यं यस्याः।[४२]

२) सुव्यवस्थितरचनाकृतो ग्रन्थः।[४३]

**संहितास्कन्धस्य लक्षणं बृहत्संहितायाम्-**

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्।

तत्कात्स्न्योंपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता।।[४४]

**संहिताशास्त्रं कश्यपसंहिता च-**

त्रिस्कन्धात्मकज्योतिषशास्त्रे संहितास्कन्धस्यातीव महत्त्वम्। समस्तभूतानां हितकारकं ज्ञानं यत्र स्थितं सा संहिताशब्देन ज्ञायते। अत्र ज्योतिषविषयेऽपि समस्तप्राणिनां हितकाम्यया विविधविषयस्य सम्यक् संगृहीतं ज्ञानं हि संहिता विद्वज्जना मन्यन्ते।

अयं संहितास्कन्धो भौतिकफलितज्योतिषपदेनाप्यभिधीयते। वस्तुतः सर्वेषामेव स्कन्धानां संक्षेपेण विवेचनाद्धि संहितायाः संहितात्वम्। संहितापारगो दैवचिन्तको भवतीति। संहितायां सांवत्सरसूत्रं, ग्रहचारः, ग्रहयुति, वर्षफलं, शृङ्गाटकं, मेघगर्भः, उल्कादिलक्षणं, उत्पाताः, वास्तु, उत्पातशान्तिः, शकुनविचारः, पञ्चाङ्गादिफलं, मुहूर्तविचारः, ग्रहगोचराश्चैवमाद्या विवेचनीया विषया इति महत्प्रयोजनमस्य स्कन्धस्य इति।

**नारदसंहितायामष्टादशज्योतिषप्रवर्तकानां निर्देशो दृश्यते।**

---

[४२] वाचस्पत्यम् पृ.५१९०

[४३] धी स्टुडेन्टस् न्यू संकृत डिक्श्नरी पृ.८६८

[४४] बृहत्संहिता-अ.१.श्लो.९

**तद्यथा-**

ब्रह्माचार्यो वसिष्ठोऽत्रिर्मनुः पौलत्स्यलोमशौ।

मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः।।२।।

च्यवनो यवनो गर्गः कश्यपश्च पराशरः।

अष्टादशैते गम्भीराः ज्योतिःशास्त्रप्रवर्तकाः।।३।।[45]

**पराशरमतोक्ताष्टादशज्योतिषशास्त्रप्रवर्तकाः-**

विश्वशङ् नारदो व्यासो वसिष्ठोऽत्रिः पराशरः।

लोमशो यवनः सूर्यश्च्यवनः कश्यपो भृगुः।।

पुलस्त्यो मनुराचार्यः पौलिशः शौनकोऽङ्गिराः।

गर्गो मरीचिरित्येते ज्ञेया ज्योतिःप्रवर्तकाः।।[46]

**ब्रह्मर्षिकश्यपोक्ताष्टादशज्योतिषशास्त्रप्रवर्तकाः-**

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।

कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः।।२।।

रोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।

शौनकोऽष्टादशैवैते ज्योतिःशास्त्रप्रवर्तकाः।।३।।[47]

---

[45] नारदसंहिता,अ.१, श्लो.२-३

[46] भारतीय-ज्योतिषशास्त्रस्येतिहासः पृ.९

[47] क.सं.-अ.१.श्लो.२-३

**ज्योतिर्विद्व्याख्या:-**

ज्योतिषशास्त्रं कालबोधकं शास्त्रं वर्तते।

(पु.) ज्योतिषां सूर्यादीनां गत्यादिकं वेत्ति। ज्योति:शास्त्राभिज्ञे।[४८]

**प्रसङ्गात् कालस्वरूपलक्षणम्-**

विभुद्रव्यस्य कालस्य प्राथम्येन परिगणनं तर्कसङ्ग्रहादिषु दृश्यते।[४९]

कलभक्षणे विकलेन वा इत्येस्माद्धातो: घञि सति काल इति रूपस्य सिद्धि:।[५०]

**अत एव सूर्यसिद्धान्तवचनम्-**

लोकानामन्तकृत्काल: कालोऽन्य: कलनात्मक:।

स द्विधा स्थूल-सूक्ष्मात्वान्मूर्तश्चामूर्त उच्यते।।

प्राणादि: कथितो मूर्तस्त्रुट्याद्योऽमूर्तसंज्ञक:।[५१]

**बृसंहिताटीकायां भट्टोत्पलोऽपि-**

काल: सृजति भूतानि काल: संहरति प्रजा:।

काल: सुप्तेषु जागर्ति कालो हि दुरतिक्रम:।।[५२]

उक्तश्लोके स्पष्टरूपेण प्रतिपादितं यत् यत्किञ्च जगत्याञ्जगत् तत्सर्वं कालाधीनम्।

---

[४८] वाचस्पत्यम् पृ.३१६३

[४९] सारसवती सुषमा (त्रैमासिकी) पत्रिकायां- पृ.१६१

[५०] सारसवती सुषमा (त्रैमासिकी) पत्रिकायां- पृ.१६१

[५१] सू.सि.मध्यमाधिकाराध्याये श्लो.-१०-११

[५२] बृहत्संहिताटीकायां १.७ (पृ.-७)

**वाक्यदीपकेऽपि-**

उत्पत्तौ स्थितौ चापि विनाशे चापि तद्वताम्।

निमित्तकालमेवाहुर्विभक्ते नात्मना स्थितम्।।[५३]

**अत एव वाक्यपदीये-**

अव्याहतकला यस्य कालशक्तिमुपाश्रिता।

जन्मादयो विकाराः षड् भावभेदस्य योनयः।।[५४]

**श्रीनिम्बार्कसम्प्रदायमते-**

प्राकृताप्राकृताभ्यां भिन्नोऽचेतनद्रव्यविशेषः कालः।[५५]

**वल्लभसम्प्रदायानुसारेण-**

ब्रह्मव्यतिरिक्तः कश्चन पदार्थो नास्ति। अतो ब्रह्मैव कालः। **कालोऽस्मि लोकक्षयकृत् प्रवृद्धः** [५६] इति गीताप्रमाणाद् ब्रह्मैव कालः। उपाधिभेदेन तस्य व्यवहारसम्पादकत्वात्।

**गौडीयवैष्णवसिद्धान्तानुसारेण-**

सत्त्वादिगुणत्रयहीनं भूतवर्तमानादिव्यवहारकारणं जडद्रव्यं कालः।[५७]

---

[५३] सारसवतीसुषमा (त्रैमासिकी) पत्रिकायां- पृ.१६७

[५४] सारसवतीसुषमा (त्रैमासिकी) पत्रिकायां- पृ.१६७

[५५] सारसवतीसुषमा (त्रैमासिकी) पत्रिकायां- पृ.१६१

[५६] श्रीमद्भगवद्गीता-११.३२

[५७] सारसवतीसुषमा (त्रैमासिकी) पत्रिकायां- पृ.१६७

**पञ्चरात्रमतानुसारेण–**

कालस्य नियतेनापि सूक्ष्मः सर्वनियामकः।
उदेति प्रथमं शक्तेर्विष्णुसङ्कल्पसन्धितः।।
कालस्य पाचनं रूपं यत्तत्तु फलनात्मकम्।
उदेति नियतेः सोऽथ कालसङ्कल्पचोदितः।।५८

**विष्णुपुराणानुसारेण–**

अनादिर्भगवान् कालो नान्तोऽस्य द्विज उच्यते।
अव्युच्छिन्नास्ततस्त्वेते सर्वस्थित्यन्तसंयमाः।।५९

**श्रीभागवतानुसारेण–**

विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना।।६०
एवं कालोऽप्यनुमितः सौक्ष्मे स्थौल्ये च सत्तमः।
संस्थानभुक्त भगवान् अव्यक्तो व्यक्तभूद्विभुः।।६१
स्वकालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्।
स्वतो विशेषभुग्यस्तु स कालः परमो महान्।।६२

---

५८ सारसवतीसुषमा (त्रैमासिकी) पत्रिकायां– पृ.१६१

५९ वि.पु.१.२.२६

६० श्रीमद्भागवते–३.१०.२२

६१ श्रीमद्भागवते–३.११.३

६२ श्रीमद्भागवते–३.११.४

## प्रथमो विभागः

## द्वितीयं प्रकरणम्

## कश्यपस्तस्य संस्कृतसाहित्ये प्रदानञ्च

---

(ज्योतिषसंहिताकारेषु कश्यपस्य विवेचनम्, कश्यप–काश्यपशब्दस्य स्पष्टीकरणम्, इतिहासः, कश्यपकाश्यपविषये वेदे साहित्ये धर्मशास्त्रे च सन्दर्भाः, तेषां विश्लेषणं, समयः, स्थानम्, ज्योतिषग्रन्थेषु सन्दर्भाः श्लोकाश्च, बाह्य साक्ष्यम्, आन्तरिकं साक्ष्यं समयस्य स्थानस्य च निर्धारणम्, उपसंहारः)

प्रस्तुतस्य संशोधनमहाप्रबन्धस्य मुख्यो विषयः कश्यपसंहिता वर्तते। कश्यपस्य संहिता कश्यपसंहिता। अत एव कश्यप विषये प्राचीनसाहित्य उपलब्धं विवेचनमत्र प्रस्तूयते। कश्यपः काश्यपो वा क आसीत्। तस्य जीवनविषये कार्यविषये विविधग्रन्थप्रणयनविषये या विविधा साम्रग्री प्राप्यते तस्य विवेचनमत्र क्रियते। सिद्धेश्वर शास्त्री चित्रावमहाभागेन स्वकीये भारतवर्षीयप्राचीनचरित्रकोषग्रन्थे ६३ काश्यपविषये निम्नलिखितं विवरणं कृतम्। तद्यथा–

कश्यपः अग्नेः शिष्य आसीत्। तस्य शिष्यो विभाण्डकः (वं.ब्रा.२)।

त्र्यायुषम्–मन्त्र ६४ आयुष्यवृद्धेः प्रार्थना क्रियते, तदा काश्यपस्य निर्वेशो भवति। गोत्रकारः काश्यपः–गोत्रकार–ऋषिरूपेण तस्योल्लेखो वर्तते। अस्य कुलस्य मन्त्रकारा

---

१.पृ.१०९–मराठी संस्करणे

२. जै.उ.ब्रा.४.३.१

हारित–शिल्प–नैध्रुवादयो वर्तन्ते। अस्य कश्यपस्य वशिष्ठ–ऋषिणा साकं घनिष्ठः सम्बन्धो वर्तते (बृ.३.२.२.४)।

इमावेव गौतमभरद्वाजा वयमेव गौतमोऽयं भारद्वाजऽइमामेव विश्वामित्रज–मदग्नीऽअयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वशिष्ठकश्यपा वयमेव वशिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्युन्नमद्यतेतिर्हवैनामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वस्यान्नम्भवति यऽएवं वेद।

कश्यपः ऋर्षिर्विष्णोर्नाभिकमलात्समुद्भूतस्य ब्रह्मणो नप्ता यज्ञे सोमरसपाना–त्कश्यपेत्यभिधानं प्राप्तवान्। **तदुक्तं मार्कण्डेयपुराणे**[६५]–

ब्रह्मणस्तनयो योऽभून्मरीचिरिति विश्रुतः।
कश्यपस्तस्य पुत्रोऽभूत्कश्यपानात्स कश्यपः।। इति।

कश्यं सोमादिरसं पिबतीति कश्यप इति तद्व्युत्पत्तिः।[६६]

**वायुपुराणेऽपि–काश्यपस्य विषये उक्तं यथा**[६७]–

कश्यपः सवितुर्विद्वांस्तेन स ब्रह्मणः समः।
मन्वन्तरेषु सर्वेषु ब्राह्मणांशेन जायते।।
कन्यानिमित्तमित्युक्ते दक्षेण कुपिताः प्रजाः।
अपि वत्स तदा कश्यं कश्यं मद्यमिहोच्यते।।
हाश्वेकसा हि विज्ञेया वाङ्मनः कश्य उच्यते।
कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः।।

---

६५ मा.पु.१०१.३

६६ काश्यपशिल्पं निवेदनम् पृ.क्र.–२

६७ अ.६५,श्लो.११४–११८

करोति नाम यद्वाचो वाचं क्रूरमुदाहृतम्।

दक्षाभिशप्तः कुपितः कश्यपस्तेन सोऽभवत्।।

तस्माच्च कश्यपेनोक्तो ब्रह्मणा परमेष्ठिना।

सर्वाश्च ब्रह्मवादिन्यः सर्वास्ता लोकमातरः।।

शरीरमिन्द्रियाणामधिष्ठानम्। तस्योपभोक्ता जीव एव कश्यपः(कश्यं पिबति इति कश्यपः)। एवमप्यर्थः प्राप्यते।[६८]

स ब्रह्मणो मानसपुत्रो वर्तते। मरीचि–ऋषेः पत्नी तथा कर्दम–ऋषेः कन्या कलानाम्नी आसीत्। तस्याः कश्यपस्तथा पूर्णिमा चैतौ द्वौ सन्तानावभवेताम्। तयोः काश्यपो ज्येष्ठो वर्तते[६९]–

पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा।

कश्यपं पूर्णिमानं च ययोरापूरितं जगत्।।

तार्क्ष्य एवमरिष्टनेमिरेतौ नामान्तरौ वर्तेते। कश्यपः सप्तर्षीणामेकतम ऋषिः।

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।

वृषादर्भेश्च संवादः सप्तर्षीणां च भारत।।

कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः।

विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती।।

(–म.अ.९३.२१–२२)

---

[६८] म.अनु.१४२

[६९] भा.४.१.१३

एवमेव कश्यप: प्रजापतीनामपि एकतम: विद्यते।[७०] क्वचित् सप्तर्षीणां सूचिषु कश्यपस्य स्थाने भृगोर्मरीचेर्वा नामोल्लेख: प्राप्यते। स्वायम्भुवस्य तथा वैवस्वतस्य मन्वन्तरस्य ब्रह्मपुत्रो मरीचि: प्रायेण एक एव वर्तते। अतो द्वयोरपि मन्वन्तरयो: कश्यपोऽप्येक एव वर्तते। अस्य पूर्णिमानामको भ्राता आसीत्। तथैवान्ये षड् सापत्नबान्धव आसन्। अस्य सापत्नमातुर्नाम ऊर्णा विद्यते। अग्निष्वात्ता: पितृगणा अस्य भ्रातर आसन्। स्वरूपा नाम्नी एका भगिन्यासीत्। तस्या विवाहो वैवस्वतमन्वन्तरस्याङ्गिरानामकेन ब्रह्मणो मानसपुत्रेण साकं समभवत्।

सुरूपा चैव मारीची कार्दमी च तथा स्वराट्।

पथ्या च मानवी कन्या तिस्रो भार्यास्वथर्वण:।।

इत्येताङ्गिरस: पत्न्यस्तासु वक्ष्यामि सन्ततिम्।[७१]

परशुरामेणैकविंशतिवारं समग्रा पृथ्वी नि:क्षत्रिया कृता। पापक्षयार्थे तेन सरस्वतीतीरेऽश्वमेधयज्ञ: कृत:। अस्मिन्नवसरे कश्यप: परशुरामस्याध्वर्युरूपेणासीत्। अश्वमेधयज्ञस्य दक्षिणारूपेण कश्यपेन समग्रा पृथ्वी सम्प्राप्ता। कश्यपेन परशुराम: स्वकीयसीम्नो बहिर्निवासार्थमाज्ञप्त:। यतो हि तेनावशिष्टानां क्षत्रियाणां विनाशो न भवेत् संरक्षणं च स्यात्। एतत्कथनानुसारेण परशुराम: समुद्रद्वारा निर्मितं सूर्पारकं देशं गत्वा निवासं चकार। महाभारतेऽयं प्रदेश: कोङ्कण नाम्ना ज्ञायते।[७२]

अरक्षंश्च सुतान् कांश्चित्तदा क्षत्रिययोषित:।

त्रि:सप्तकृत्व: पृथिवीं कृत्वा नि:क्षत्रियां प्रभु:।

---

[७०] म.अनु.१४१

[७१] वा.पु.६५.९८

[७२] म.शा.४९.५ – ४९.५९

दक्षिणामश्वमेधान्ते  कश्यपायाददत्तत:।।६४।।

स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यप:।

स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत्।।

गच्छ तीरं समुद्रस्य दक्षिणस्य महामुने।

न ते मद्विषये राम वस्तव्यमिह कर्हिचित्।।

तत: शूर्पाकरं देशं सागरस्य निर्ममे।

सहसा जामदग्न्यस्य  सोऽपरान्तमहीतलम्।।

कश्यपस्तां महाराज प्रतिगृह्य वसुन्धराम्।।७३

अनन्तरं कश्यप: समग्रां पृथ्वीं ब्राह्मणेभ्य: समर्प्य स्वयं वनवासं स्वीकृतवान्। काश्यप एक ऋषिरस्ति। तस्यादितिर्दितिश्च द्वौ पत्न्यौ भवत:। अत: स दैत्यानां देवानां च पिता वर्तते। कश्यपो ब्रह्मपुत्रमरीचे: पुत्रोऽस्ति। सृष्टिकर्मणि तस्य महत्त्वपूर्णं योगदानं वर्तते। महाभारत-पुराणादिषु प्राप्तवर्णनानुसारेण काश्यपेनादितेस्तथा दक्षस्यान्यासां द्वादशपुत्रीणां पाणिग्रहणं कृतम्। अदितेर्द्वादशादित्या अभवन्। अन्यासु दक्षपुत्रीषु विविधा: प्रजास्तत: प्रादुर्भूता:। सर्पा:-सरीसृपा:-पक्षिण:-असुरा:-गन्धर्वा:-अप्सरस: इत्यादय:। यतो हि तस्मात् काश्यपाद् विविधा: प्रजा: प्रजायन्त, अत एव स: प्रजापतिरूपेणापि ज्ञायते।७४

**कश्यपस्य स्थानविषये** -

क: प्रजापतिरुद्दिष्ट: कश्यपश्च प्रजापति:।

तैनासौ निर्मितो देश: कश्मीराख्यो भविष्यति।।२९।।

---

७३ म.शां. अ.४९, श्लो.६४-६५, पृ.८३

७४ धी प्रेक्टिकल संस्कृत-इंग्लिश  डिक्शनरी पृ.क्र.३४५

अर्थात्- कश्यपप्रजापतिद्वारा निर्मितो देशः कश्मीरः कथ्यते।[७५]

कश्मीरविषये पौराणिककोशग्रन्थे[७६] वर्णितं यत्- प्राचीनकाले हिमालयेन परित एकः पर्वतीयप्रदेशः संस्कृतविद्यापीठमासीत्। एवं कथ्यते यत्- सम्पूर्णोऽयं प्रदेशो जलमग्न आसीत्। कश्यपऋषिणा सर्वं जलं झेलमनद्यां प्रक्षिप्तम्। तदनन्तरमयमवर्णनीयः प्रदेशो बहिर्दृष्टिपथमायातः। अत्रत्या निवासिनः कश्मीरीनाम्ना सम्बोध्यन्ते।[७७]

**कश्यपप्रणीता ग्रन्थाः-** [७८]

(१)कश्यपसंहिता वैद्यकविषया, (२)काश्यपोत्तरसंहिता, (३)काश्यपस्मृतिः, (४)काश्यपशिल्पशास्त्रम्, (५) काश्यपसिद्धान्तः, (६)काश्यपव्याकरणम्, (७) काश्यपसंहिता अथवा वृद्धजीवकीयतन्त्रम् (आयुर्वेदः), (८) काश्यपभक्तिसूत्रग्रन्थः। (९)काश्यपकृषिशास्त्रम, (१०)मूलाश्लेषाशान्तिः, (११)ॐकारसर्वस्वम् (१२)सुवर्णतन्त्रम्, (१३)स्त्रीचिकित्सासूत्रम, (१४)काश्यपकल्पः, (१५)काश्यपगीता, (१६)काश्यपजातकम्, (१७)काश्यपतन्त्रम्, (१८)काश्यपसंहिता अथवा काश्यपीयम्(आयुर्वेदस्य ग्रन्थः), (१९)काश्यपसंहिता वैखानसम्, (२०)काश्यपसंहिता- काश्यपपञ्चरात्रम्, (२१)काश्यपाप्री, (२२)काश्यपीयरोगनिदानम्, (२३)काश्यपपटलः, (२४)काश्यपसंहिता

---

[७५] संस्कृत साहित्य को कश्मीर का योगदान पृ.७०( पं.१३-२०)

[७६] राणाप्रसादशर्माकृते पौराणिककोशग्रन्थे पृ.९६

[७७] वायु.पु.४५.१२०. ४७.२५, ९९.४०२

[७८] अेन सी सी खं.४ पृ.क्र.१४४

**(१) कश्यपसंहिता वैद्यकविषया**– काश्यपनाम्ना चरकसंहितायामनेका–न्युद्धरणानि सन्ति। भूतप्रेतादीनां विषयेऽस्य केचन मन्त्राः सन्ति।[७९]

**(२)काश्यपोत्तरसंहिता**– विवेचनं न प्राप्यते।

**(३) काश्यपस्मृतिः** [८०] –यद्यपि काश्यपस्योल्लेखः याज्ञवल्क्यस्मृतौ धर्मशास्त्रप्रवर्तकत्वेन नोपलभ्यते। तथापि स्मृतिचन्द्रिकायां(१.पृ.१) तथैव सरस्वतीविलासग्रन्थेऽष्टादशोपस्मृतिकाराणां सूचिः प्राप्यते। तदनुसारेण काश्यप उपस्मृतिकारो वर्तते। किन्तु,धर्मसूत्रकाररूपेण स्मृतिकाररूपेण वा कश्यपः काश्यपो वातिप्रसिद्धो वर्तते। प्रो. टी. आर. चिन्तामणिमहोदयेन कश्यपस्य धर्मशास्त्रं प्रकाशितम् (जे.ओ.आर. मद्रास वॉ.पृ.२६७–२८२) तत्र तेन न केवलं हस्तलिखिताधारेण स्मृतिपाठः प्रकाशितः, अपि तु विश्वरूपादिभिरुद्धृतानां काश्यपवचनानां सङ्ग्रहोऽपि कृतः। डेक्कन कोलेजमध्ये हस्तलिखितद्वयं (१८८४ –८७ तस्य क्र.–२०० एवं १८८१–८२ तस्य क्र.–१२२), यस्मिन् गद्यरूपेण कश्यपस्मृतिः प्राप्यते। तस्याः प्रारम्भ एवं वर्तते– अथातः काश्यपीयान् गृहस्थधर्मान् व्याख्यास्यामः। अस्मिन् ग्रन्थे सूत्ररूपेण गृहस्थधर्मो विविधप्रायश्चित्तानि, आशौचं कर्मविपाकः, पुनर्भूः –इत्यादयो धर्मशास्त्रविषया निरूपिताः सन्ति।

स्मृतिसंदर्भग्रन्थे (वॉ.४ पृ.२४८५–२४९०) काश्यपस्मृतिः प्रकाशिता वर्तते। सा राजकीयसंस्कृतपाठशाला –वाराणसीतः प्राप्तहस्तलिखितग्रन्थानुसारेण संपादिता वर्तते। इण्डिया–ऑफिस–ग्रन्थसूच्यां(वॉ.७ पृ३८४, क्र.–१३१७)काश्यपधर्मशास्त्रस्य

[७९] अेन सी सी खं.४ पृ.१४८

[८०] पी.वि.काणे, हिस्ट्रि ऑफ धर्मशास्त्र खं.–१भा.१पृ.२७५–२७६

समुल्लेखो वर्तते। संस्कारमयूख–उद्धृतकाश्यपवचनानुसारेण गृहस्थोऽनेक–संख्याकानि (दशपर्यन्तं)यज्ञोपवीतानि धारयितुं शक्नोति[८१]।

अस्य विषये म.म.पां. वा. काणेमहोदयैः स्वकीये धर्मशास्त्रस्येतिहासग्रन्थे विस्तृतं विवरणं क्रियते तद्यथा– बौधायनधर्मसूत्रे १.२.२० एकः श्लोक उद्धृतो वर्तते।

क्रीता द्रव्येण या नारी सा न पत्नी विधीयते।
सा न दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत्।

अस्यार्थः कश्यपमतानुसारेण द्रव्येण क्रीता भार्या पत्नी न भवति। सा दासी भवितुमर्हति। धार्मिककार्येषु सा भागं ग्रहीतुं नार्हति। वनपर्वणि सहिष्णुता विषयिण्यो गाथा वर्तन्ते[८२] (मा.व. २९.३५–४०)–

अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम्।
गीताः क्षमावता कृष्णे काश्यपेन महात्मना।।
क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम्।
य एतदेवं जानाति स सर्वं क्षन्तुमर्हति।।
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च।
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत्।।
अति यज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति च।
अति ब्रह्मविदां लोकानति चापि तपस्विनाम्।।
अन्ये वै यजुषां लोकाः कर्मिणामपरे तथा।

---

[८१] मोघे अेस जी, हिस्ट्री ऑफ धर्मशास्त्र इन इसेन्स पृ.क्र.–३३

[८२] मा.व. २९.३५–४०

क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः।।

क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम्।

क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः।।

(म.भा.व.अ.२९/३५-४०)

काणेमहोदयानां दृष्ट्या धर्मसूत्रकारः काश्यपः कश्यपो वैको भिन्नो वेति निश्चेतुं काठिन्यं वर्तते। तथापि तयोरैक्यं सः स्वीकरोति। कश्यपस्य धर्मसूत्रमासीत्, तत्रापि धर्मसूत्राणां विविधा विषया नित्यकर्माणि, श्राद्धम्-आशौचं-प्रायश्चित्तम्- इत्यादयो विवर्णिताः स्युः। विश्वरूपात्प्रारभ्य प्रमुखैर्धर्मशास्त्रकारैः काश्यपसूत्रादुद्धरणानि प्रदत्तानि सन्ति। विश्वरूपेण(या.३.२५७) गद्यसूत्ररूपेण चाण्डालसंसर्गप्रायश्चि-त्तविषयमुद्धरणं प्रदत्तम्। तद्यथा-

चण्डालश्वपाकपुल्कसादिसंकरे सव्यवधाने षण्मासान् गोमूत्रयावकः पञ्चाहकालं पातव्याः। एवं प्रतिमासवृद्ध्या वृद्धिरा परिवृत्तेः सूर्यस्य।

मिताक्षरायाम्(या.३.२३) -अशौचविषयकमुद्धरणं बालानामाशौचविषये वर्तते। तद्यथा- बालानामदन्तजातानां त्रिरात्रेण शुद्धिः।

हरदत्तेनापि(गौ.ध.सू.२२.१८) गोवधप्रायश्चित्तविषये विस्तृतं विवरणं कश्यपस्य प्रदत्तं वर्तते तद्यथा-

गां हत्वा तच्चर्मणा मासं गोष्ठेशयस्त्रिषवणस्नायी नित्यं पञ्चगव्याहारः।

हरदत्तेन(गौ.ध.सू.२३.२६) एकं विस्तृतं सूत्रं कश्यपस्योद्धृतं वर्तते। अस्मिन् लशुनादिभक्षणस्य तथाकार्यकरणस्य प्रायश्चित्तं वर्णितम्।

लशुनपलाण्डुगृञ्जनकुक्कुटभक्षणे शुक्रपानेऽयाज्ययाजनेऽभोज्यभोजनेऽभक्ष्यभक्षणेऽगम्यागमने चैव प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य षड्रात्रोपोषितश्चीर्णान्ते

प्राच्यामुदीच्यां दिशि गत्वा यत्र ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्यं तत्प्रणीतेन विधिना पुन:संस्कारमर्हति।

हरदत्त:(आ.ध.सू.२.६.१३.२.) अनेकानि श्लोकानि कश्यपवचनरूपाणि प्रस्तौति। एषु सप्तविधानां पुनर्भूनां वर्णनं वर्तते। कश्यपस्याशौचविषयमेकं सूत्रमपि हरदत्त उद्दधार। अपरार्कोऽपि (या.१.६४, ३.२६५, ३.२१,२५,२५१, २८८, २९०,२९२) विविधस्थलेष्वनेकानि सूत्राणि केचन श्लोकाश्च काश्यपवचनरूपेण कश्यपश्लोकरूपेण वारंवारमुदाहृतवान्।

मस्करी (गौ.ध.सू.२३.१९)काश्यपस्यैकं श्लोकं प्रायश्चित्तरूपमुद्धरति,यस्मिन् समलिङ्गगमनं तथा अयोनिवीर्यपातविषयकं प्रायश्चित्तं विवर्णितम्।

पुंसि मैथुनमासेव्या यत्नोत्सर्गे कृते तथा।

ब्रह्मचारी तथाभ्यासात्स्नात्वाथ हविषा यजेत्।।

**(४)काश्यपशिल्पशास्त्रम्**- काश्यपमतं, काश्यपीयम्, अंशुमत्काश्यपीयमिति विविधनामकै: काश्यपशिल्पस्य प्रसिद्धि:। शैवागमस्याष्टाविंशतिग्रन्थेष्वंशुमदागमो नामक: प्रभागो वर्तते। तस्मिन् शिल्पविषयको भाग: काश्यपशिल्पमिति ज्ञायते। काश्यपशिल्पं नामको ग्रन्थ: काश्यपेन प्रणीत:। कृष्णराय वझेनामकेन संशोधकेन संपादित:। तस्य प्रकाशनमानन्दाश्रमे, आनन्दाश्रममुद्रणालयद्वारा ख्रिस्ताब्दस्य १९२६ वर्षे समभवत्। तत्र निवेदने लिखितं यद्-अस्य च कर्ता कश्यप-ऋषि:। तत्र काश्यपेति विशेषणात्। कश्यपेन प्रोक्तं काश्यपं तच्च तच्छिल्पं चेति।

अस्य शिल्पशास्त्रस्य कश्यपेन प्रोक्तत्वात्कश्यप: कर्ता सिद्ध्यति। काश्यपशिल्पग्रन्थोपक्रम एवं श्रूयते-

महादेवं शशिधरं सर्वलोकैकनायकम्।

माहेन्द्रमध्यगं शान्तं पार्वतीसहितं परम्।।

देवदानवसिद्धाद्यैः सेवितं सुरपूजितम्।

प्रणम्य देवचरणमेवं ब्रूयात्स काश्यपः।।

प्रणम्य देवचरणमेवं ब्रूयात्स कश्यपः।

महार्थमल्पग्रन्थं च कर्षणाद्यर्चनान्तकम्।।

अंशुमन्तमहातन्त्राद्यत्त्वयोक्तं पुरार्थकम्।

तन्त्रं तद्वद देवानां रुद्राणामधिकारिणाम्।।

अल्पायुष्यादिधर्माणां नराणां त्वधिकारिणाम्।

अनुग्रहार्थं त्वेतेषां संक्षेपाद्वद मे प्रभो।।इति।

एवं च सर्वप्राणिसुखसाधनमेतद्वास्तुशास्त्रं कश्यपेन महर्षिणा लोकोपकारार्थं देवाधिदेवाय श्रीशङ्कराय पृष्टम्। ततश्च चराचरगुरुणा परमेश्वरेण पार्वतीरमणेन सर्वविद्यानामीशानेन जिज्ञासवे कश्यपनाम्ने महर्षय उपदिष्टमिति गम्यते। संशोधकोऽग्रे प्रस्तावनायां स्पष्टीकरोति यदयं  कश्यपसंहिताग्रन्थो नन्दभूपतीनां कालादनन्तरं जातो दृश्यते नन्दशब्दस्य नववाचकप्रयोगेण। भृगुसंहितायां नन्दानामुल्लेखो नास्ति तथापि तस्यां भगवतः कश्यपस्य सन्मानपुरःसरेणोल्लेखेन भृगुसंहिता कश्यपादनन्तरं जाता। भगवतः कश्यपस्य शिल्पप्रभावेणेयं वसुधा काश्यपीति स्मर्यते। कश्यपस्य श्रुतिष्वपि शिल्पज्ञ इति ख्यातिः। तस्मात्कश्यपः प्राचीनतमः शिल्पज्ञ इति संशोधकेन तर्क्यते। काश्यपशिल्पग्रन्थेऽष्टाशीत्यध्यायाः सन्ति। तेषु निम्नलिखिता वास्तुशास्त्रविषयाः प्रतिपादिताः सन्ति।[८३]

---

[८३] काश्यपशिल्पम् अनुक्रमणिका

१.कर्षणपटलः, २.प्रासादवास्तुपटलः, ३.वास्तुहोमपटलः, ४.प्रथमेष्टकाविधिः, ५.उपपीठविधानम्, ६.अधिष्ठानविधिः, ७.नाललक्षणम्, ८.स्तम्भलक्षणम्, ९.फलकलक्षणविधनम् (बोधिकफलिकालक्षणम्), १०.वेदिकालक्षणम्, ११.जालकविधानम्, १२.तोरणकुम्भलतालक्षणम्, १३.वृत्तफाटितलक्षणम्, १४.स्तम्भतोरणविधिः, १५.कुम्भस्थलक्षणम्, १६.वृत्तस्फुटितलक्षणम्, १७.द्वारविन्यासलक्षणम्, १८.कम्पद्वारलक्षणम्, १९.प्रस्तरलक्षणम्, २०.गलविधानपटलः, २१.शिखरलक्षणम्, २२.नासिकालक्षणम्, २३.प्रासादमानलक्षणम्, २४.मानसूत्रादिलक्षणम्, २५.नागरादिविधिः, २६.गर्भन्यासविधिः, २७.एकतलविमानलक्षणम्, २८.द्वितलविधानपटलः, २९.त्रितलविधानम्, ३०.चतुर्भूमिविधानम्, ३१.कूटादिलक्षणम्, ३२.पञ्चतलविधानपटलः, ३३.षड्भूमिविधानम्, ३४.सप्तभूमिविधानम्, ३५.वसुभूमिविधानम्, ३६.नवभूमिविधानम्, ३७.दशभूमिविधानम्, ३८.रुद्रभूमिविधानम्, ३९.भानुभूमिविधानम्, ४०.त्रयोदशभूमिविधानम्, ४१.षोडशभूमिविधानम्, ४२.मूर्धेष्टभूमिविधानम्, ४३.प्रकारलक्षणम्, ४४.मण्डपलक्षणम्, ४५.गोपूरलक्षणम्, ४६.सप्तमातृकालक्षणम्, ४७.विनायकलक्षणम्, ४८.परिवारविधिः, ४९.लिङ्गलक्षणोद्धारपटलः, ५०.उद्यानदशतालपुरुषनामपटलः(प्रतिमालक्षणम्), ५१.मध्यमदशतालविधानपटलः, ५२.दशतालपटलः, ५३.नवतालपटलः, ५४.मध्यमनवतालपटलः, ५५.अधमनवतालपटलः, ५६.अष्टतालपटलः, ५७.सप्ततालपटलः, ५८.पिण्डिकालक्षणपटलः, ५९.पीठलक्षणोद्धारपटलः, ६०.सकलस्थापनविधिपटलः, ६१.सुखासनपटलः, ६२.सकलस्थापनम्, ६३.चन्द्रशेखरमूर्तिलक्षणपटलः,

६४.वृषवाहनमूर्तिलक्षणपटल:, ६५.नृत्तमूर्तिलक्षणपटल:, ६६.गङ्गाधरमूर्तिलक्षणपटल:, ६७.त्रिपुरान्तकमूर्तिलक्षणपटल:, ६८.कल्याणमूर्तिलक्षणपटल:, ६९अर्धनारीश्वरलक्षणपटल:, ७०.गजहामूर्तिलक्षणपटल:, ७१.पाशुपतमूर्तिलक्षणपटल:, ७२.कङ्कालमूर्तिलक्षणपटल:, ७३.हर्यर्धहरलक्षणपटल:, ७४.भिक्षाटनमूर्तिलक्षणपटल:, ७५.चण्डेशानुग्रहपटल:, ७६.दक्षिणामूर्तिलक्षणपटल:, ७७.कालहामूर्तिलक्षणपटल:, ७८.लिङ्गोद्भवलक्षणपटल:, ७९.वृक्षसंग्रहणपटल:, ८०.शूललक्षणपटल:, ८१.शूलपाणिलक्षणपटल:, ८२.रज्जुबन्धलक्षणपटल:, ८३.मृत्सकारलक्षणपटल:, ८४.कल्कसंस्कारलक्षणपटल:, ८५.वर्णसंस्कारलक्षणपटल:, ८६.वर्षालेपनपटल:, ८७.ग्रामादिलक्षणपटल:, ८८.ग्रामलक्षणपटल:।

**(५)काश्यपसिद्धान्त:**८४-अस्य विषये नारदसंहितायामुल्लेखो वर्तते।

**(६)काश्यपव्याकरणम्** ८५ - काश्यपो व्याकरणशास्त्रस्यापि प्राचीन: प्रवर्तको दरीदृश्यते। तस्य हि पाणिनिव्याकरणे (१.२.२५ तथा ८.४.६७)सूत्रेषु समुल्लेखो वर्तते। तथैव वाजसनेयिप्रातिशाख्येऽपि काश्यपस्योल्लेखो वर्तते। युधिष्ठिरमीमांसकेन स्वकीये व्याकरणशास्त्रेतिहासे काश्यपस्य व्याकरणशास्त्रप्रवर्तकत्वेन वर्णनं कृतम्। ८६ एका धातुवृत्ति: काश्यपेन विरचिता प्राप्यते। माधवीयधातुवृत्तौ

---

८४ अेन सी सी खं.४ पृ.१४४

८५ अेन सी सी खं.४ पृ.१४४

८६ वॉ.१ पृ.१४५

तस्योद्धरणानि प्राप्यन्ते। काश्यपस्य केषुचिदुद्धरणेषु द्रविडसंस्कृतव्याकरणप्रवर्तकानां निर्देशो वर्तते। अशस्धातुविषये काश्यपः सम्मतधातुवृत्तेरुद्धरणं करोति।

**(७)काश्यपसंहिता अथवा वृद्धजीवकीयतन्त्रम्(आयुर्वेदः)** [८७] -अयं ग्रन्थो यादव त्रिविक्रम आचार्यः तथा सोमनाथ शर्मा- एताभ्यां संशोधितः। निर्णयसागरमुद्रणालयद्वारा मुम्बईमध्ये ख्रि.१९३८ वर्षे प्रकाशितः। वृद्धजीवको रुचिका एवं भार्गवस्य पुत्रः स्मृतः। कौमारभृत्यविषये विवरणं प्रायेणास्मिन्ग्रन्थे प्राप्यते। कश्यपभार्गवसंवादरूपा कश्यपसंहिता-(ग्रन्थोद्धृतश्लोकः)

कश्यपं सर्वशास्त्रज्ञं सर्वलोकगुरुं गुरुम्।

भार्गवः परिपप्रच्छ संशयं संश्रितव्रतः।। (पृ-१९२)[८८]

ग्रन्थेऽस्मिन् आयुवेदस्य परंपरा-सम्प्रदायोपक्रमः प्रदत्तः-अस्योपवेदस्य मूलं पितामहो ब्रह्मा विद्यते। ततः क्रमात् दक्षः-अश्विनौ(अश्विनीकुमारौ) इन्द्रः-काश्यपवशिष्ठात्रिभृगवः(काश्यपसंहितालेखात्), धन्वन्तरिः (सुश्रुतसंहितालेखात्), भरद्वाजः (चरकसंहितालेखात्) तदग्र एतेषां पुत्रैः शिष्यैश्च परंपराग्रे प्रचलति।

ग्रन्थेऽस्मिन् उपोद्घात आयुवेदप्रवर्तकरूपेण कश्यपस्योल्लेखः प्राप्यते। तद्यथा-[८९]

वशिष्ठो वामदेवश्च च्यवनो भारविस्तथा।

विश्वामित्रजमदग्निर्भारद्वाजश्च वीर्यवान्।

---

[८७] अेन सी सी खं.४ पृ.१४८

[८८] काश्यपसंहिता (वृद्धजीवकीयतन्त्रम्), उपोद्घातः पृ.क्र.१९२

[८९] काश्यपसंहिता (वृद्धजीवकीयतन्त्रम्), उपोद्घातः पृ.क्र.१५९

असितो देवलश्चैव कौशिकश्च महाव्रतः।।

सावर्णिगालवश्चैव मार्कण्डेयश्च वीर्यवान्।

गौतमश्च... भागश्च आगरूप( ?) काश्यपस्तथा।।...

आयुर्वेदस्य कर्तारः सुस्नातं तु दिशन्तु ते।।

काश्यपसंहिताया ग्रन्थरचनाकारण–वृद्धजीवक–उपनामा कोऽयमाचार्यः कश्यप? इत्यादिकं विवेचनमस्यां संहितायां संहिताकल्पाध्याय(पृ.१९०) इत्थमुल्लिखितं दृश्यते[१०]–

दक्षयज्ञे वधत्रासाद्देवर्षीणां पलायताम्।

रोगाः सर्वे समुत्पन्नाः सन्तापाद्देहचेतसोः।।

प्रागुत्पत्तिस्तथान्येषां रोगाणां परिकीर्तिता।

कृतत्रेतान्तरत्वेन प्रादुर्भूता यथा नृणाम्।।

ततो हितार्थं लोकानां कश्यपेन महर्षिणा।

पितामहनियोगाच्च दृष्ट्वा च ज्ञानचक्षुषा।।

तपसा निर्मितं तन्त्रमृषयः प्रतिपेदिरे।

जीवको निर्गततमा ऋचीकतनयः शुचिः।।

जगृहेऽग्रे महातन्त्रं सञ्चिक्षेप पुनः स तत्।

नाभ्यनन्दन्त तत्सर्वे मुनयो बालभाषितम्।।

ततः समक्षं सर्वेषामृषीणां जीवकः शुचिः।

गङ्गाह्रदे कनखले निमग्नः पञ्चवार्षिकः।।

---

[१०] काश्यपसंहिता (वृद्धजीवकीयतन्त्रम्), उपोद्घातः पृ.क्र.१९०

वलीपलितविग्रस्त उन्ममज्ज मुहूर्तकात्।

ततस्तदद्भूतं दृष्ट्वा मुनयो विस्मयं गताः।।

वृद्धजीवक इत्येकं नाम चक्रुः शिशोरपि।

प्रत्यगृह्णन्त तन्त्रं च भिषक्श्रेष्ठं च चक्रिरे।।

ततः कलियुगे तन्त्रं नष्टमेतद्यदृच्छया।

अनायासेन यक्षेण धारितं लोकभूतये।।

वृद्धजीवकवंश्येन ततो वात्स्येन धीमता।

अनायासं प्रसद्याथ लब्धं तन्त्रमिदं महत्।।

ऋग्यजुःसामवेदांस्त्रीनधीत्याङ्गानि सर्वशः।

शिवकश्यपयक्षांश्च प्रसाद्य तपसाधिया।।

संस्कृतं तत्पुनस्तत्रं वृद्धजीवकनिर्मितम्।

धर्मकीर्तिसुखार्थाय प्रजानामभिवृद्धये।।

स्थानेष्वष्टसु शाखायां यद्यन्नोक्तं प्रयोजनम्।

तत्तद्भूयः प्रवक्ष्यामि खिलेषु निखिलेन ते।।

ग्रन्थे स्थिताध्यायानां सङ्ख्याविषये ग्रन्थोक्तश्लोकः–

अध्यायानां शतं विंशं योऽधीते स तु पारगः।

**तत्र प्रकरणनामानि** –

इन्द्रियाणि चिकित्सा च सिद्धिः कल्पाश्च संहिता।

सूत्रस्थानं चिकित्सा च त्रिंशदध्यायके उभे।।

निदानानि विमानश्च शारीराण्यष्टकानि च।

सिद्धयो द्वादशाध्यायाः कल्पाश्चैवेन्द्रियाणि च।।

खिलान्यशीतिरध्यायास्तन्त्रं सखिलमुच्यते।

अर्थात्–

(१)सूत्रस्थानम्। (२)निदानस्थानम्। (३) विमानस्थानम्। (४)शरीरस्थानम्। (५)इन्द्रियस्थानम्। (६)चिकित्सास्थानम्। (७)सिद्धिस्थानम्। (८)कल्पस्थानम्। (९)खिलस्थानम्। एतानि प्रकरणानि काश्यपीयसंहितायां वर्तन्ते।

तत्र विविधप्रकरणेषु विविधाध्यायेषु निम्नलिखितविषया वर्तन्ते–

लेहाध्याय:। क्षीरोत्पत्त्यध्याय:१९। दन्तजन्मिकाध्याय:२०। चूडाकरणीध्याय:२१। स्नेहाध्याय:२२। स्वेदाध्याय:२३। उपकल्पनीयाध्याय:२४। वेदनाध्याय:२५। चिकित्सासम्पदीयाध्याय:२६। रोगाध्याय:२७। लक्षणाध्याय:२८। विमानस्थानम्–३। कर्णायजयावष्ठीवनं विमानम्। शिष्योपक्रमणीयं विमानम्। शारीरस्थानम्–४। असमानगोत्रीशारीराध्याय:। गर्भावक्रान्तिशारीराध्याय:। शरीरविचयशारीराध्याय:। जातिसूत्रीयशारीराध्याय:। इन्द्रियस्थानम्–५। ओषधभेषजेन्द्रियाध्याय:१२। चिकित्सास्थानम्–६। ज्वरचिकित्साध्याय:। गर्भणीचिकित्साध्याय:। दुष्प्रजाचिकित्साध्याय:। बालग्रहचिकित्साध्याय:। प्लीहहलीमकचिकित्साध्याय:। उदावर्तचिकित्साध्याय:। राजयक्ष्मचिकित्साध्याय:। गुल्मचिकित्साध्याय:। कुष्ठचिकित्साध्याय:। मूत्रकृच्छ्चिकित्साध्याय:। द्विव्रणीयचिकित्साध्याय:। प्रतिश्यायचिकित्साध्याय:। उरोघातचिकित्साध्याय:। शोथचिकित्साध्याय:। कृमिचिकित्साध्याय:। मदात्ययचिकित्साध्याय:। कफचिकित्साध्याय:। धात्रीचिकित्साध्याय:। सिद्धिस्थानम्७। राजपुत्रीया सिद्धि:। त्रिलक्षणा सिद्धि:। वमनविरेचनीया सिद्धि:। नस्त:कर्मीया सिद्धि:। क्रियासिद्धि:। बस्तिकर्मीया सिद्धि:। पञ्चकर्मीया सिद्धि:। मङ्गलसिद्धि:। कल्पस्थानम्८। धूपकल्पाध्याय:।

लशुनकल्पाध्यायः। कटुतैलकल्पाध्यायः। शतपुष्पाशतावरीकल्पाध्यायः। रेवतीकल्पाध्यायः। भोजनकल्पाध्यायः। विशेषकल्पाध्यायः। संहिताकल्पाध्यायः। खिलस्थानम्९। विषमज्वरनिर्देशीयाध्यायः। विशेषनिर्देशीयाध्यायः। भैषज्योपक्रमणीयाध्यायः। यूषनिर्देशीयाध्यायः। भोज्योपक्रमणीयाध्यायः। रसदोषविभागीयाध्यायः। संशुद्धिविशेषणीयाध्यायः। बस्तिविशेषणीयाध्यायः। रक्तगुल्मविनिश्चयाध्यायः। अन्तर्वत्नीचिकित्साध्यायः। सूतिकोपक्रमणीयाध्यायः। जातकर्मोत्तराध्यायः। कुक्कुणकचिकित्साध्यायः। विसर्पचिकित्साध्यायः। चर्मदलचिकित्साध्यायः। अम्लपित्तचिकित्साध्यायः। शोथचिकित्साध्यायः। शूलचिकित्साध्यायः। अष्टज्वरचिकित्साध्यायः। क्षीरगुणविशेषीयाध्यायः। पानीयगुणविशेषीयाध्यायः। मांसगुणविशेषीध्यायः। देशसात्म्याध्यायः।

**(८)काश्यपस्य भक्तिसूत्रम्**- एको ग्रन्थ आसीदिति ज्ञायते। तस्य भक्तिविषयकमुद्धरणं शाण्डिल्येन भक्तिसूत्रग्रन्थे कृतं वर्तते।[११]

**(९)काश्यपकृषिशास्त्रम्**- अेन सी सी अनुसारेण कृषिशास्त्रविषयकः काश्यपस्य एको ग्रन्थो- अड्यारग्रन्थागारे समुपलभ्यते।[१२]

**(१०)मूलाश्लेषाशान्तिः** [१३]- प्राच्याविद्यामन्दिरस्य वटपत्तनस्य ग्रन्थागारे काश्यपविरचितं मूलाश्लेषाशान्तिविषयकं हस्तलिखितं(क्र.८५०८) समुपलभ्यते।

---

११ शा.भ.सू.२.१.३

१२ अेन सी सी खं.४ पृ.१४५

१३ अेन सी सी खं.४ पृ.१४५

**(११)ॐकारसर्वस्वम्** [९४] – अेन सी सी अनुसारेण ॐकारसर्वस्वं नामकः काश्यपस्य एको ग्रन्थो ग्रन्थागारेषु समुपलभ्यते।

**(१२)सुवर्णतन्त्रम्** [९५] – काश्यपविरचितः सुवर्णतन्त्रनामक एको ग्रन्थो भाण्डारकार– प्राच्यविद्य– संशोधन–संस्थाया हस्तलिखितसंग्रहे विद्यते। १९१९–२४ वर्षस्य क्र.१२२।

**(१३)स्त्रीचिकित्सासूत्रम्** [९६] – अेन सी सी. अनुसारेण स्त्रीचिकित्सासूत्रं नामक आयुर्वेदानुसारी काश्यपस्यैको ग्रन्थो ग्रन्थागारेषु समुपलभ्यते।

**(१४)काश्यपकल्पः** [९७] –पाणिनिसूत्रस्य ४.२.६६ संदर्भस्य वार्तिके काश्यपकल्पस्य समुल्लेखो वर्तते।

**(१५)काश्यपगीता** [९८]– महाभारते काश्यपगीता समुपलभ्यते।

**(१६)काश्यपजातकम्** [९९] – बलभद्रकृते होरारत्नग्रन्थे काश्यपजातकस्य समुल्लेखो वर्तते।

**(१७)काश्यपतन्त्रम्** [१००] –लक्ष्मणकविविरचित आयुर्वेदस्य काश्यपतन्त्रं नामको ग्रन्थो विद्यते।

---

९४ अेन सी सी खं.४ पृ.१४५

९५ अेन सी सी खं.४ पृ.१४५

९६ अेन सी सी खं.४ पृ.१४५

९७ अेन सी सी खं.४ पृ.१४६

९८ अेन सी सी खं.४ पृ.१४६

९९ अेन सी सी खं.४ पृ.१४६

**(१८)काश्यपसंहिता** [१०१] **अथवा काश्यपीयम्**- आयुर्वेदस्य ग्रन्थः। अस्मिन्ग्रन्थे विषचिकित्साविषयो विवर्णितः। मन्त्रसामर्थ्येन विषदूरीकरणस्योपायः प्रदर्शितः।

**(१९)काश्यपसंहिता वैखानसम्** [१०२] - मरीचिविरचितविमानार्चनकल्पानुसारेण काश्यपसंहिता नामक एको वैखानसागमस्य ग्रन्थ आसीत्। यस्मिन् काण्डत्रयम्-१.सत्यकाण्डम्, २.तर्ककाण्डम्, ३.ज्ञानकाण्डम् - मिलित्वा ६४००० ग्रन्थाग्रस्य विशालो ग्रन्थ आसीत्। अधुना केवलं १०८ अध्यायस्य ज्ञानकाण्डमेवोपलभ्यते।

**(२०)काश्यपसंहिता** [१०३] - काश्यपपञ्चरात्रम्- भारद्वाजसंहितायां पाञ्चरात्राग-मस्य १०८ संहितानां सूचिर्वर्तते। तत्र काश्यपपाञ्चरात्रस्य समुल्लेखो वर्तते। पद्मतन्त्रेऽप्युल्लेखो वर्तते। शिवतत्त्वरत्नाकरग्रन्थे काश्यपस्य वैष्णवसंहिताया उल्लेखो वर्तते।

**(२१)काश्यपाप्री** [१०४]- अड्यारग्रन्थागार आप्रीसूक्तानां विषये काश्यपस्य वैदिकग्रन्थस्य हस्तलिखितानि वर्तन्ते।

**(२२)काश्यपीयरोगनिदानम** [१०५] - काश्यपोक्तो रोगनिदानविषयकोऽयं ग्रन्थो हस्तलिखितरूपेण दृश्यते।

---

[१००] अेन सी सी खं.४ पृ.१४६

[१०१] अेन सी सी खं.४ पृ.१४८

[१०२] अेन सी सी खं.४ पृ.१४९

[१०३] अेन सी सी खं.४ पृ.१४९

[१०४] अेन सी सी खं.४ पृ.१४९

**(२३)काश्यपपटलः** [१०६] – ज्योतिषशास्त्रीयोऽयं ग्रन्थः। काश्यपविरचितः। तस्योल्लेखः शिवदासेन ज्योतिर्निबन्धग्रन्थे, परशुरामप्रतापस्य संस्कारकाण्डे, नारायणस्य मुहूर्तमार्तण्ड टीकायां वर्तते।

**(२४)काश्यपसंहिता** [१०७] – वेदान्तविषयकोऽयं ग्रन्थः। अस्य वामस्य सूक्तस्य व्याख्याने आत्मानन्देनास्योल्लेखः कृतः।

---

१०५ अेन सी सी खं.४ पृ.१५०

१०६ अेन सी सी खं.३ पृ.१९२

१०७ अेन सी सी खं.३ पृ.१९२

## [४६]कश्यपवंशवर्णनम्–

४६.मत्स्यपुराणम्–अ.६

प्रह्लादः, अनुह्लादः, सह्लादः, ह्लादः, आयुष्मान्, शिबिः, बाष्कलः, विरोचनः, बलिः, बाणः, धृतराष्ट्रः, सूर्यः, चन्द्रः, चन्द्रांशुतापनः, निकुम्भनाभः, गुर्वक्षः, कुक्षिभीमः,विभीषणः

**दनुः**

विप्रचितिः, द्विमूर्धा, शकुनिः, शङ्कुशिरोधरः, अयोमुखः, शम्बरः, कपिशः, वामनः, मारीचिः, मेघवान्, इरागर्भशिराः, विद्रावणः, केतुः, केतुवीर्यः, शतह्रदः, इन्द्रजित्, सप्तजित्, वज्रनाभः, एकचक्रः, महाबाहुः, वज्राक्षः, तारकः, असिलोमा, पुलोमा, बिन्दुः, महासुरबाणः, स्वर्भानुः, वृषपर्वाः

**ताम्रा**

शुकी ⇨ शुकः, उलूकान्

श्येनी ⇨ श्येनः

भासी ⇨ कुररान्

सुग्रीवी ⇨ मेषः, वाजिः, उष्ट्रः, गर्दभः

गृध्रिका ⇨ गृध्रः, कपोतः, पारावतः

शुचिः ⇨ हंसः, सारसः, क्रौञ्चः, प्लवः

**विनता**

गरुडः, अरुणः, सौदामनी

जटायुः ⇨ कर्णिकारः, शतगामी, सारसः, रज्जुलाबः, भेरुण्डः

सम्पातिः ⇨ बभ्रुः, शीघ्रगः

शेषः, वासुकिः, कर्कोटकः, शङ्खः, ऐरावतः, कम्बलः, धनञ्जयः, महानीलः, पद्मः, अश्वतरः, तक्षकः, एलापत्रः, महापद्मः, धृतराष्ट्रः, बलाहकः, शङ्खपालः, महाशङ्खः, पुष्पदंष्ट्रः, शुभाननः, शङ्कुरोमाः, बहुलः, वामनः, पाणिनः, कपिलः, दुर्मुखः, पतञ्जलिः

अरिष्टा
किन्नराः, गन्धर्वाः
इरा
समस्ततृणानि, वृक्षाः, लताः, गुल्मानि
विश्वा
अनेककोटियक्षाः, राक्षसाः

# प्रथमो विभागः
# तृतीयं प्रकरणम्
# कश्यपसंहितायाः परिचयः

(कश्यपसंहितायाः परिचयः, ग्रन्थकारपरिचयः, तस्य समयः, स्थानम्, विद्वत्ता, हस्तलिखितानां परिचयः, सम्पादनं, सिद्धान्ताः, कति अध्यायाः, प्रत्येकाध्याये कति श्लोकाः।)

**कश्यपसंहितायाः परिचयः-**

कश्यपस्य संहितायाः सम्पादनपूर्वकमध्ययनस्य महाशोधप्रबन्धस्य मुख्यो विषयः। तदर्थं प्राच्यविद्यामन्दिरस्थानां त्रिसणां, पुनानगरस्य एकस्याः, कश्मीरनगरस्यैकस्याः, एवं मिलित्वा पञ्च मातृकाणामाधारेण कश्यपसंहितायाः पाठनिर्धारणं प्रथममेव कृतम्। अन्यज्योतिषशास्त्रीयग्रन्थेषु (बृ.सं.भटोत्पलटीका, मुहूर्तचिन्तामणेः पीयूषधाराटीका, बल्लालसेन- प्रणीतोऽद्धुतसागरस्तथान्ये) कश्यपसंहितायाः श्लोका उद्धरणरूपेण प्राप्यन्ते। तेषामपि सङ्ग्रहः पाठनिर्धारणे समुपयोगश्च कृतः।

**काश्यपसंहिताया मङ्गलचरणम्-**

महेशाय नमस्तमै सच्चिदानन्दरूपिणे।

नतामरकिरीटौघप्रभाविस्फुरिताङ्घ्रये।।[१०८]

मङ्गलचरणे तथैव संहितायामनेकवारं शिवस्योल्लेखो दरीदृश्यते। तेनेदमनुमीयते यत् संहिताकारः कश्यपः कोऽपि शैवधर्मीयः शिवभक्त आसीत्। तस्मिन् समये शैवसंप्रदायस्य प्रभावः समाजेऽधिक आसीत्-इत्यपि कथयितुं शक्यते।

---

[१०८] क.सं.१.१

ग्रन्थकर्ता “श्रीकश्यपब्रह्मर्षिः” “शिवभक्तः” दरीदृश्यते। अत्र मङ्गलचरणे भगवतः सच्चिदानन्दस्वरूपस्य महेशस्य स्तुतिः कृता। ग्रन्थमध्येऽपि यत्र तत्र यथास्थाने “निहन्ति निखिलं पापं प्रणामा इव शूलिनः”, “हन्ति दोषान्महापापात् शिवरात्रिव्रतं यथा”, “त्रिनेत्रस्त्रिपुरं यथा”, “पिनाकी त्रिपुरं यथा”, “हन्ति सप्रणवो मन्त्रः पापान्पञ्चाक्षरी यथा।” एतेनापि संहिताकारः शिवभक्त इति गम्यते।

**कश्यपसंहितायाः समयः-**

१)**बहिःसाक्ष्यम्-**

(१) वराहमिहिरेण कश्यपस्योल्लेखो बृहत्संहिताग्रन्थे **वर्षागर्भलक्षणसंदर्भे स्पष्टतया** कृतः। तद्यथा-

तल्लक्षणानि मुनिभिर्यानि निबद्धानि तानि दृष्ट्वेदम्।
क्रियते गर्गपराशरकाश्यपवज्रादिरचितानि।।२।। -बृ.सं.२१.२

वराहमिहिरस्य समयः शकवर्षे-५०९(५८७ख्रि.)वर्तते।[१०९]

(२) बृहत्संहितायाः टीकायां भट्टोत्पलेन कश्यपसंहिताया नैके श्लोका उद्धृताः सन्ति। तेषां सङ्ग्रहः द्वितीयपरिशिष्टे प्रदत्तः। भट्टोत्पलस्य समयः८८८शकाब्दो (९६६ख्रि.)वर्तते।[११०]

(३) बृहज्जातकम्- टीकायां भट्टोत्पलेन कश्यपसंहिता नैके श्लोका उद्धृताः सन्ति। तेषां सङ्ग्रहः द्वितीयपरिशिष्टे प्रदत्तः। भट्टोत्पलस्य समयः ८८८शकाब्दो (९६६ख्रि.)-वर्तते।[१११]

---

१०९ भारतीयज्योतिषशास्त्रस्येतिहासः पृ.१७२

११० भारतीयज्योतिषशास्त्रस्येतिहासः पृ.१७९

१११ भारतीयज्योतिषशास्त्रस्येतिहासः पृ.१७९

(४) अद्भुतसागरग्रन्थे बल्लालसेनेनापि नैके श्लोका उद्धृताः सन्ति। तेषां सङ्ग्रहः द्वितीयपरिशिष्टे प्रदत्तः। बल्लालसेनस्य समयः शकाब्दः १०८९(११६७खि.) – वर्तते।[११२]

(५) मुहूर्तचिन्तामणिग्रन्थस्य पीयूषधाराटीकायां गोविन्दभट्टेनानेके श्लोकाः कश्यपवचनरूपेण प्रदत्ताः सन्ति। परिशिष्टे द्वितीये मया तेषां सङ्कलनं कृतम्। गोविन्दभट्टस्य समयः शकाब्दं १५२५ (खिताब्दस्य **१६०३**) वर्तते।[११३]

(६) नारदसंहिताकारेण ज्योतिषशास्त्रप्रवर्तकानां सूचिः प्रदत्ता। तस्यां कश्यपस्य संहिताकाररूपेणोल्लेखोऽन्यैः साकं वर्तते। तद्यथा–

ब्रह्माचार्यो वसिष्ठोऽत्रिर्मनुः पौलत्स्यलोमशौ।
मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः।।२।।
च्यवनो यवनो गर्गः कश्यपश्च पराशरः।
अष्टादशैते गम्भीरा ज्योतिःशास्त्रप्रवर्तकाः।।३।।

(नारदसंहिता,अ.१श्लो.२–३)

नारदसंहितायाः कालो वराहपूर्वकालीनोऽनुमीयते।

**अन्तःसाक्ष्यम्–**

(१) कश्यपसंहितायां सूर्यादिज्योतिषशास्त्रप्रवर्तकानां सूचिः प्रथमाध्याये समुपलभ्यते, यस्यामष्टादशज्योतिषशास्त्रप्रवर्तकानां समुल्लेखो वर्तते। तद्यथा–

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।

---

[११२] भारतीयज्योतिषशास्त्रस्येतिहासः पृ.१८६

[११३] भारतीयज्योतिषशास्त्र पृ.४७३

कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिरा:।।२।।

रोमश: पौलिशश्चैव च्यवनो यवनो भृगु:।

शौनकोऽष्टादशैवैते ज्योति:शास्त्रप्रवर्तका:।।३।।

कश्यपसंहिताकार: प्रायेण तेषां समकालीनोऽथवानन्तरकालीन: स्यादित्यनुमीयते।

(२) कश्यपसंहितायां विवाहाध्याये शौनकादीनां मतमुद्धृतं वर्तते। एतेनेदं कथयितुं शक्यते यत् संहिताकार: शौनकस्य समकालीनोऽनन्तरकालीनो वा स्यात्। तद्यथा-

वदन्ति शौनकादय: सचौलकर्म मुण्डनम्।।१०९।।

—श्लोक: क्र.१०९, विवाहाध्याये (अध्याय:३३)।

एतैर्बाह्यान्तरप्रमाणैरिदं निश्चयेन वक्तुं शक्यते तद् कश्यपोऽतीवप्रसिद्धो ज्योतिषसंहिताकार आसीत्। तस्योद्धरणानि भट्टोत्पलाद् आरभ्य बालबोधज्योतिषसारसमुच्चय: सदृशैर्नैकैर्ज्योतिषग्रन्थकारै: प्रदत्तानि सन्ति। एतेन कश्यपसंहिताकारस्य समयो भट्टोत्पलपूर्वकालीन: (ख्रिताब्दस्य ९६६) प्रायेण वराहमिहिरस्य (ख्रि.५८७) पूर्वकालीन: स्यात्।

कश्यपस्य वर्णनम्-ब्रह्मर्षि: कश्यप:

कश्यपसंहिताग्रन्थे प्रत्येकाध्यायान्ते - इतिश्रीब्रह्मर्षि- कश्यपसंहितायां …………। इति उक्तम्। स्कन्धत्रयात्मकं शास्त्रमाद्यं सिद्धान्तसंज्ञकम्।

द्वितीयं जातकस्कन्धं तृतीयं संहिताह्वयम्।।४।।

ग्रहाणां मध्यमा भुक्ति: स्फुटभुक्तिरनन्तरम्।

दिक्साधनं ततश्छाया लग्नकालविनिर्णय:।।५।।

चन्द्रारर्कग्रहणं सम्यक् तयोश्चपरिलेखनम्।

समागमो युद्धभेदो ग्रहाणां युतयस्तत:।।६।।

उदयास्तमयज्ञानं चन्द्रशृङ्गनतोन्नतिम्।

पातवैधृतयोर्भेदौ भूगोलं यन्त्रलक्षणम्।।७।।

मानक्रिया मानभेदाश्चाद्यस्कन्धे प्रकीर्तिता:।

राशिभेद: खेटयोनिर्वियोनिर्जन्मलक्षणम्।।८।।

निषेको जननं पुंसामरिष्टं भङ्गलक्षणम्।

आयुर्दायो दशा भेदा भेदाश्चान्तर्दशासु च।।९।।

अष्टवर्ग: कर्मजीवो राजयोगाश्च संज्ञका:।

चान्द्रयोगा द्विग्रहाद्या: प्रव्रज्यायोगसम्भवा:।।१०।।

राशिशीलं दृष्टिफलं ग्रहभावफलं तत:।

आश्रयाख्याश्च ये योगा योगा: सङ्कीर्णसम्भवा:।।११।।

स्त्रीजातकं नेष्टयोगं निर्वाणं नष्टजातकम्।

द्रेष्काणश्च क्रियायोगा द्वितीयस्कन्धसम्भवा:।।१२।।

आदौ शास्त्रोपनयनं खेटचारोऽब्दलक्षणम्।

तिथिवासरनक्षत्रयोगतिथ्यर्धलक्षणम्।।१३।।

मुहूर्तोपग्रह: सूर्य: सङ्क्रान्तिर्गोचरक्रम:।

चन्द्रताराबलं चैव क्रिया षोडशकर्मणाम्।।१४।।

क्षुरिकाबन्धनं यात्रा प्रवेशो वास्तुलक्षणम्।

नृपाभिषेचनं देवप्रतिष्ठा वस्त्रलक्षणम्।।१५।।

अग्न्याधानं मेघगर्भं निखिलोत्पातलक्षणम्।

तच्छान्तिर्मिश्रिकाध्यायस्तृतीयस्कन्धसम्भवाः।।१६।।

एवं लक्षणसंयुक्तमुक्तं स्कन्धद्वयं ततः।

साम्प्रतं संहितास्कन्धमेवं लक्षणसंयुतम्।।१७।।

वक्ष्येऽहं कश्यपब्रह्मा हितार्थं देहधारिणाम्।

सम्बन्धस्तस्य शास्त्रस्य वेदाङ्गमिति धातृतः।।१८।।

शुभाशुभस्य जगतामभिधेयं निरूपणम्।

ग्रहग्रहणसङ्क्रान्तिर्यज्ञाध्ययनकर्मणाम्।।१९।।

प्रयोजनं ततोद्वाहक्रियाणां कालनिर्णयः।

एतद्विना न सिद्ध्यन्ति श्रौतस्मार्ताखिलक्रियाः।।२०।।

अथ कश्यपसंहिता प्राचीनो ग्रन्थः, किन्तु तद्विषयेऽधिकांशजना न जानन्ति तथा चायं ग्रन्थो बहुप्रचलितो नास्ति।

श्रीब्रह्मर्षिकश्यपविरचितां कश्यपसंहितायां विविधज्योतिषशास्त्रीयविषयोपरि एकोनपञ्चाशत्(४९)अध्यायाः सम्मिलिताः सन्ति। तथा च सर्वेष्वध्यायेषु श्लोका एव सन्ति, न गद्यम्। विविधच्छन्दोबद्धोऽयं ग्रन्थः।

अस्मिन्संहिताग्रन्थे – सिद्धान्तविभागे सूर्यादीनां नवग्रहाणां चारविषये प्रतिपादितम्। पञ्चाङ्गप्रकरणे तिथि–वार–नक्षत्र–योग–करणादीनां व्यवहारे किं महत्त्वम् –इति स्पष्टीकृत्य विस्तृतं विवरणं निर्दिष्टमस्ति। मनुष्याणां जीवने गर्भाधानादारभ्यान्त्येष्टिपर्यन्तं विविधाः संस्कारा वर्तन्ते। अत्र षोडशसंस्काणां महत्त्वं प्रदर्श्य विस्तृतरूपेण मुहूर्तविचारः प्रतिपादितः। कश्यपसंहितान्तर्गते वास्त्वध्याये गृहनिर्माणं ग्रामादीनां सविस्तरं विवेचनं कृतम्।

कश्यपसंहितान्तर्गते विवाहाध्यायेऽष्टविधविवाहानां सफलमत्यन्तं विशदं सविस्तरं विवेचनं कृतम्। कश्यपसंहितान्तर्गते सर्वलग्नाध्याये प्रत्येककार्याणां सिद्ध्यर्थं द्वादशलग्नवशाद्-ग्रहयोगवशाद् विविधकार्याणां सिद्धिविषये विशिष्टं सविस्तरं विवेचनं कृतम्। तथा चान्ये महत्त्वपूर्णा विषया यथा यात्राध्यायः, श्राद्धाध्यायः, (विवाहे)एकविंशतिदोषनिरूपणाध्यायः, उत्पाताध्यायः, राजाभिषेकाध्यायस्तथा विविधशान्त्यादीनां विवेचनं कृतमस्ति। कश्यपसंहितायाः सम्पूर्णं श्लोकसंख्या १,५५४ वर्तते।

**कश्यपसंहितायाः सम्पादितपाठः १-४९ अध्यायाः-**

| अ.क्र. | विषयः | श्लो.सं. |
|---|---|---|
| १ | शास्त्रोपनयनाध्यायः | २२ |
| २ | सूर्यचाराध्यायः | ३६ |
| ३ | चन्द्रचाराध्यायः | १३ |
| ४ | भौमचाराध्यायः | १४ |
| ५ | बुधचाराध्यायः | १४ |
| ६ | गुरुचाराध्यायः | ३१ |
| ७ | शुक्रचाराध्यायः | १४ |
| ८ | शनिचाराध्यायः | २ |
| ९ | राहुचाराध्यायः | १२ |
| १० | केतुचाराध्यायः | १७ |
| ११ | अब्दलक्षणाध्यायः | ९० |
| १२ | तिथ्यध्यायः | ३४ |

| | | |
|---|---|---|
| ३४ | श्राद्धाध्याय: | ३० |
| ३५ | छुरिकाबन्धनाध्याय: | १३ |
| ३६ | यात्राध्याय: | १०० |
| ३७ | प्रवेशाध्याय: | ९ |
| ३८ | वास्तुलक्षणाध्याय: | ९७ |
| ३९ | वास्तुपूजनाध्याय: | २० |
| ४० | राजाभिषेकाध्याय: | १४ |
| ४१ | प्रतिष्ठाध्याय: | १४ |
| ४२ | वस्त्रलक्षणाध्याय: | १२ |
| ४३ | अग्न्याधानाध्याय: | १५ |
| ४४ | सद्योवृष्टिलक्षणाध्याय: | १२ |
| ४५ | काकादिसंयोगोत्पातशान्त्यध्याय: | २४ |
| ४६ | उत्पातशान्त्यध्याय: | ९ |
| ४७ | शिथिलीदोष–शरीरोपशान्त्यध्याय: | २३ |
| ४८ | निखिलोत्पातशान्त्यध्याय: | ८७ |
| ४९ | मिश्रकाध्याय: | १७७ |
| | **सम्पूर्णश्लोकसंख्या–** | **१५५४** |

**काश्यपसंहितायाः पाठसम्पादनार्थमुपयुक्तानां हस्तलिखितानां विवरणम्–**

विविधनगरत: सम्प्राप्तानां निम्नलिखितानां पञ्च हस्तलिखितानां समुपयोग: काश्यपसंहिताया: सम्पादने कृत:। तेषां वर्णनं प्रदीयतेऽत्र।

**सङ्केतः** **विवरणम्**

१) **व.१** :- वडोदरास्थितप्राच्यविद्यामंदिरस्य प्रथमहस्तलिखितस्य क्रमाङ्कः–२३७१

(सी.डी.–चित्रप्रतिकृतिरूपेण प्राप्तम्)

२) **व.२** :- वडोदरास्थितप्राच्यविद्यामंदिरस्य द्वितीयहस्तलिखितस्य क्रमाङ्कः–९१७७

(सी.डी.–चित्रप्रतिकृतिरूपेण प्राप्तम्)

३) **व.३** :- वडोदरास्थितप्राच्यविद्यामंदिरस्य तृतीयहस्तलिखितस्य क्रमाङ्कः–९२३५

(सी.डी.–चित्रप्रतिकृतिरूपेण प्राप्तम्)

४) **पु.** :- पुणेनगरस्थिताया आनन्दाश्रमसंस्थातः प्राप्तहस्तलिखितस्य क्रमाङ्क–२९३७।

(झेरॉक्स–प्रतिलिपि–रूपेण प्राप्तम्)

५) **क.** :- जम्मुनगरस्थितरणवीरसंस्कृतानुसन्धानसंस्थानपुस्तकालयतः प्राप्तहस्तलिखितस्य

क्रमाङ्कः स्टेन–१५६। (झेरॉक्स–प्रतिलिपि–रूपेण प्राप्तम्)

**अपूर्णपूर्णहस्तलिखितानां विवरणम्ः-**

**१) व.१** – क्रमाङ्कः२३७१

**पूर्णं हस्तलिखितम्।**

**२) व.२** – क्रमाङ्कः–९१७७

**पूर्णं हस्तलिखितम्।**

३)  **व.३** –क्रमाङ्कः–९२३५

पत्रलोपः –पत्रक्र.–४३ (पृष्ठलोपः (अप्राप्तपृष्ठं)अध्यायः ४७, ४८, ४९ पर्यन्तं लोपः।

**अपूर्णं हस्तलिखितम्।**

४)  **पु.**– क्रमाङ्कः–२९३७(पुनानगरात् प्राप्ता हस्तलिखितप्रतिः)।

लोपः अध्यायः–५६ , श्लोकः क्र.–२ड तः ग्रन्थान्त(अ.–४९) पर्यन्तम्।

**अपूर्णं हस्तलिखितम्।**

५)  **क.**– क्रमाङ्कः–स्टेन–१५६। लोपः पत्रक्र.–४०(पत्रसंख्या–२),

अध्यायः–४२ श्लोकः क्र.–८ड तः अध्यायः–४४ श्लोकः क्र.–११अ पर्यन्तम्।

**अपूर्णं हस्तलिखितम्।**

**सर्वेषां विस्तृतं वर्णनम्–**

**सम्पूर्णं विवरणम्–**

**व.१–**

१) संक्षेपः व.१–वडोदराहस्तलिखितं प्रथमम्।

२) संस्थाया नाम –प्राच्यविद्यामन्दिरम्, महाराजा–सयाजीराव–विश्वविद्यालयः, राजप्रासादसमीपे, राजमार्गः, वडोदरा–३९०००१।

३) क्रमाङ्कः– २३७१।

४) ग्रन्थनाम– कश्यपसंहिता।

५) ग्रन्थकारः– श्रीकश्यपब्रह्मर्षिः।

६) पत्राणि–६३(१२४पृष्ठानि)।

७) लेखनसाधनम्– जीर्णानि प्राचीनानि भारतीयकर्गजपत्राणि।

८) लिपि:- देवनागरी पृष्ठमात्राप्रयोगो नास्ति।

९) एकस्मिन् पृष्ठे लेखनपङ्क्तय: -एकस्मिन् पृष्ठे प्रायेण १०पङ्क्तयो लिखिता:।

१०) एकस्मिन् पङ्क्तौ अक्षराणि- एकस्मिन् पङ्क्तौ प्रायेण ४० अक्षराणि सन्ति।

११) ग्रन्थश्लोकसंख्या -१५५०प्रायेण।

१२) लेखक:-लेखकस्य नामनिर्देशो नास्ति।

१३) लेखनान्तरं शुद्धीकरणम्- दृश्यते।

१४) तस्य समय:- ग्रन्थान्ते लेखनस्य समयनिर्देश इत्थं वर्तते। संवत् १७८५ वैशाख पुरुषोत्तममासे शु.-५ गुरौ। अस्यार्थ: ख्रिस्ताब्द-१७२९ अधिकवैशाख(पुरुषोत्तम)मासे शुक्ल-पञ्चम्यां(५) गुरुवासरे लिखितम्। एतेन लेखकस्य हस्तलिखितग्रन्थस्य च समयो निश्चितरूपेण प्राप्यते।

१५) तस्य वैशिष्ट्याणि- अनेकवारं लिखितस्य निस्कासनं लेखकेन कृतं वर्तते। लेखनमपि स्वच्छं-स्पष्टं व्याकरणशुद्धं च प्रायेण नास्ति। रक्तवर्णस्योपयोग: प्रत्येकाध्यायान्ते पुष्पिकायां तथा नवीनाध्यायस्य प्रारंभविषयस्य निर्देशे कृतो वर्तते। कृष्णवर्णमसेरुपयोगो लिखितस्य निस्कासनार्थं कृत:।

१६) ग्रन्थ: पूर्ण:/अपूर्ण:- ग्रन्थ: पूर्णो वर्तते। अस्मिन्सम्पूर्णा संहिता प्राप्यते।

१७) श्लोकानां प्रक्षेपा:-(सर्वाधिकश्लोकानां प्रक्षेपा अस्मिन् हस्तप्रते वर्तन्ते।) बहूनां श्लोकानां प्रक्षेपा वर्तन्ते।

तद्यथा-(व.१-अध्याय:-२८, श्लो.क्र.-४२ पश्चात्)

हन्ति दोषचयं यद्वत्यापसंघं स्मृतिर्हरेः।

त्रिषष्ठालाभगो भौमः शनिं वा यदि तुङ्गगः।।

सर्वदोषा च यन्ति पापं पञ्चाक्षरी यथा।

स्वाधिमित्रगतौ भौमः शनिर्वा यदि लाभगः।।

निहन्ति दोषचयं सर्वे पिनाकी त्रिपुरं यथा।

लग्नात्रिषष्ठगः सूर्यस्तुङ्गस्थोवा भवेद्यदि।।

नाशयत्यखिलान्दोषान् स्वोदयेतिमिरं यथा।

केन्द्रत्रिकोणगः सौम्यो त्रिराश्यंशगो यदि।।

पापकेन्द्रवतं दोषं हन्ति भात्केसरी यथा।।

इत्यादयः................।

१८) विशिष्टाः पाठभेदाः – सर्वाधिका पाठभेदा हस्तलिखितप्रते विद्यन्ते।

१९) अधिकलेखनम्(मार्जिनमध्ये लेखनम्)– कुत्रचित् कुत्रचित् पृष्ठे दृश्यते।

२०) लोपाः–अध्यायः–११ व.२–(लोपः)श्लोकः क्र.–४ एवं श्लोकः क्र.–५।

२१) त्रुटितं–कीटकदुष्टत्वं वा– प्राचीनत्वेन कुत्रचित् ग्रन्थो भग्नः–त्रुटितो वर्तते।

२२) प्रारम्भः– श्रीगणेशाय नमः।। श्रीसरस्वत्यै नमः।।

अन्तिमपुष्पिका –।। आदितः श्लोकः।। इति श्रीमन् कश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रकाध्यायः समाप्तः।।

२३) अन्तिमपुष्पिका–अनन्तरलेखनम्– शुभमस्तु संवत् १७८५ वैशाख पुरुषोत्तम मासे शु.–५ गुरौ।

२४) हस्तप्रतस्य मापनात्प्राप्तं मानम्– पत्रदैर्घ्यं–२८से.मी., पत्रविस्तारः–११.५से.मी.

२५) चतुर्भागेषु रिक्तस्थानम्(मार्जिन)- पत्रवामभागः-२.१से.मी., पत्रदक्षिणभागः-२.१से.मी., पत्र-उपरिभागः-१.५से.मी., पत्र-अधस्तनभागः-२.१से.मी.

**व.२-**

३) संक्षेपः व.२-वडोदराहस्तलिखितं द्वितीयम्।

४) संस्थाया नाम -प्राच्यविद्यामन्दिरम्, महाराजा-सयाजीराव-विश्वविद्यालयः, राजप्रासादसमीपे, राजमार्गः, वडोदरा-३९०००१।

५) क्रमाङ्कः- ९१७७

६) ग्रन्थनाम- कश्यपसंहिता।

७) ग्रन्थकारः- श्रीकश्यपब्रह्मर्षिः।

८) पत्राणि-६३(१२४पृष्ठानि)

९) लेखनसाधनम्- जीर्णानि प्राचीनानि भारतीयकर्गजपत्राणि।

१०) लिपिः- देवनागरी पृष्ठमात्राप्रयोगो नास्ति।

११) एकस्मिन् पृष्ठे लेखनपङ्क्तयः -एकस्मिन् पृष्ठे प्रायेण ११पङ्क्तयो लिखिताः।

१२) एकस्मिन् पङ्क्तौ अक्षराणि- एकस्मिन् पङ्क्तौ प्रायेण ३७ अक्षराणि सन्ति।

१३) ग्रन्थश्लोकसंख्या -१५७७प्रायेण।

१४) लेखकः-लेखकस्य नामनिर्देशो नास्ति।

१५) लेखनान्तरं शुद्धीकरणम्- दृश्यते।

१६) तस्य समयः- ग्रन्थान्ते लेखकस्य समयनिर्देश इत्थं वर्तते। (संवत्) १५०१। अस्यार्थः ख्रिस्ताब्दे १४४५ लिखितम्। एतेन लेखकस्य हस्तलिखितग्रन्थस्य च समयो लभ्यते। अयं ग्रन्थ उपलब्धहस्तलिखितग्रन्थेषु प्राचीनतमो दृश्यते।

१७) तस्य वैशिष्ट्याणि :- अनेकवारं लिखितस्य निस्कासनं लेखकेन कृतं वर्तते। लेखनमपि स्वच्छं-स्पष्टं व्याकरणशुद्धं च प्रायेण नास्ति। रक्तवर्णादि- उपयोगः। प्रत्येकाध्यायान्ते पुष्पिकायां तथा नवीनाध्यायप्रारंभे विषयनिर्देशो कृतो न वर्तते। पीतवर्ण(हरताल) एवं कुत्रचित् कृष्णवर्णमसेरुपयोगो लिखितस्य निस्कासनार्थं कृतः।

१८) ग्रन्थः पूर्णः/अपूर्णः- ग्रन्थः पूर्णो वर्तते। अस्मिन्सम्पूर्णा संहिता प्राप्यते।

१९) श्लोकानां प्रक्षेपाः- बहूनां श्लोकानां प्रक्षेपा वर्तन्ते।

तद्ययथा- व.२-

(१) अ.२८, श्लो.क्र.-४२क पश्चात्-

यत्रैकादशगः सूर्यः चन्द्रो वा यदि लग्नगः।

(२) व.२- अध्यायः-२८, श्लो.क्र.-४२ पश्चात्-

हन्ति दोषचयं यद्वत्यापसंघं स्मृतिर्हरेः।

त्रिषष्ठालाभगो भौमः शनिं वा यदि तुङ्गगः।।

सर्वदोषा च यन्ति पापं पञ्चाक्षरी यथा।

स्वाधिमित्रगतौ भौमः शनिर्वा यदि लाभगः।।

निहन्ति दोषचयं सर्वे पिनाकी त्रिपुरं यथा।

लग्नात्रिषष्ठगः सूर्यस्तुङ्गस्थो वा भवेद्यदि।।

नाशयत्यखिलान्दोषान् स्वोदयेतिमिरं यथा।

केन्द्रत्रिकोणगः सौम्यो त्रिराश्यंशगो यदि।।

पापकेन्द्रवतं दोषं हन्ति भात्केसरी यथा।।

इत्यादयः................।

२०) विशिष्टाः पाठभेदाः- (१) अध्यायः-४८, श्लोकः क्र.-३ब पश्चात्-
पञ्चाहान्त्रिऋतावर्थलाभः पश्चान्महानुजः।।

(२) अध्यायः-५२, श्लोकः क्र.-८ब पश्चात्-

नृपान्तवृव्याधिभयं भवेदानुकूल्याय तत्सुतम्।

(३) अध्यायः-५८, श्लोकः क्र.-१अ,ब-

भूभारखिन्ननागेन्द्रशेषनिःश्वाससम्भवः।

(४) अध्यायः-५९, श्लोकः क्र.-१२१ -

तेषामास्तिक ऋषिस्त्रिष्टुप्सर्पाश्च देवताः।

नमोऽस्तु सर्पेभ्यो पयोधाराश्च कारयेत्।।१२१।।

२१) अधिकलेखनम्(मार्जिनमध्ये लेखनम्):- द्वि-त्रिपृष्ठषु पाठाद् बहिर्लिखितम्।

२२) लोपाः- समाक्षरलोपा अधिका सन्ति। एवं केवललोपाः कुत्रचित् कुत्रचिद् दृश्यन्ते।

२३) त्रुटितं-कीटकदुष्टत्वं वा :- प्राचीनत्वेन कुत्रचिद् ग्रन्थो भग्नः-त्रुटितो वर्तते।

२४) प्रारम्भः-श्रीगणेशाय नमः।

२५) अन्तिमपुष्पिका -।। आदितः श्लोकः।। इति श्रीमन् कश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रकाध्यायः।।

२६) अन्तिमपुष्पिका–अनन्तरलेखनम् :–समाप्तः।।१५०१।।

२७) हस्तप्रतस्य मापनात्प्राप्तं मानम्– पत्रदैर्घ्यं–३१.२से.मी., पत्रविस्तारः–१२.५से.मी.

२८) चतुर्भागेषु रिक्तस्थानम्(मार्जिन)– पत्रवामभागः–३.० से.मी., पत्रदक्षिणभागः–३.०से.मी., पत्र–उपरिभागः–१.५से.मी., पत्र–अधस्तनभागः–१.८से.मी.

**व.३–**

१) संक्षेपः व.३–वडोदराहस्तलिखितं तृतीयम्।

२) संस्थाया नाम –प्राच्यविद्यामन्दिरम्, महाराजा–सयाजीराव–विश्वविद्यालयः, राजप्रासादसमीपे, राजमार्गः, वडोदरा–३९०००१।

३) क्रमाङ्कः– ९२३५

४) ग्रन्थनाम– कश्यपसंहिता।

५) ग्रन्थकारः– श्रीकश्यपब्रह्मर्षिः।

६) पत्राणि–५२(१०४पृष्ठानि)।

७) लेखनसाधनम्– जीर्णानि प्राचीनानि भारतीयकर्गजपत्राणि।

८) लिपिः– देवनागरी पृष्ठमात्राप्रयोगो नास्ति।

९) एकस्मिन् पृष्ठे लेखनपङ्क्तयः –एकस्मिन् पृष्ठे प्रायेण १२पङ्क्तयो लिखिताः।

१०) एकस्मिन् पङ्क्तौ अक्षराणि– एकस्मिन् पङ्क्तौ प्रायेण ४० अक्षराणि सन्ति।

११) ग्रन्थश्लोकसंख्या –१५६०प्रायेण।

१२) लेखकः-लेखकस्य नामादिनिर्देशकविषयकमावश्यकमन्त्यपत्रमप्राप्तम्। तेन कारणादस्योल्लेखो न प्राप्तः।

१३) लेखनान्तरं शुद्धीकरणम्- न दृश्यते।

१४) तस्य समयः- लेखकस्य नामादिनिर्देशकविषयकमावश्यकमन्त्यपत्रमप्राप्तम्। तेन कारणाद् अस्योल्लेखो न प्राप्तः। एतेन लेखकस्य हस्तलिखितग्रन्थस्य च समयो निश्चितरूपेण न लभ्यते। अयं ग्रन्थो प्राचीनो दृश्यते।

१५) तस्य वैशिष्ट्याणि- अनेकवारं लिखितस्य निस्कासनं लेखकेन कृतं वर्तते। लेखनमपि स्वच्छं-स्पष्टं व्याकरणशुद्धं च प्रायेण नास्ति। रक्तवर्णादि-उपयोगः प्रत्येकाध्यायान्ते पुष्पिकायां तथा नवीनाध्यायप्रारंभविषयनिर्देशस्य कृते न वर्तते। तथानेकस्थानेषु कृष्णवर्णमसेरुपयोगो लिखितस्य निस्कासनार्थं कृतः।

१६) ग्रन्थः पूर्णः/अपूर्णः- ग्रन्थोऽपूर्णो वर्तते। अस्मिन् अपूर्णा संहिता प्राप्यते।

१७) श्लोकानां प्रक्षेपाः- अत्यन्ताल्पः श्लोकप्रक्षेपो वर्तते।

तद्यथा- व.२-अध्याय-३२, श्लोकः क्र.-११ब पश्चात्-

पराशरः- ज्येष्ठकन्यका यत्र ज्येष्ठपुत्रो वरो यदि।

व्यत्ययो वा तयोस्तत्र ज्येष्ठमासे शुभप्रदः।।

१८) विशिष्टाः पाठभेदाः-

१) अध्यायः-३८, श्लोकः क्र.-७१ पश्चात्-

उदक्सर्वविशाला सा सुखायुष्यसुतप्रदा।

सूर्ययाम्य द्विशाला सा कर्तृमृत्युप्रदा तथा।।७१।।

२) अध्यायः-४४, श्लोकः क्र.-८ पश्चात्-

कन्योदये विभिन्ने तु सर्वदा वृष्टिरुत्तमा।।

१९) अधिकलेखनम्(मार्जिनमध्ये लेखनम्):- द्वि-त्रिपृष्ठेषु पाठाद् बहिर्लिखितम्।

२०) लोपा:- समाक्षरलोपा अधिका: सन्ति। एवं केवललोप: कुत्रचित् कुत्रचिद् दृश्यते।

२१) त्रुटितं-कीटकदुष्टत्वं वा :- प्राचीनत्वेन कुत्रचिद् ग्रन्थो भग्न:-त्रुटितो वर्तते।

२२) प्रारम्भ:- श्रीगणेशाय नम:।। श्रीरस्तु।। अविघ्नमस्तु।।

२३) अन्तिमपुष्पिका - अन्त्यपत्राणि न सन्ति, अस्योल्लेखो न प्राप्त:।

२४) अन्तिमपुष्पिका-अनन्तरलेखनम् :- अस्योल्लेखो न प्राप्त:।

२५) हस्तप्रतस्य मापनात्प्राप्तं मानम्:-पत्रदैर्घ्यं-२८से.मी., पत्रविस्तार:- ११.५से.मी.

२६) चतुर्भागेषु रिक्तस्थानम्(मार्जिन)-पत्रवामभाग:-२.५से.मी., पत्रदक्षिणभाग:- २.५से.मी., पत्र-उपरिभाग:-१.५से.मी., पत्र-अधस्तनभाग:-१.५से.मी.

**पु. -**

१) संक्षेप: - पु.-पुनाहस्तलिखितं प्रथमम्।

२) संस्थाया नाम – आनन्दाश्रमसंस्था, बुधवार पेठ, पुना, महाराष्ट्र, भारतम्।

३) क्रमाङ्क:-आनन्दाश्रम:-२९३७।

४) ग्रन्थनाम- कश्यपसंहिता।

५) ग्रन्थकार:- श्रीकश्यपब्रह्मर्षि:।

६) पत्राणि-३९(७८पृष्ठानि)।

७) लेखनसाधनम्- जीर्णानि प्राचीनानि भारतीयकर्गजपत्राणि।

८) लिपि:– देवनागरी, पृष्ठमात्राप्रयोगो नास्ति।

९) एकस्मिन् पृष्ठे लेखनपङ्क्तय: –एकस्मिन् पृष्ठे प्रायेण १२पङ्क्तयो लिखिता:।

१०) एकस्मिन् पङ्क्तौ अक्षराणि– एकस्मिन् पङ्क्तौ प्रायेण ४८ अक्षराणि सन्ति।

११) ग्रन्थश्लोकसंख्या –१४०४प्रायेण।

१२) लेखक:–लेखकस्य नामनिर्देशो नास्ति।

१३) लेखनान्तरं शुद्धीकरणं– न दृश्यते।

१४) तस्य समय:– ग्रन्थान्ते लेखकस्य समयनिर्देशो न वर्तते।

१५) तस्य वैशिष्ट्याणि– अनेकवारं लिखितस्य निस्कासनं लेखकेन कृतं वर्तते। लेखनमपि स्वच्छं–स्पष्टं व्याकरणशुद्धं च प्रायेण नास्ति। रक्तवर्णस्योपयोग: प्रत्येकाध्यायान्ते पुष्पिकायां तथा नवीनाध्यायप्रारंभ–विषयनिर्देशे कृतो नास्ति। कृष्णवर्णमसेरुपयोगो लिखितस्य निस्कासनार्थं कृत:।

१६) ग्रन्थ: पूर्ण:/अपूर्ण:– ग्रन्थोऽपूर्णो वर्तते। अस्मिन् अपूर्णा संहिता प्राप्यते।

१७) श्लोकानां प्रक्षेपा:– १) अध्याय:७ श्लोक: क्र.–२ब पश्चात्– किंस्तुघ्नभाविषाग्निशस्त्रसङ्ग्रामदारुणम्।

१८) विशिष्टा: पाठभेदा: – पाठभेदा हस्तलिखितप्रते विद्यन्ते।

(१) अध्याय:१९ श्लोक: क्र.–२३

बली सङ्क्रमाणास्तद्दशात्खेटबलाधिक:।

(२) अध्याय:२२ श्लोक: क्र.–३

मङ्गलं स्थिरतोयं च वेश्मकर्म विभूषणम्।

कृषिवाणिज्यपश्वादि वृषलग्ने प्रसिध्यति।।

(३) अध्याय:३३ श्लोक: क्र.-९९क,ड

पुनात्युभयत:पुर्षान् सप्तसप्तात्र संभव:।

(४) अध्याय:३६ श्लोक: क्र.-६०ब पश्चात्-

जयदा सा प्रदा या सा यातणां न पराजय:।

(५) अध्याय:३६ श्लोक: क्र.-७६ पश्चात्-

वारुणं कालिकानाथं मणिभूपातधरं यत:।

वर्णंमकरवाहनं वायुकृष्णमृगासीनं मञ्जनापतिमव्ययम्।।

१९) अधिकलेखनम्(मार्जिनमध्ये लेखनम्):-

कुत्रचित् कुत्रचित् पृष्ठे द्वि-त्रिशब्दानि लिखितानि दृश्यन्ते।

२०) लोपा:-हस्तलिखितप्रते नैकवारं त्रुटितेन लोपो विशेषरूपेण दरीदृश्यते। सामान्यलोपोऽपि दृश्यते। अध्याय:-११ व.२-(लोप:)श्लोक: क्र.-४ एवं श्लोक: क्र.-५।

२१) त्रुटितं-कीटकदुष्टत्वं वा- ग्रन्थो भग्न:-त्रुटितो न वर्तते।

२२) प्रारम्भ:- श्रीगणेशाय नम:।। श्रीसरस्वत्यै नम:।। अविघ्नमस्तु।।

२३) अन्तिमपुष्पिका- अयं हस्तलिखितग्रन्थोऽपूर्ण: वर्तते। अन्तिमपुष्पिका नैव प्राप्यते।

२४) अन्तिमपुष्पिका-अनन्तरलेखनम् - ।। पत्रें ३९।।

क.-

१) संक्षेपः क.-(कश्मीरहस्तलिखितं) कश्मीरराज्यस्य जम्मुनगरतः।

२) संस्थाया नाम –धर्मार्थट्रस्ट, रणवीरसंस्कृतानुसन्धानसंस्थानपुस्तकालयः, शालिमार रोड, जम्मुतवी, जम्मु-कश्मीर, भारतम्।

३) क्रमाङ्कः-स्टेन क्र.-१५६।

४) ग्रन्थनाम- कश्यपसंहिता।

५) ग्रन्थकारः- श्रीकश्यपब्रह्मर्षिः।

६) पत्राणि-५०(९९पृष्ठानि)(□अप्राप्यं/लुप्तं पृष्ठसं.-२)

७) लेखनसाधनम्- जीर्णानि प्राचीनानि भारतीयकर्गजपत्राणि।

८) लिपिः- देवनागरी, पृष्ठमात्राप्रयोगो नास्ति।

९) एकस्मिन् पृष्ठे लेखनपङ्क्तयः -एकस्मिन् पृष्ठे प्रायेण १४पङ्क्तयो लिखिताः।

१०) एकस्मिन् पङ्क्तौ अक्षराणि- एकस्मिन् पङ्क्तौ प्रायेण ३५ अक्षराणि सन्ति।

११) ग्रन्थश्लोकसंख्या -१५१६प्रायेण।

१२) लेखकः-लेखकस्य नामनिर्देशो नास्ति।

१३) लेखनान्तरं शुद्धीकरणम्- लेखनान्तरं शुद्धीकरणं वर्तते।

१४) तस्य समयः- ग्रन्थान्ते लेखकस्य समयनिर्देशः सुस्पष्टं न वर्तते। प्रवीरे(वीरसंवत्=जैनधर्मसंवत्)३०। अस्यार्थः(२५०६वर्षप्राचीनतमः) ख्रिस्ताब्दं पूर्वे ४९६ वर्षे लिखितम्। सङ्केतरूपेण लेखकस्य

हस्तलिखितग्रन्थस्य च समयोऽस्पष्टरूपेण लभ्यते। अयं ग्रन्थ उपलब्धहस्तलिखितग्रन्थेषु प्राचीनो दरीदृश्यते।

**१५)** तस्य वैशिष्ट्याणि :- अनेकवारं लिखितस्य निस्कासनं लेखकेन कृतं वर्तते। लेखनमपि स्वच्छं-स्पष्टं व्याकरणशुद्धं च प्रायेण नास्ति। रक्तवर्णादि -उपयोगः प्रत्येकाध्यायान्ते पुष्पिकायां तथा नवीनाध्यायप्रारंभविषयनिर्देशस्य कृते न वर्तते। पीतवर्णस्य(हरताल) एवं कुत्रचित् कृष्णवर्णस्य मसेरुपयोगो लिखितस्य निस्कासनार्थं कृतः। कुत्रचित् कुत्रचिद् रिक्तस्थानं लोपो दरिदृश्यते। कुत्रचित् पाठाद् बहिर्विस्मृतश्लोकानां पुनर्लेखनमपि दरीदृश्यते।

**१६)** ग्रन्थः पूर्णः/अपूर्णः- ग्रन्थः पूर्णो वर्तते। अस्मिन्सम्पूर्णा संहिता प्राप्यते। किन्तु २पृष्ठस्य (पत्र सं.क्र.-४०) अप्राप्ति/लोपकारणवशाद् हस्तलिखितं सम्पूर्णतया न प्राप्यते।

**१७)** श्लोकानां प्रक्षेपाः- कस्यापि श्लोकस्य प्रक्षेपो न वर्तते।

**१८)** विशिष्टाः पाठभेदाः-

(१) अध्यायः-२४, श्लो.क्र.-६अ,ब-सुतांशे स्वौजराशौ च शुभग्रहयुते क्षिते।

(२) अध्यायः-३३, श्लो.क्र.-४१क,ड-मन्दो भूतनयो निःस्वं शुभाः पुत्रधनान्विताम्।।

(३) अध्यायः-३३, श्लो.क्र.-४८क,ड-कुरुते विधवां क्रूरा सौख्यमायुर्धनान्विताम्।।

**१९)** अधिकलेखनम्(मार्जिनमध्ये लेखनम्):- कस्मिंश्चित् पृष्ठे पाठाद् बहिर्लिखितम्।

**२०)** लोपाः- लोपः, त्रुटितं-लोपः कुत्रचित् कुत्रचित् दृश्यते।

तद्यथा-

(१) अ.-११, श्लोकः क्र.-२२ब (संयुता) तः श्लोकः क्र.-२३ड पर्यन्तम्।

(२) अ.-११, श्लोकः क्र.-५३।

(३) अ.-१२, श्लोकः क्र.-१२अ,ब।

**२१)** त्रुटितं-कीटकदुष्टत्वं वा :- प्राचीनत्वेन कुत्रचिद् ग्रन्थो भग्नः-त्रुटितो वर्तते।

**२२)** प्रारम्भः-ॐ श्रीगणेशाय नमः।।

**२३)** अन्तिमपुष्पिका -इति कश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रिकाध्याय समाप्तः।।

**२४)** अन्तिमपुष्पिका-अन्तरलेखनम् :- श्रीरामः शुभम् प्रवीरे ३०।

**पाठनिर्धारणस्य नियमाः-**

१) प्रायेण प्राचीनतमस्य पाठस्य ग्रहणं कृतम्।

२) प्रायेण व्याकरणशास्त्रानुकूलस्य छन्दःशास्त्रसंमतस्य पाठस्य ग्रहणं कृतम्।

३) प्रायेण सर्वसंमतस्य-नैकेषु हस्तलिखितेषु विभिन्नप्रदेशेषु विशेषतो बहुमान्यस्य ज्योतिषश्शास्त्राभिमतस्य पाठस्य स्वीकारः कृतः।

४) सरलस्य सुगमस्यापेक्षया कठिनस्य दुर्बोधस्य पाठस्य स्वीकरणं कृतम्।

५)	लेखकस्य सामान्यानामज्ञानतोऽकामतो समुद्भूतानां प्रमादानां दूरीकरणं कृतम्।

६)	वैदिकमन्त्राणां मूलसंशोधनपूर्वकं सम्पादनं कृतम्।

पञ्चहस्तलिखितानां मूलाधारेण कश्यपसंहितायाः समग्रस्य पाठस्य सम्पादनं कृतम्।

तत्र हस्तलिखितानां पाठभेद –पाठपरिवर्तन –पाठपरिवर्धन –पाठलोप –इत्यादिनामाधारेण वंशवृक्षो निम्नप्रकारेण प्रदर्शयितुं शक्यते–

# प्रथमो विभागः

## चतुर्थं प्रकरणम्

## कश्यपसंहिताया अध्यायानां सारः

---

**अध्यायः-१ ।। अथ शास्त्रोपनयनाध्यायः।।**

कश्यपसंहिताग्रन्थे प्रथमाध्याये शास्त्रोपनयनरूपनामकेऽध्याये द्वाविंशतिः (२२) श्लोकाः सम्मिलिताः। तत्रानुष्टुप्छन्दः प्रयुक्तः।

ग्रन्थारम्भे प्रथमं भगवतः सच्चिदानन्दस्वरूपस्य महेशस्य स्तुत्यर्थ उक्तम्। तद्यथा- "महेशाय नमस्तस्मै सच्चिदानन्दरूपिणे।

नतामरकिरीटौघप्रभाविस्फुरिताङ्घ्रये।।"

**ज्योतिषशास्त्रस्याष्टादशप्रवर्तका वर्णिताः सन्ति। यथा-**

**१)सूर्यः**

**२)पितामहः**

**३)व्यासः**

**४)वसिष्ठः**

**५)अत्रिः**

**६)पराशरः**

**७)कश्यपः**

**८)नारदः**

**९)गर्गः**

**१०)मरीचिः**

**११)मनुः** **१५)च्यवनः**

**१२)अङ्गिराः** **१६)यवनः**

**१३)रोमशः** **१७)भृगुः**

**१४)पौलिशः** **१८)शौनकः**

स्कन्धत्रयात्मकं ज्योतिषशास्त्रं वर्तते। यथोक्तास्त्रिस्कन्धाः १)सिद्धान्तम्, २)जातकम्, ३)संहिता –एते ज्योतिषशास्त्रस्य प्रधानभेदाः। तत्र विविधत्रिस्कन्धविषयस्य वर्णनम्–

**१)सिद्धान्तास्कन्धलक्षणम्(विषयाः)–**

ग्रहाणां मध्यमाभुक्तिः, स्फुटभुक्तिः, दिक्साधनं, छायासाधनं(समयसाधनं), लग्नकालसाधनं, चन्द्रार्कग्रहणसाधनम्, चन्द्रार्कग्रहणस्य परिलेखनं, ग्रहसमागमः, ग्रहाणां युद्धभेदाः, ग्रहाणां युतिः, उदयास्तसाधनं, चन्द्रशृङ्गोन्नतिः, पातवैधृतिभेदाः, भूगोलभेदाः, यन्त्रलक्षणं, विविधमानक्रिया(समयादिमानसाधनं), मानानां भेदाः, एतदाद्यस्कन्धे कश्यपेनोक्तम्।

**२)होरास्कन्धलक्षणम्(विषयाः)–**

राशिभेदाः, ग्रहाणां योनिः, वियोनिः, जन्मलक्षणम्, निषेकः(सूतिकः), जननं(जन्म), अरिष्टयोगाः, अरिष्टभङ्गयोगाः, आयुष्ययोगाः, विविधदशानां भेदः(विंशोतत्तरी–अष्टोत्तरीत्यादि), तेषामन्तर्दशाभेदाः, अष्टकवर्गः, कर्मजीविका(व्यवसायः), राजयोगाः, चान्द्रयोगाः(सुनफा–अनफा–दुर्धरेत्यादयः),

द्विग्रहोद्भवयोगाः, राशिशीलं, दृष्टिफलं, ग्रहभावफलम्, आश्रयादियोगाः, सङ्कीर्णयोगाः, स्त्रीजातकं, नेष्टयोगाः।

**३)संहितास्कन्धलक्षणम्(विषयाः)-**

शास्त्रोपनयनं, खेटचारः, ग्रहबलं, तिथि-वार-नक्षत्र-योग-तिथ्यर्ध(करणं)(पञ्चाङ्गं) लक्षणं, मुहूर्ताः, उपग्रहाः, सूर्यसङ्क्रान्तिः, गोचरफलं, चन्द्रताराबलं, षोडशसंस्काराः, क्षुरिकाबन्धनं, यात्रा, गृहप्रवेशः, वास्तुलक्षणं, राज्याभिषेकः, देवप्रतिष्ठा, वस्त्रलक्षणम्, अग्न्याध्यानं, मेघगर्भं, निखिलोत्पात (दिव्यभौमान्तरिक्षजोत्पात) लक्षणम्, उत्पातशान्तिः, मिश्रकप्रकरणम्।

एतल्लक्षणसंयुक्तं स्कन्धद्वयं(सिद्धान्त-होरा) पूर्वकृतग्रन्थे कथितम्। साम्प्रतं संहितास्कन्धं(अन्तिम-तृतीयस्कन्धं) पूर्वोक्तलक्षणसंयुक्तमादौ वक्ष्यति। अहं कश्यपब्रह्मा देहधारिणां(समस्तमानवादीनां) हितार्थे ज्योतिषशास्त्रस्य ज्ञानं वक्ष्यामि। अस्य ज्योतिषशास्त्रस्य सम्बन्धो वेदाङ्गेन सह वर्तते। अभिधेयम्-समस्तजीवानां जगतां शुभाशुभज्ञानं, ग्रह-ग्रहण-सङ्क्रान्तिः (सूर्यादिग्रहाणां), यज्ञ-अध्ययन- निरूपणं विवर्णितम्। ज्योतिषशास्त्रस्य प्रयोजनमुद्वाह-विविधक्रियाणां कालनिर्णयः(मुहूर्तः) तथा श्रौत-स्मार्तकर्माद्यखिलक्रियाकालनिर्णयः। एतद्विना न ताः सिद्ध्यन्ति।

ज्योतिषशास्त्रं ज्ञातव्यमध्येतव्यम्। तत् पुण्यायुर्यशस्करं भवति। यः पुण्यकालं वेत्ति, स तु वेत्ति परां गतिम्। कालज्ञानेऽतिकुशलस्तं देवा ब्राह्मणं विदुः।

**अध्यायः-२ ।। सूर्यचाराध्यायः।।**

कश्यपसंहिताग्रन्थे द्वितीयेऽध्याये सूर्यचाररूपनामके षट्त्रिंशत्–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं सूर्यचारस्य महत्त्वं वर्णितम्। सूर्यचारवशादेव निखिलः कालनिर्णयो भवति। चैत्रादिषु द्वादशमासेषु मेषाद्या द्वादशसङ्क्रान्तयो भवन्ति। केवलमधिमासे समागते नियमोऽयं न स्यात्। अनन्तरमधिमासक्षयमासयोर्लक्षणं प्रदिष्टम्। संसर्प–अहर्पतिरूपेण वर्णनम्। यस्मिन्मासे द्विवारमर्कसङ्क्रमणं भवति, अथवा सङ्क्रमणं नैव भवति, तदा क्रमेण क्षयमासोऽधिमासश्च भवति। एतौ मासौ सर्वकर्मसु गर्हितौ। सप्तविंशतिषु नक्षत्रेषु सूर्यचारस्य विभिन्नं फलं भवति। अर्कमण्डले दृष्टानां त्रयस्त्रिंशद्राहुसुतानां फलवर्णनं कृतम्। अर्कमण्डले विविधा महोत्पाता भवन्ति। सूर्यमण्डले तेषां विविधाकारवर्ण–ऋतु–किरण–अनुसारं विभिन्नफलवर्णनम्। एवं विविधप्रकारेण सूर्यचारानुरूपं फलं निर्दिष्टमस्मिन्नध्याये।

**अध्यायः–३ ।। चन्द्रचाराध्यायः।।**

कश्यपसंहिताग्रन्थे तृतीयेऽध्याये चन्द्रचाररूपनामके त्रयोदश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्च्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं चन्द्रचारस्य महत्त्वं वर्णितम्। चन्द्रचारस्य निखिलः शुभाशुभफलस्य निर्णयो वर्णितः। चन्द्रस्योदयास्तस्य विचारः, चन्द्रशृङ्गोन्नतिवशात् फलनिरूपणम्। मासस्य प्रतिपदाद्यास्त्रिंशत् तिथयो भवन्ति। चन्द्रस्य नक्षत्रचारवशात् फलम्। अखिलधिष्ण्येषु चन्द्रो याम्यगतः शुभः। चन्द्रस्य यवाद्याकारवशात्फलम्। विविधग्रहवशात् चन्द्रस्य हतशृङ्गस्य विविधफलनिरूपणं कृतम्। चन्द्रस्य विविधशृङ्गाकारानुसारं क्षेमारोग्यसुभिक्षादिफलं भवति।

**अध्यायः-४** **।। भौमचाराध्यायः।।**

कश्यपसंहिताग्रन्थे चतुर्थेऽध्याये भौमचाररूपनामके चतुर्दश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं भौमचारस्य महत्त्वं वर्णितम्। तस्य चारवशादेव निखिलदेहिनां शुभाशुभफलं भवति। सप्तविंशतिनक्षत्रेषु भौमस्य वक्रचारवशात् फलम्। चैत्रादिषु द्वादशमासेषु मेषाद्या द्वादशसङ्क्रान्तयो भवन्ति। विविधनक्षत्रसमूहेषु तस्य वक्रिते सति उष्ण-अस्रमुख-व्याल-रुधिर-मुसलादिसंज्ञासु फलं विविधरूपं शुभाशुभं विवर्णितम्। भौमस्य नक्षत्रेषूदग्गमने शुभफलं तथैव विपरीतेऽनिष्टफलम्। कुजस्य प्रवाल-किंशुक-अशोक-तप्तताम्रादिवर्णतः शुभफलनिरूपणम्।

**अध्यायः-५** **।। बुधचाराध्यायः।।**

कश्यपसंहिताग्रन्थे पञ्चमेऽध्याये बुधचाररूपनामके चतुर्दश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं बुधचारस्य फलं वर्णितम्। बुधस्य यदा उदयो भवति तदा प्रायेणोत्पाता आतङ्क-अवृष्टि-सङ्ग्राम-दुर्भिक्ष-अनल-अग्निभयादिकारका भवान्ति। अनन्तरं विविधनक्षत्रेषु बुधचारस्य शुभाशुभं फलं निरूपितम्। बुधस्य विविधाः प्राकृत-मिश्र-अतिदारुण-घोर-पापादिगत्यनुसारेण सप्तविंशतिषु नक्षत्रेषु बुधस्य चारस्य शुभाशुभं विभिन्नं फलं भवति। आषाढपौषवैशाखश्रावणमासेषूदितो बुधोऽनिष्टफलं ददाति। इतरेषु शुभफलदो भवति। इषोर्जमासयोर्वह्नि-शस्त्र-

दुर्भिक्षकारको भवति। वज्र–मौक्तिक–कुन्देन्दु–कुमुद–स्फटिकोपमस्तथा तारानिभो बुधः सर्वेषामभयप्रदो भवति। एवं विविधप्रकारेण बुधचारानुरूपं शुभाशुभफलं निर्दिष्टमस्मिन्नध्याये।

**अध्यायः–६ ।। गुरुचाराध्यायः।।**

कश्यपसंहिताग्रन्थे षष्ठेऽध्याये गुरुचाररूपनामक एकत्रिंशत्–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं गुरुचारस्य महत्त्वं वर्णितम्। गुरुचारवशात् प्रभवाद्याः संवत्सराः भवन्ति। कार्त्तिकादिषु मासेषु गुरोरुदयस्य शुभाशुभफलं वर्णितम्। नक्षत्राणां चारभेदेन गुरोः सौम्य–याम्य–मध्यमार्गवशात् शुभाशुभफलम्। धूमादिवर्णवशात् शुभाशुभफलम्। मेषादिषु द्वादशराशिषु गुरोः स्थितेः शुभाशुभफलं वर्णितं भवति। एवं विविधप्रकारेण गुरुचारानुरूपफलं निर्दिष्टमस्मिन्नध्याये।

**अध्यायः–७ ।। शुक्रचाराध्यायः।।**

कश्यपसंहिताग्रन्थे सप्तमेऽध्याये शुक्रचाररूपनामके चतुर्दश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं शुक्रचारस्य महत्त्वं वर्णितम्। शुक्रस्य नवप्रकारका वीथयस्त्रिषु त्रिषु नक्षत्रेषु विवर्णिताः। तासां नामानि यथा– नाग–ऐरावत–प्रख्य–वृष–धेनु–नर–मृग–अज–दहनाद्याः नववीथयः सन्ति। तत्र त्रीणि मार्गाणि सौम्य–मध्य–याम्यरूपात्मकानि सन्ति। आर्द्रादिषु नव–नवर्क्षेषु शुक्रचारस्य फलं निरूपितम्।

शुक्रस्य समीपस्थौ बुधादिग्रहाणां फलं निरूपितम्। शुक्र–गुरौ समसप्तमगतौ फलम्। चत्वारः पञ्च वैकराशिगता ग्रहास्तेषां युतिफलम्। एक–द्वि–त्रि–चतुः–पञ्चादिग्रहाणां वक्रगते सत्यनिष्टफलम्। एवं विविधप्रकारेण शुक्रचारानुरूपं फलं निर्दिष्टम्।

**अध्यायः–८ ।। शनिचाराध्यायः।।**

कश्यपसंहिताग्रन्थेऽष्टमेऽध्याये शनिचाररूपनामके द्वौ–श्लोकौ सम्मिलितौ। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये शनिचारस्यात्यल्पं वर्णनं वर्तते। तत्र कथितं यत्–

भाग्य(पु.फा.)–श्रवण–हस्त–आर्द्रा–भरणी–वायु(स्वाती)नक्षत्रेषु शनिचारस्य शुभफलं सुभिक्ष–आरोग्य–वृष्टि –आदिकारकत्वेन निरूपितम्।

**अध्यायः–९ ।। राहुचाराध्यायः।।**

कश्यपसंहिताग्रन्थे नवमेऽध्याये राहुचाररूपनामके द्वादश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं राहुग्रहस्योत्पत्तिवर्णनं कृतम्। विष्णुचक्रेण राहुशिरश्छिन्नं तथापि वरप्राप्त्या स ग्रहतां गतः। पर्वणि सूर्येन्दुग्रहणं राहुकारणात् जायते। तस्य षष्ठमासपर्यन्तं फलं भवति। तत्र सप्त पर्वेशा देवता भवन्ति। धातृ–कौबेर–वारुण–हौताश–याम्यादिदेवतानां पर्वणि विविधशुभाशुभफलं कथितम्। एकस्मिन्मासे सूर्य–चन्द्रयोर्ग्रहणद्वयं भवति तदानिष्टं फलं भवति। ग्रस्त–उदित–अस्तमितादिषु तथोत्तराण–दक्षिणायनयोर्विविधं शुभाशुभफलं वर्णितम्। ग्रहणविषयका दशविधा ग्रासभेदा

मोक्षभेदाश्च भवन्ति, किन्तु तेऽतीव सूक्ष्माः सन्ति देवा अपि न ज्ञातुं शक्नुवन्ति। तदा प्राकृतो जनः कथं ज्ञातुं शक्नोति। सिद्धान्तोक्तदिशा स्पष्टग्रहान्निश्चित्य तेषां चारान्विचिन्तयेत्। अन्ते कथितं यत् शुभाशुभफलप्राप्तेर्ग्रहचारः कारणं भवति।

**अध्यायः-१०  ।। केतुचाराध्यायः।।**

कश्यपसंहिताग्रन्थे दशमेऽध्याये केतुचाररूपनामके सप्तदश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये प्रथमं केतुनामुदयास्तमयज्ञानस्य विवर्णनं कृतम्। विविधप्रकारका दिव्य-अन्तरिक्ष-भौमरूपभेदतो ज्ञातव्याः। तैर्भुवि उत्पाता भवन्ति। अनन्तरमन्तरिक्षजा नक्षत्रजा दिव्यास्तथैव भूमिसम्भवा भौमाः केतवो वर्णिताः। एक-द्वि-त्रि-चतुः-पञ्चदिवसेषु यदा केतुर्दृश्यते तदा तद्दिनसम्मितमासैः फलं भवति। दिव्य-भौम-अन्तरिक्षजाः केतवास्तीव्रमल्पं च फलं प्रयच्छन्ति। श्वेतकेतुर्ह्रस्वः स्निग्धकेतुः सुभिक्षकृत् सुप्रसन्नो वर्तते। दीर्घकेतुर्वृष्टिकारकः। सोमसूनवः श्वेतकेतवः सुभिक्षक्षेमदा भवन्ति। अग्निसुताः केतवोऽग्निभयदाः शस्त्रभीतिदा भवन्ति। मृत्युसूनवः कृष्णकेतवो व्याधिदा भवन्ति। भूपुत्रा जलशैलाभा वर्तुलाः क्षुद्भयप्रदाः। तदन्तरं ब्रह्म- शुक्र-शनि-गुरु-बुध-वायु-कालसुताः केतवो वर्णितास्तेषां फलं च निर्दिष्टम्।

**अध्यायः-११  ।। अब्दलक्षणाध्यायः।।**

कश्यपसंहिताग्रन्थ एकादशेऽध्यायेऽब्दलक्षणरूपनामके नवति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

प्रथमं नवविधानि वर्षमानानि वर्णितानि सन्ति। तानि ब्राह्म–दैव–मानव–पैत्र्य–गुरु–सौर–सावन–चान्द्र–आर्क्ष–मानानि नवप्रकाराणि सन्ति। सौर–चान्द्र–आर्क्ष–सावनमानैश्चतुर्भिर्व्यवहारः प्रचलति। षष्ट्यब्दव्यवहारो गुरुमानेन गृह्यते। निखिलगुरुग्रहचारः सङ्क्रान्तेः कालनिर्णयो दिनरात्रिमानश्च सौरमानेन निश्चीयते। स्त्रीगर्भतो वृद्धिविधानं मृतकर्मनिर्णयो ग्रहाणां मध्यमा भुक्तिः सावनमानेन गृह्यते। भचक्रभ्रमणं मेघगर्भलक्षणं च नक्षत्रमानेन गृह्यते। उपवास–व्रत–उद्वाह–यात्रा–क्षौर–उपनयनादिधर्मशास्त्रसंस्कारादिविनिर्णयस्तिथिवर्षादिकं चान्द्रमानेन गृह्यते।

गुरुमानेन प्रभवादिसंवत्सरनामानि प्रदत्तानि। युगं पञ्चभिवर्षैर्द्वादशवर्षैर्वा भवति। तदनन्तरं युगेशानां नामानि कथितानि। युगस्य पञ्चवर्षेशाः प्रतिपादिताः। प्रत्येकस्य संवत्सरस्य नामानुसारेण फलं वर्णितम्। अत्र प्रत्येकस्य संवत्सरस्य फलादेशे विशेषतो वृष्टि–सस्य–राजा–प्रजा–सौख्यादीनां विवेचनं प्राप्यते। तदनन्तरमब्देशा–नामनुसारतः शुभाशुभफलं प्रदत्तम्।

मृगादिराशिषट्कमुत्तरायणं भवति तथैव कर्कादिषट्कं भानुभुक्तितो दक्षिणायनं भवति। रवावुत्तरायणगेऽखिलमङ्गलकर्माणि कर्तव्यानि। निखिलं मङ्गलं कर्म दक्षिणायने वर्जितं भवति। शिशिराद्या हैमन्तान्ताः षडर्तवो मकरादिषु भानुभोगाद् भवन्ति। चान्द्रमानेन पौषाद्या द्वादशमासा भवन्ति।

**अध्यायः-१२ ।। तिथ्यध्यायः।।**

कश्यपसंहिताग्रन्थे द्वादशेऽध्याये तिथिरूपनामके चतुस्त्रिंशत्-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये सर्वासां तिथीनां वर्णनं वर्तते। तासामधीशाः परिगणितास्तथैव नन्दादिभेदा वर्णिताः। प्रत्येकतिथौ किं कार्यं कर्तव्यमिति कार्याकार्यनिर्णयो वर्णितः। पूर्णिमा चन्द्रसहितानुमती तथा दिवा चन्द्रवती राका कथिता। तथैव यदामावास्या चन्द्रसहिता भवति तदा सिनीवाली ज्ञायेत्, नष्टचन्द्रामावास्या कुहूर्मता। अनन्तरं कृत-त्रेता-द्वापरयुगादीनां, कल्पादीनां तथा मन्वादीनाञ्च विवेचनं कृतम्। गजच्छाया-अखण्डा-क्षयवृद्धितिथीनां लक्षणं च कथितम्।

**अध्यायः-१३ ।। वाराध्यायः।।**

कश्यपसंहिताग्रन्थे त्रयोदशेऽध्याये वाररूपनामक एकोनविंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये सप्तवाराणां विविधक्रियाणां कर्तव्याकर्तव्यस्य विवरणं वर्तते। अत्र कथितं यत्- वारस्तिथेर्बलाधिको वर्तते। प्रतिवासरे किं कर्तव्यमित्यस्य सुस्पष्टं वर्णनं वर्तते। तदनन्तरं सूर्यादिवाराणां स्थिर-चर-द्विस्वभाव-क्रूर-लघु-मृदु-तीक्ष्णादिसंज्ञाः कथिताः। अत्र वारप्रवृत्तिर्लङ्कायां भास्करोदयात् कथिता। बलवद् ग्रहवारे कृतं कर्म सिद्ध्यति। तथैव दुर्बलवारे कृतं कर्म न सिद्ध्यति। शुभवाराश्चन्द्र-बुध-गुरु-शुक्राः सन्ति। अखिलकर्मसु प्रशंसिताः। अन्यवारेषु तत्तत्प्रोक्तं कर्म कर्तव्यम्। ग्रहाणां वर्णास्तथा तदनुसारं कर्म शुभं कथितम्। कुलिक-यमघण्ट-

अर्धयामका भानुवारादितः क्रमात् चतुर्विंशतिसंख्याका वर्णिताः। यस्य ग्रहस्य वारे यत् कर्म कथितं तत्तस्य कालहोराष्ववश्यं कर्तव्यम्।

**अध्यायः-१४ ।। नक्षत्राध्यायः।।**

कश्यपसंहिताग्रन्थे चतुर्दशेऽध्याये नक्षत्ररूपनामकेऽष्टपञ्चाशत्-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये सप्तविंशतिनक्षत्राणां विविधक्रियाणां कर्तव्याकर्तव्यस्य विवरणं वर्तते। तदनन्तरं नक्षत्राणां स्वामिनामानि कथितानि वर्तते। प्रतिनक्षत्रे किं कर्तव्यमित्यस्य सुस्पष्टं वर्णनं वर्तते। तत्राश्विनीनक्षत्रे कार्याणि प्रतिष्ठा-अश्व-विद्या-अस्त्र-कृषिकर्माणि कर्तव्यानि। तदनन्तरं नक्षत्राणां अधोमुख-तिर्यङ्मुख-ऊर्ध्वमुख-स्थिर-क्षिप्र-चर-मिश्र-तीक्ष्ण-मृदु- इत्यादिसंज्ञाः कथिताः। अत्र नक्षत्राणां स्वनामसदृशफलानि प्राप्नोति।

ततः विशेषेण-बालानां कर्णवेधः, गजकर्म, अश्वानां निखिलक्रिया, कृषिक्रिया, रोगमुक्तस्नानम्, यात्रा, त्रिपुष्करयोगः, द्विपुष्करयोगः, सर्वेषां नक्षत्राणां विविधवृक्षाणां वर्णनमध्यायेऽस्मिन्प्राप्यते।

**अध्यायः-१५ ।। योगाध्यायः।।**

कश्यपसंहिताग्रन्थे पञ्चदशेऽध्याये योगरूपनामके दश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

प्रथमं सप्तविंशतियोगानां स्वामिनः परिगणिताः सन्ति। अत्र परिघस्य पूर्वार्धं, व्यतीपातः, वैधृतिः, अष्टमचन्द्रः -एते योगाः सर्वकर्मसु गर्हिताः।

विष्कुम्भवज्रयोगयोस्तिस्रः, गण्डातिगण्डयोः षड्, व्याघाते पञ्च नाड्यो निन्दिताः सन्ति। अनन्तरमेकार्गलयोगस्य वर्जनीयत्वं कथितम्।

**अध्यायः-१६ ।। करणाध्यायः।।**

कश्यपसंहिताग्रन्थे षोडशेऽध्याये करणरूपनामके षट्-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

बवादीन्येकादशकरणानि वर्तन्ते। तत्र प्रथमं करणाधीशाः परिगणिताः सन्ति। बवादीनि षट् शुभसंज्ञानि विवेचितानि। सर्वदा मङ्गलकार्येषु भद्राकरणं परिवर्जयेत्। भद्राविषयकं विशिष्टं विवरणं सर्पाकृतिरूपकं मुहूर्ते कर्तव्याकर्तव्यार्थं निर्दिष्टम्। भद्रायाः पुच्छ एव ध्रुवो जय इत्युक्त्वा शुभफलमपि कथितम्।

**अध्यायः-१७ ।। मुहूर्ताध्यायः।।**

कश्यपसंहिताग्रन्थे सप्तदशेऽध्याये मुहूर्तरूपनामके त्रयोदश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

मुहूर्तानुसारं कार्यं कृत्वा शुभफलं प्राप्यते। दिवसस्य पञ्चदश मुहूर्तानां क्रमशो विविधदेवतासंज्ञाः प्रदर्शिताः। तथैव रात्रेरपि पञ्चदश रात्रिसंज्ञा मुहूर्तास्तेषां च रुद्रादयः पञ्चदशस्वामिनो निर्दिष्टाः। अत्र यत् कर्म नक्षत्रे कथितं तदेव कर्म तन्मुहूर्तेऽपि कार्यम्।

**अध्यायः-१८ ।। उपग्रहाध्यायः।।**

कश्यपसंहिताग्रन्थेऽष्टादशेऽध्याय उपग्रहरूपनामके द्वाविंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अत्र प्रथमं विविधयोगानां वर्णनं कृतम्। यथा-दुष्ट-क्रकच-संवर्त-दग्ध-उत्पात-मृत्यु-काण-अमृत-आनन्द-कालदण्ड-ध्वाङ्क्ष-राक्षस-सिद्धि-सिद्ध-इत्यादयोऽष्टाविंशतिविधा योगाः स्वनामानुरूपतो फलविवर्णितम्।

**अध्यायः-१९ ।। सङ्क्रान्त्यध्यायः।।**

कश्यपसंहिताग्रन्थेऽकोनविंशतिमेऽध्याये सङ्क्रान्तिरूपनामके चतुर्विंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

प्रथमं वारानुसारेण घोरादिसप्तविधसङ्क्रान्तीनां विभागो वर्णितः। तदनन्तरं सङ्क्रातिसमयानुसारेण पूर्वाह्ण-मध्यदिन-अपराह्णरूपेण विविधफलं वर्णितम्। ततो विष्णुपद-षडशीतिसङ्क्रान्तिनामानि कथितानि सन्ति। सङ्क्रान्तिवाहनानि यथाक्रमाद् वर्णितानि सन्ति। तथैव शस्त्राणि भुशुण्ड्यादीनि सङ्क्रान्तिर्बिभर्ति, तेषां नामानि वर्णितानि।

सङ्क्रान्तेर्हविष्य-पायस-भक्ष्यादिकं कथितम्। स्थिरनक्षत्रेषु विष्णुपदसंज्ञा द्विस्वभावे षडशीतिसंज्ञा घट-मेषयोर्विषुवसंज्ञा, मृग उत्तरायणसंज्ञा, कर्के दक्षिणायनसंज्ञा ज्ञेया।

अहःसङ्क्रमणे कृत्स्नं दिनं पुण्यं तथैव रात्रौ सङ्क्रमणे ज्ञेयम्। सङ्क्रान्तिकालस्य सन्निहिता नाड्यः पुण्यतमाः स्मृताः। तत्रोत्तरायण-दक्षिणायनयोरुभयोः स्नान-दानादिकस्य ग्रहणवन्महत्त्वं विद्यते। अनन्तरं राशि-नक्षत्रानुसारं शुभाशुभफलं वर्णितम्। तथा चानिष्टनिवारणार्थं होमादिकं निर्दिष्टम्।

**अध्यायः-२० ।। गोचराध्यायः।।**

कश्यपसंहिताग्रन्थे विंशतिमेऽध्याये गोचररूपनामके षोडश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अत्र प्रथमं जन्मराशितो गोचरस्य बलाबलत्वे शुभाभुभफलं कथितम्। ततो हिमाद्रिविन्ध्ययोर्मध्ये वेधजं फलं ज्ञायेत। सूर्यादीनां सर्वेषां ग्रहाणां वेधाद् गोचरफलम्। वेधाद् विद्धग्रहो किञ्चित् शुभं फलं न ददाति। तत्र वामवेधेनाशुभोऽपि ग्रहः शुभफलप्रदः। अत एव विविधान्वेधान् ग्रहज्ञो ज्ञात्वा बलाबलं च विचार्य फलं वदेत्। शत्रुणा विलोकितौ ग्रहौ निष्फलौ ज्ञेयौ। नीचस्थः शत्रुराशिस्थोऽस्तङ्गतो ग्रहः शुभाशुभफलं दातुं न शक्नोति। विषमस्थेषु ग्रहेषु शान्तिं कुर्यात्। हानि-वृद्धी ग्रहाधीने वर्तेते। तस्माद् ग्रहाः पूज्यतमाः सन्ति। तेषां सूर्यादीनां ग्रहाणां संतुष्ट्यै माणिक्यादिकं विविधं वस्तुजातं दानार्थं वर्णितं वर्तते।

**अध्यायः-२१ ।। चन्द्रताराबलाध्यायः।।**

कश्यपसंहिताग्रन्थ एकविंशतितमेऽध्याये चन्द्रताराबलरूपनामके नव-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

तत्र प्रथमं कार्यसिद्ध्यर्थं चन्द्रताराबलं महत्त्वपूर्णं वर्तते। अत एव तस्य वर्णनमत्र कृतम्। यस्य मासादीन्दुः शुभस्तस्य तत्पक्षः शुभो वर्तते। कृष्णदीन्दावशुभे तत्पक्षोऽशुभो वर्तते। शुक्लपक्षे चन्द्रो द्वि–नव–पञ्चमेषु स्थानेषु शुभो वर्तते। षड्–दशम–एकादशस्थानस्थोऽन्यैर्ग्रहैर्न विद्धस्तदा चन्द्रः शुभो वर्तते। जन्मनक्षत्रात् सम्पदादिफलं भवति। जन्मनक्षत्रात् तृतीय–पञ्चम–सप्तमतारा इष्टफलप्रदा न सन्ति। अरिष्टनिवारणाय ब्राह्मणाय छाग–गुड–लवण–तिल–काञ्चनादिकं क्रमात् प्रदातव्यम्। शुक्लपक्षे चन्द्रस्य बलं कृष्णपक्षे ताराबलं विचार्यम्। यात्रायां प्रश्नसमये चन्द्रस्य बलं विजानीयात्। प्रत्येकराशौ चन्द्रस्य द्वादशावस्थाः कथिताः। तत्र प्रवास–नष्टा–अमृता–जया–हास्या–रति–मुदा–सुप्ति–भुक्ति–जरा–कम्पा–सुस्थितिनामकाः संज्ञास्तत्तत्फलदा भवन्ति।

**अध्यायः–२२ ।। सर्वलग्नाध्यायः।।**

कश्यपसंहिताग्रन्थे द्वाविंशतितमेऽध्याये सर्वलग्नरूपनामके पञ्चचत्वारिंशत्–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

तत्र प्रथमं प्रत्येकस्य लग्नस्य तत्तत्कार्यसिद्ध्यर्थं सर्वगुणस्य ज्ञानस्य महत्त्वपूर्णं विवेचनं कृतम्। प्रथमतो द्वादशलग्नानां प्रत्येकलग्ने किं किं कार्यं कर्तव्यं यत्कृते तत् सिद्धं भवति। तत्रापि पापग्रहाणां दृष्टिर्योगो वा न भवेत् तदा कार्याणि सिद्ध्यन्ति। मिथुन–कर्क–कन्या–मीन–कुम्भ–धनुराशय एताः शुभदाः सन्ति। इतराः पापराशयः कथिताः। बुध–पूर्णचन्द्र–गुरु–शुक्राः –एते शुभग्रहाः। क्षीणचन्द्र–मङ्गल–रवि–शनैश्चराः–एते पापग्रहाः। कूरग्रहेण दृष्टा युता वा सौम्यराशिरशुभप्रदा। तथैव सौम्यग्रहेण दृष्टा युता वा क्रूरराशिः शुभप्रदा। लग्नमादौ सम्पूर्णफलदं, मध्ये

मध्यफलम्, अन्ते तुच्छफलं ज्ञायते। अनन्तरं च सेवाकार्य–पशुकर्म–चौर्य–अभिचार–प्रव्रज्या– शिल्पकर्म– नाट्यारम्भ– पण्यकर्म– जलकर्म– औषधक्रियेत्यादीनां विषये विशिष्टा योगाः कार्यसिद्ध्यर्थं प्रतिपादिताः। सर्वत्र चन्द्रस्य बलं महत्त्वपूर्णं वर्तते। लग्ने चन्द्रः सर्वत्र गर्हितो वर्तते। जन्मनक्षत्रादष्टमं लग्नमष्टमराशिश्च सदा निन्दिता। तस्मिन् कार्याणि न कर्तव्यानि। शुभग्रहाः प्रायेण षष्ठ–अष्टमस्था अशुभप्रदा भवन्ति। तथैवाशुभग्रहास्त्रिकोण–केन्द्र–व्यय–मृत्युस्थानस्था अशुभफलप्रदाः। लग्नं सर्वगुणान्वितमल्पदिवसैर्यदि न प्राप्यते तदाल्पदोषयुक्तं गुणाधिक्यसहितं ग्राह्यम्।

**अध्यायः–२३ ।। प्रथमार्तवाधानाध्यायः।।**

कश्यपसंहिताग्रन्थे त्रयोविशतितमेऽध्याये प्रथमार्तवाधानरूपनामके त्रिचत्वारिंशत्–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये नारीणां प्रथमार्तवस्य शुभाशुभफलं वर्णितम्। नारीणां प्रथमार्तवस्य शुभाशुभसमयानुसारेण शुभाशुभफलं भवेत्।

प्रश्नसमयलग्नाद् रन्ध्रस्थाने शशिस्थितिस्तथा पापग्रहेण युक्तो दृष्टो वा तदा सा नारी दुर्भगाधवा भवेत्। तिथि–वार–नक्षत्र–ग्रहयोगादिस्थित्यनुसारेण शुभाशुभफलं प्रतिपादितं वर्तते। तेषामशुभे सति होमस्तथा दानादिकं विप्रेभ्यः कर्तव्यम्। तेन दोषशमनं भवति। रजोदर्शनात् चतुर्थदिने स्त्रियः स्पृश्या भवन्ति। पञ्चमेऽहनि देव–पितृकार्यार्थे शुद्धा भवन्ति। पर्वतिथिं मूल–आश्लेषा–मघानक्षत्रं वर्जयित्वा चन्द्र ओजांशराशिके सति पुंग्रहवीक्षिते युग्मतिथौ पत्नीं कामयेत्। विपरीते योगे स्त्रीजन्म भवति। मिश्रे षण्ढस्य सम्भवः।

## अध्यायः-२४ ।। सीमन्ताध्यायः।।

कश्यपसंहिताग्रन्थे चतुर्विंशतितमेऽध्याये सीमन्तरूपनामक एकादश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्नध्याये सीमन्तसंस्कारस्य मुहूर्ताः प्रदर्शिताः। व्यक्तगर्भे पुंसवनं कृत्वा चतुर्थे षष्ठेऽष्टमे मासे वा शुक्लपक्षे रिक्तामम्मां च त्यक्त्वा रवि-मङ्गल-गुरुवासरेषु पापग्रहैर्युति-दृष्टिरहितैश्चराचरनक्षत्रे पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते मासेश्वरे बलोपेते नास्तङ्गते न ग्रहयुद्धे पराजिते, ओजांशे, ओजराशौ, शुभग्रहयुतवीक्षिते, अष्टमलग्नवर्जिते, एवमष्टमस्थानशुद्धिसहिते कर्तव्यम्।

केन्द्र-त्रिकोण-सप्तम-द्वितीय-एकादशस्थानेषु शुभग्रहाः शुभप्रदाः। पापास्त्रिषडायस्थाः शुभप्रदाः। चन्द्रः षष्ठ-अष्टम-व्ययरहितः शुभदः स्मृतः। सीमन्तलग्न एकोऽपि क्रूरग्रहः पञ्चम-अष्ट-षष्ठस्थितस्तदा सीमन्तिनीं सगर्भं हन्ति। तत्र न संदेहः। अस्तगा निचगाः शत्रुक्षेत्रस्था ग्रहा अपि न शुभप्रदाः। विपरीता उदिता मित्रक्षेत्रस्थाः खेटाः शुभावहाः। तस्मादेतत् सर्वं विचार्याधिकगुणान्वितं लग्नं निश्चिनुयात्।

## अध्यायः-२५ ।। जातकर्माध्यायः।।

कश्यपसंहिताग्रन्थे पञ्चविंशतितमेऽध्याये जातकर्मरूपनामके षट्-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन् प्रकरणे शिशोर्जातकर्मसंस्कारस्य विवेचनं वर्तते। जन्मकाले वा सूतकान्ते जातकर्म कर्तव्यम्। नामकर्माप्याभ्युदायिकपूर्वकं कर्तव्यम्। सूतकान्ते द्वादशदिने स्वस्तिवाचनपूर्वकं कुर्यात्। तत्र नाम सुश्रीयुतं तिङन्तं समाक्षरैर्युतं कार्यम्। उक्तकाले द्विजातीनां कर्तव्यम्। अतीत्यकाल उत्तरायणे कर्तव्यम्। गुरु–शुक्रयोरस्त–वार्धक्यदोषरहिते कर्तव्यम्। शुभलग्ने शुभनवमांशे शुभे दिने शुभवासरे कर्तव्यम्। चन्द्रताराबलान्वितेऽष्टमलग्न–राशिवर्जिते कुर्यात्। पूर्वाह्णे क्षिप्रनक्षत्रे चरस्थिरमृदुनक्षत्रे च कर्तव्यम्। नाम मङ्गलघोषयुक्तं तस्य जातस्य दक्षिणकर्णे वदेत्।

**अध्यायः–२६ ।। अन्नप्राशनाध्यायः।।**

कश्यपसंहिताग्रन्थे षड्विंशतितमेऽध्यायेऽन्नप्राशनरूपनामके द्वादश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन् प्रकरणे शिशोरन्नप्राशनसंस्कारस्य विवेचनं वर्तते। अयं संस्कारो जन्मकालात् षष्ठेऽष्टमे वा दशमे मासे वा वत्सरेऽपि कर्तव्यः। तत्राष्टमीं द्वादशीं रिक्तां नन्दामेवं क्षयतिथिं परिवर्जयेत्। रविशनैश्चरकुजवारांश्च त्यक्त्वा शेषे वारे कर्तव्यम्। चर–स्थिर–मृदु–क्षिप्रनक्षत्रेषु शुभदिने कारयेत्। अनिन्द्यदिने पूर्वाह्णे चन्द्रताराबलान्विते कर्तव्यम्। शुभलग्ने शुभांशे कर्मस्थानशुद्धिसंयुक्ते जन्मराशिलग्नानां नैधनेंऽशे (अष्टमस्थान)वर्जिते कर्तव्यम्। आभ्युदयिकं कर्म स्वस्तिवाचनपूर्वकं कारयेत्। शुक्लमालावस्त्रगन्धाद्यैः शिशुर्दैवज्ञमर्चयेत्। बालकं पूर्वाभिमुखं कृत्वा प्राशनं विधानतः कारयेत्। स्वर्णेन वा रौप्यद्रव्येण मङ्गलस्वनैः कारयेत्। त्रिकोण–केन्द्र–त्रि–आयेषु शुभग्रहैर्युक्तैः। तथैव पापैस्त्रि–षष्ठ–व्ययगैः शुभप्रदः। अलग्न–रन्ध्र–व्यय–शत्रुस्थानस्थितः हिमांशुर्बालकं निस्वं वा रोगिणं करोति। यदा

क्षीणचन्द्रोऽप्यन्नप्राशनलग्नगो भवेत्, तदापि भोक्तारं निस्वमेवं व्याधिसंयुक्तं करोति। शनैश्चरो वा राहुर्यद्यन्नप्राशनलग्नगो भवेत्, तदा स सदालसयुक्तं करोति –इत्यत्र न संशयः। तथैव केतुरपि कदशनं करोति। अन्नप्राशनलग्नस्थः सूर्यो वा भौमस्तदा भोक्तारं व्याधिना रिपुणा वा हन्ति। यदा पूर्णचन्द्रोऽप्यन्नप्राशनलग्ने स्थितः, तदा सम्पूर्णान्नभोक्ता भोगभागी शिशुर्भवेत्। द्वौ शुभग्रहावन्नप्राशनलग्नस्थौ, तदा भोक्ता सत्रदो भवेत्। अन्नं प्राणा हि प्राणिनां, तस्मादन्नप्राशनलग्नं विशेषतो विचिन्तयेत्।

**अध्यायः–२७ ।। चौलाध्यायः।।**

कश्यपसंहिताग्रन्थे सप्तविंशतितमेऽध्याये चौलरूपनामके द्वादश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन् प्रकरणे शिशोश्चौलसंस्कारस्य विवेचनं वर्तते। अयं संस्कारो जन्मतस्तृतीये पञ्चमे वा वत्सरे कर्तव्यः। स्वकुलाचारपरंपरया कार्यः। गुरु–शुक्रयोरस्त–वृद्धत्ववर्जिते समये कारयेत्।

रिक्तां पर्वतिथिं त्यक्त्वा अन्यशुभेऽह्नि कारयेत्। चन्द्र–बुध–गुरु–शुक्राणां वार–लग्न–षड्वर्गादिशुभा ज्ञेयाः। चौलेऽश्विनी–ज्येष्ठा–पुनर्वसु–पुष्य–हस्त–चित्रा–स्वाती–श्रवणनक्षत्राणि शुभप्रदानि।

पञ्चाङ्गशुद्धियुक्ते चन्द्रताराबलयुतेऽष्टमस्थानशुद्धेऽष्टमस्थलग्नराशिवर्जिते चौलं कार्यम्। अष्टम–षष्ठ–व्ययस्थानस्थितचन्द्रः, पापग्रहः लाभ–त्रि–शत्रुभावे स्थितः, शुभग्रहाः केन्द्र–त्रिकोण–लग्न–धन–पराक्रमगताः शुभप्रदाः।

नवान्नप्राशने(अन्नप्राशने), चौले, यज्ञोपवीते, अभिषेके -एतेषु कार्येषु जन्मनक्षत्रं शुभदं, अन्येषु त्वशुभदं भवेत्।

साधारणक्षौरकर्म पूर्वोक्त-नक्षत्र-वार-लग्नादिषु, अथवा कालहोरायां शुभदं स्मृतम्। पञ्चमे पञ्चमे दिने क्षौरं कारयेत्। क्षौरोक्तनक्षत्रेषु कार्यं, न तु निन्द्यर्क्षे कुर्यात्।

आत्महितैषिभिः स्नात्वा, भुक्त्वा, आहवे, याने, भूषिते, रात्रौ, सन्ध्ययोर्नवमे दिवसे क्षौरं न कारयेत्। विप्र-राजाज्ञयोः, विवाहे, सूतके, बन्धमोक्षणे, यज्ञाधाने सर्वेषु नक्षत्र-वारेषु क्षौरं शुभदं ज्ञेयम्।

## अध्यायः-२८ ।। उपनयनाध्यायः।।

कश्यपसंहिताग्रन्थेऽष्टाविंशतितमेऽध्याय उपनयनरूपनामके त्रिचत्वारिंशत्-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्प्रकरणे द्विजानामुपनयनसंस्कारस्य महत्त्वस्य विवेचनं वर्तते। उपनयनं संस्कारो द्विजत्वकारणं श्रौत-स्मार्तकर्मसाधकश्चास्ति। उपनयनसंस्काराद् देहसंस्कारो जायते। सर्वाश्रमाणामाद्यः संस्कारो ब्रह्मचर्याश्रमस्य देहसंस्कारः स्मृतः। अनेन संस्कारेण सर्वे पूर्वदेहिनः संस्कृताः। अस्मिन् संस्कारे लग्नशुद्धिरतीवावश्यकी। तेनात्र लग्नशुद्धिः कथिता। अयं संस्कारः गर्भकालाद् वा जन्मतोऽष्टमेऽब्दे विप्राणां क्षत्रियाणां च कार्यः। एकादशे द्वादशे वा वर्षे वैश्यानां व्रतबन्धनं कार्यम्। यदि ब्रह्मचर्यकामी, तर्हि जन्मतः पञ्चमे वर्षे वा समे वर्षे कार्यः। विप्रानुमतः कुर्यात्, अष्टमे नवमेऽपि वा। गुरु-शुक्रयोरस्त-वृद्ध-शिशुत्वं वर्जयित्वा कार्यम्। गुरु-शुक्र-भौम-बुधाः क्रमेण ऋग्वेद-यजुर्वेद-सामवेद-अथर्ववेदानां स्वामिनो ज्ञेयाः। उत्तरायणे मीनगते सूर्ये चैत्रमास

उपनयनं प्रशस्तं ज्ञेयम्। गोचरस्य प्रथम–व्यय–अष्टमस्थगुरोः पूजनात् शुभदः स्मृतः। माघादिपञ्चमासेषु यज्ञोपवीतसंस्कारः प्रशस्तः। अत्र सम्पूर्णः शुक्लपक्षः, एवं कृष्णपक्षस्य प्रतिपदादयः पञ्चतिथयः प्रशस्ताः। तत्र चतुर्थीं परित्यजेत्। द्वितीया–तृतीया–पञ्चमी–सप्तमी–दशमी–त्रयोदशीतिथयः प्रशस्ताः ज्ञेयाः। द्वादशी–एकादशी–षष्ठीतिथयः कृष्णपक्षयुता अपि मध्यमाः ज्ञेयाः। अनुराधा–श्रवण–धनिष्ठा–शतभिषा–हस्त–चित्र–स्वाती–उत्तराषाढ–उत्तराफाल्गुनी–उत्तराभाद्रपदा– रोहिणी–मृगशीर्ष–पुनर्वसु–रेवती–अश्विनी–एतानि प्रशस्तानि नक्षत्राणि ज्ञेयानि। वैनाशिकादिनक्षत्रेषु किमपि मङ्गलकार्यं न कारयेत्।

बुध–गुरु–शुक्रवासराः प्रशस्ता विज्ञेयाः। सोम–सूर्यवासरौ मध्यमौ स्मृतौ। दिनस्य त्रिभागं कृत्वा तत्र प्रथमे देवकालो द्वितीये मानवकालः, एवं तृतीये पैतृकं कार्यं कारयेत्। अनुक्तवर्ष–तिथ्यादिकाले कृतः संस्कारोऽशुभप्रदः। शाखाधिपत्यस्य बलसंयुक्तस्य वार–लग्न–नवांशकादिबलयुतस्य मुहूर्तो दुर्लभो बलवान् च। अस्मिन् मुहूर्ते व्रती विद्याधनादियुक्तो भवेत्। शाखेश–गुरु–शुक्रेषु नीचस्थेषु वा नीचांशकेषु स्थितेषु व्रती वेदादिशास्त्रवर्जितो भवेत्। शाखेश–गुरु–शुक्राः शत्रुराशिस्थास्तदा व्रत्यखिलकलाभिर्वर्जितो भवेत्। शाखेश–गुरु–शुक्राः स्वगृहस्था वा स्वगृहांशकस्था वा स्वर्क्षगास्तदा व्रती वेदशास्त्रविशारदो भवेत्। परमोच्चगते शाखेश–गुरु–शुक्रेषु व्रती धनाढ्यो वेदादिशास्त्रप्रवीणश्च भवेत्। शाखेश–गुरु–शुक्रा मित्रराशिस्थास्तदा व्रती कलाभिज्ञो वेदवेदाङ्गपारगश्च भवेत्।

यस्योपनीतलग्ने गुरु–शाखेश–शुक्राः स्युः व्रती प्रभूतविद्यायुक्तो विवाहस्त्वचिराद् भवेत्। यस्य व्रतलग्ने गुरु–शुक्रौ लग्नस्थौ तदात्यन्तविद्या–बुद्धियुक्तो

भवेत्। तथैव लग्न एवं चन्द्रेऽपि शुभवर्गे शुभग्रहेक्षिते सति तदा शुभदः, विपरीते त्वशुभप्रदः भवेत्। महादोषं परित्यक्त्वाल्पदोषयुक्ते गुणाधिक्ये पञ्चाङ्गशुद्धियुते चन्द्रताराबलान्वित उपनयनं शुभदम्।

**अध्यायः-२९ ।। समानर्तनाध्यायः।।**

कश्यपसंहिताग्रन्थे नवविंशतितमेऽध्याये समावर्तनरूपनामक एकादश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्प्रकरणे द्विजानां समानर्तननसंस्कारस्य महत्त्वस्य विवेचनं च वर्तते। गुरोराज्ञां प्राप्य द्विजानां नियतात्मनाम्। उत्तरायणे गुरु-शुक्रास्तरहिते, चैत्रमासं वर्जयित्वा माघादिपञ्चमासेषु कार्यम्। तत्र अष्टमी-नवमी-रिक्ता(४-९-१४)-मासाद्य(प्रतिपत्)-क्षय-वृद्धितिथीः हित्वा कार्यम्। जीव(गुरु)-सौम्य-भार्गववासरे शुभप्रदम्। उत्तराफाल्गुनी-उत्तराषाढा-उत्तराभाद्रपदा-अनुराधा-पुष्य-श्रवण-पुनर्वसु-रोहिणी-रेवती-ऋक्षेषु समावर्तनमीरितम्। पञ्चाङ्गशुद्धिदिवसे कार्यम्। मङ्गलघोषपूर्वकं विप्रपुण्याङ्गनादिभिः प्रशस्तम्। स्वग्रामात् प्रागुदग्भागे मृत्तिकानयनं शुभदम्। मृद्वैणवानि पञ्चपात्राण्यत्र कल्पयेत्। ब्रह्म-इन्द्र-यम-जलेश-शशिनः पात्रदेवता ज्ञेयाः। मृत्पूरितेषु पात्रेषु क्रमात् तद्देवान् अर्चयेत्। ब्रह्माणं मध्यपात्र एवमन्याश्चतुर्दिग्भागे क्रमतो प्रपूजयेत्। समन्त्रकं स्वस्तिवाचनपूर्वकं प्रपूजयेत्। (वेदोक्त)बीजवापनमनुवाकं जपित्वा मुण्डनं कारयेत्। एतदखिलं दिवा वा निशायामपि कर्तव्यम्। तेन कर्ता अभिवृद्धिं शास्त्रोक्तं फलमाप्नुयात्।

**अध्यायः-३०  ।। प्रश्नलक्षणाध्यायः।।**

कश्यपसंहिताग्रन्थे त्रिंशतितमेऽध्याये (विवाह)प्रश्नलक्षणरूपनामके षोडश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्प्रकरणे पाणिपीडनसंस्कारस्य महत्त्वं कथित्वा प्रश्नविधिपूर्वकं कन्यालाभालाभ एवं दम्पत्योर्भविष्यमाणं शुभाशुभफलं विवेचितम्।

अत्र गृहस्थाश्रमस्यातीव सुन्दरशैल्या मर्मपूर्वकं प्रारम्भः कृतः। गृहस्थाश्रमः सर्वोत्तम आश्रमो वर्तते। अस्याधारेण सर्वाश्रमाः–भूताः–प्राणिनः स्थिताः। ऋणत्रयच्छेदकारी धर्म–काम–अर्थसिद्धिदायकः। अयं संस्कारः सर्वेषु संस्कारेषु सर्वोत्तमो वर्तते।

उक्तं सर्वं शीलवृत्तान्वितास्त्रीषु(भार्याषु) स्थितम्। तत् शीललब्धिवृत्तिस्तु सुलग्नवशतो भवेत्। तस्मात् सम्यग् लग्नशुद्धिरावश्यकी।

पञ्चाङ्गशुद्धिदिने सुवासिनं सुचेष्टितं दैवज्ञं भक्त्या प्रणमेत्। ततः स्वमनोगतप्रश्नं यथा तथा पृच्छेत्। ताम्बूल–फल–पुष्पादिभिः पूर्णाञ्जलिर्भूत्वा ततो दम्पत्योर्जन्मनक्षत्र–राशिं दैवज्ञं निवेदयेत्।

तत्र प्रश्नकुण्डलीयोगायोगानां वर्णनं वर्तते। यदा चन्द्रः षष्ठाष्टमगतस्तदा वेदाष्टमवर्षे निधनं भवेत्। एको लग्नगतः पापः, अन्यपापः सप्तराशिगस्तदापि सप्तवर्षे तत्पुरुषस्य मरणं भवेत्। चन्द्रो लग्नगतस्तस्मात् सप्तमराशिगतः कुजः, तदाप्यष्टमाब्दात् पतेर्निधनं भवेत्। स्वनीचगः शत्रुदृष्टः पापग्रहः पञ्चमस्थानगतः, तदापि मृतपुत्रां वा कुलटां करोति न संशयः। लग्नात् तृतीय–पञ्चम–सप्तम–दशम–

एकादशस्थानगतश्चन्द्रो गुरुणा दृष्टः, तदा सम्पदं कुरुते सदा। प्रश्नलग्नं शशिशुक्राभ्यां युतं वीक्षितम्, एवं तत्रोदिता वृषभ–कुम्भ–कर्कराशिः तदा कन्यालाभो भवेत्। युग्मराशि–अंशगतौ शुक्रेन्दुबलिनौ लग्नगतौ तदा सम्बन्धं करोति। युग्मराश्यंशगे लग्ने स्त्रीद्रेष्काणे शशिशुक्राभ्यां वीक्षिते सति तदा कन्यालाभो भवेत्। पुंनवांशे–पुंलग्ने, पुंग्रहैर्वीक्षितयुते पुंद्रेष्काणे भवेत्, तदा वरलब्धिः स्त्रीणां भवेत्। कृष्णपक्षे शशिलग्नाद् युग्मराशिगतो, पापदृष्टो न सम्बन्धः, न षष्ठाष्टमगतस्तदाप्येवं भवेत्।

एवं निमित्त–शकुनैः फलं वदेत्। तस्मिन् अमङ्गलैर्दृष्टस्तदा दम्पत्योर्निधनं भवेत्।

**अध्यायः–३१ ।। कन्याप्रदानाध्यायः।।**

कश्यपसंहिताग्रन्थ एकत्रिंशतितमेऽध्याये कन्यावरणरूपनामके दश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन्न प्रकरणे पाणिपीडनसंस्कारसाङ्गतासिद्ध्यर्थं सप्रयोजनं कन्यावरणमुहूर्त एवं विधिः कथितः। पुत्रपौत्रप्रवर्धनार्थं कन्यावरणप्रयोजनं विवर्णितम्।

पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते, विवाहोक्तनक्षत्रे भौमवर्जितवासरे, प्रतिपत्–अष्टमी–रिक्तास्(४–९–१४) त्यक्त्वान्यदिवसे कन्यावरणं कुर्यात्।

तत्र विधिः– गन्ध–वस्त्र–ताम्बूल–फलयुक्तः, वृद्धद्विजगणैः सह कन्याकाया वरणं कुर्यात्। तथेति कन्यापिता वरणोक्तनक्षत्र–वासरे स्वस्तिवाचनपूर्वकं कुल–शील–गुणोपेताय सुरूपाय वराय कन्यकाप्रदानं कुर्यात्।

ततस्तस्यै कन्यकायै शुभ्राम्बर-विभूषणं मङ्गलघोषयुतैर्विप्राशीर्वचनैः सह दद्यात्। आदौ शचीपूजां कृत्वा पश्चात् सर्वं समापयेत्।

**तत्र शचीध्यानमंत्रः-**

सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम्।

अनर्घमणिमालाभिर्भासयन्तीं दिगन्तरम्।

विलासिनीसहस्रेण सेव्यमानामहर्निशम्।।

**एवं ध्यात्वा प्रार्थयेत्(प्रार्थनामन्त्रः)-**

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि।

विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे।।

**अध्यायः-३२ ।। एकविंशतिदोषनिरूपणम्।।**

कश्यपसंहिताग्रन्थे द्वात्रिंशतितमेऽध्याय एकविंशतिदोषनिरूपणरूपनामके नवनवती-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तः।

अस्मिन् प्रकरणे पाणिपीडनसंस्कारसाङ्गतासिद्ध्यर्थं विवाहमुहूर्तः शुभाशुभतिथ्यादि-लग्न-ग्रहबलाबलवशात् फलस्यातीव विशदं वर्णनं कृतम्। स्त्रीणां युग्मेऽब्दे विवाहः पुत्रपौत्रप्रदायकः। पुंसामयुग्मेऽब्दे श्रीप्रदः। विपरीते त्वुभयोर्मृत्युदः।

उत्तरायणगे सूर्ये मीनं चैत्रं च वर्जयेत्। मेष-वृषभ-मिथुन-कुम्भ-वृश्चिक-मकरराशिगते रवौ(सौरमानेन मासे) करग्रहं, अर्थात् विवाहं कुर्यात्। अन्यराशिगते सूर्ये कदाचिन्न विवाहः कार्यः।

तत्र मासाः शुक्रे, तपस्ये, तपसि, माधवे करग्रहं प्रशस्तम्। सह–ऊर्जमासयोर्मध्यमं ज्ञेयम्। आरभ्याद्र्धोदये भानोर्नवनक्षत्रेषु सुरस्थापनं(देवप्रतिष्ठा), उद्वाहः(विवाहः), यज्ञोपवीतं(उपनयनं) न कारयेत्। केशवो यावन्निद्रां न त्यजेत् तावन्मङ्गलं न कारयेत्। प्रबोधदिवसे विष्णोरुत्सवानन्तरं मङ्गलमाचरेत्।

सित(शुक्र)–जीव(गुरु)योरस्त–बाल–वृद्धत्वं वर्जयेत्। सिंहराशिस्थे गुरौ, एवं धन–मीनराशिस्थेऽर्केऽपि त्यजेत्। अस्त–बाल–वृद्धत्वं मृत्युप्रदं भवति। चन्द्रस्य बाल–वृद्धत्वमपि वर्जनीयम्(चन्द्रस्य बालत्वमर्धदिनं, एवं वृद्धत्वं त्रिदिनं ज्ञेयम्)। वृद्धश्चन्द्रः स्त्रियं हन्ति, अस्तस्तत्स्वामि(पति)नाशको भवेत्।

जन्ममास–नक्षत्र–तिथिषु न कर्तव्यम्। आद्यगर्भस्थयोः कन्या–वरयोर्विवाहो ज्येष्ठमासे निषिद्धः। किन्तु केवलमेकज्येष्ठः स्यात् तदा शुभदः।

सूर्य–चन्द्रयोः सर्वग्रासे(पूर्णग्रहणे)सप्तदिनं ग्रहणात्परे वर्जयेत्। खण्डग्रहणे (खण्डग्रासे) त्रिदिनं वर्जयेत्। तन्नक्षत्रमृतुत्रये वर्जनीयम्।

विवाहे गुरु–सूर्ययोर्बलमावश्यकम्। अविद्यमाने बले दम्पत्योः पूजां कृत्वा विवाहं कुर्यात्।

**अत्र बलाबलत्वे विशेषमाह**- १)अष्टवर्गजम्, २)वेधजम्, ३)गोचरम् - क्रमेण बलवत् ज्ञेयम्। एतेषु सर्वषु प्रधानं चाष्टवर्गजं बलं जानीयात्।

**पञ्चाङ्गस्य बलाबलत्वम्–**

१)तिथिः, २)वारः,३)तारा, ४)योगः, ५)करणम्, ६)मुहूर्तम्, ७)लग्नम्, ८)होरा, ९)द्रेष्काणः, १०)नवांशः, ११)द्वादशांशः, १२)त्रिंशांशः –एतत् क्रमेणोत्तरोत्तरं बलाधिकं ज्ञेयम्। किन्तु, एतत्समस्तं चन्द्रताराबलान्विते संचिन्तनीयम्।

अकालवृष्टिनीहारमेघध्वनि–महादोषविवर्जिते पञ्चाङ्गशुद्धिसंयुक्ते, स्वल्पदोषयुतं गुणाधिक्यं लग्नं शुभदं स्मृतम्। लग्नाद्या राशयः सर्वे शुभेक्षितशुभैर्युताः। सप्तमं शुद्धिसंयुक्ते शत्रुत्वं चेष्टितं बुधः। यस्य राशेः पञ्चग्रहाः बुध–गुरुणा दृष्टाः, अन्यदृष्टिरहिता वा चत्वारो ग्रहा बलान्विताः। तल्लग्नं शुभदं स्मृतम्। अस्तगाः शत्रुराशिस्थाः स्वनीचस्था युद्धे पराजिता ग्रहाः स्वफलं दातुं न शक्ताः।

**तत्र विशेषदोषाः–**

१)पञ्चाङ्गदोषः, २)सूर्यसङ्क्रान्तिः, ३)सङ्ग्रहदोषः, ४)कर्तरीदोषः, ५)षष्टाष्टरिःफगश्चन्द्रः, ६)गण्डान्तम्, ७)पापषड्वर्गः, ८)भृगुषट्कम्, ९)कुजाष्टकम्, १०)उदयास्तांशयोः शुद्धिरहित्वं, ११)दुर्मुहूर्तः, १२)दम्पत्योरष्टमं लग्नम्, १३)राशेर्विषघटीदोषः, १४)कुनवांशः, १५)वारदोषः, १६)खार्जुरिकः, १७)समाङ्घ्रिदोषः, १८)ग्रहणोत्पातनक्षत्रम्, १९)क्रूरनक्षत्रम्–विद्धनक्षत्रम् –क्रूरसंयुक्तनक्षत्रम्, २०)अकालगर्जितवृष्टिः, २१)वैधृति(–व्यतीपातः–पञ्चाङ्गयोगः) सहितो महापातः(गणितागत–सूर्यचन्द्रयोः क्रान्तिसाम्यत्वेनोत्पन्नो वैधृति–व्यतीपातयोगः)।

एते महादोषा अतीवाशुभप्रदाः। तस्माद् विवाहे विशेषेण वर्जनीयाः। पञ्चाङ्गशुद्धिरहिते लग्नोत्कर्षो निरर्थकः। प्राक्–पश्चात्सूर्यसङ्क्रान्तेर्नाड्यः(घटयः) षोडश–षोडश वर्जयेत्। शोभनकार्येषु षडशीतिर्हरेः पदं वर्जनीयम्। तत्र यत्कृतं मङ्गलं नाशं याति न संशयः।

चन्द्रोऽन्यग्रहेण युक्तस्तदा सङ्ग्रहदोषो जायते। सोऽतीवाशुभप्रदः। तेन सङ्ग्रहदोषे विवाहं नैव कारयेत्।

**सङ्ग्रहदोषफलम्**–

१) सूर्यण संयुतश्चन्द्रः– सदा दारिद्र्यदुःखदः स्मृतः।

२) कुजेन संयुतश्चन्द्रः– मरणं व्याधिं करोति।

३) सौम्येन सहितश्चन्द्रः– दम्पत्योरनपत्यतादायकः।

४) गुरुणा सहितश्चन्द्रः– सदा दौर्भाग्यदः स्मृतः।

५) शुक्रेण संयुतश्चन्द्रः– सापत्नं कुरुते सदा।

६) सौरेण सहितश्चन्द्रः– प्रव्रज्यां कुरुते सदा।

७) सैंहिकेन संयुक्तः– सततं कलहप्रदः।

८) शिखिना युतः– अतुलं दुःखदः सदा।

९) पापद्वयेन संयुक्तः– दम्पत्योर्निधनप्रदः।

**अत्रापवादः**–यदा तुङ्गस्थो मित्रराशिस्थः शुभयुक्तः शुभप्रदः।

तस्मात् सङ्ग्रहदोषं विवाहे परिवर्जयेत्।

**अथ कर्तरीदोषमाह**– लग्नाद् द्वितीये वक्रे तथा द्वादशे मार्गी ग्रहः स्यात् तदा असाधुकर्तरी ज्ञेया, अन्यथा नैव कर्तरी। कर्तरी मृत्युदा स्मृता। तत्क्रोधाद्दम्पत्योर्गलकर्तरी। अपि सौम्यग्रहोपेतं कर्तरीदोषसंयुक्तं सर्वगुणान्वितं लग्नं त्याज्यम्। दग्धकाष्ठवत् तत् त्याज्यम्। **अत्रापवादः**– चन्द्रस्य कर्तरी शुभदृष्टा तदा दोषनाशका। कर्तरीकारकग्रहौ नीच–शत्रुराशिस्थौ वा तद् द्वौ ग्रहावस्तङ्गतौ तदापि कर्तरी न दोषदा।

**चन्द्रस्य षष्टाष्टरिःफस्थदोषः**–

अनेकदोषेण युतं  लग्नं कोटिगुणान्वितमपि तल्लग्नं परिवर्जयेत्। बलिभिर्बुध–शुक्र–जीवैः संयुक्तमपि कर्तरीदोषयुक्तं कोटिगुणान्वितं लग्नमपि त्यजेत्। विप्रं यथा वेदयुतं महापातकदूषितम्।

**अत्रापवादः**–

यदा नीचराशिगतो वा नीचांशगतश्चन्द्रस्तदा चन्द्रस्य षष्टाष्टरिःफस्थदोषो न भवति।

**तिथिगण्डान्तदोषः**–

पूर्णाः पञ्चमीदशमीपञ्चदश्यस्तासामान्ते घटिकैका, तथा नन्दा प्रतिपत्षट्येकादश्यस्तासामादिभूतैका घटिका तिथिगण्डान्तं नाम। यथा पञ्चमीषष्ठ्योर्दशम्येकादश्योः पञ्चदशीप्रतिपदोर्वा तिथ्यरन्तरालवर्तिघटिद्वयं तिथिगण्डान्तमशुभम्। उद्वाहव्रतयानेषु गण्डान्तं निधनप्रदम्।

**राशिगण्डान्तदोषः-**

सिंह-कर्कयोः, वृश्चिक-धनयोः, मीन-मेषयोः सन्धी राशिगण्डान्तं कथ्यते।

अर्थात् सिंह - वृश्चिक - मीनराशीनामन्तिमार्धघटिका एवं कर्क - धन - मेषराशीनामाद्यार्धघटिका राशिगण्डान्तं स्मृतम्। गण्डान्तमन्तरालनाडिका निधनप्रदाः।

**नक्षत्रगण्डान्तदोषः-**

आश्लेषा-मघयोः, रेवती-अश्विनीयोः (एवं ज्येष्ठा-मूलयोः) सन्धिगतयोः षोडशांशोऽशुभप्रदः। निन्दितं शुभकार्येषु विषसंयुक्तदुग्धवत्। अपि सौम्यग्रहोपेतं लग्नं सर्वगुणान्वितं तदापि त्रि-गण्डान्तेन युक्तं तत् त्याज्यम्।

**षड्वर्गस्य विभागः-**

त्रिंशदंशैर्लग्नमानं, होरा तस्यार्धं, लग्नस्य त्रिभागो द्रेष्काणो, नवमांशो नवांशकः, द्वादशांशो द्वादशांशः, त्रिंशांशस्त्रिंशदंशको भवति।

**राशीनां स्वामयः-**

सिंहस्य सूर्यः, कर्कस्य शशी, अज(मेष)कीट(वृश्चिक)योर्भौमः, कन्या मिथुनयोर्बुधः, चाप(धन)-अन्त्य(मीन)योः गुरुः, वृषभतुलयोः शुक्रः, मृग(मकर) कुम्भयोः शनिः।

**षड्वर्गफलम्-**

दुर्लभा शुभषड्वर्गा तथा तेषां नवांशकाः। एकस्मिन् पापवर्गेऽपि षड्वर्गो मङ्गलप्रदः। पापवर्गैः प्रदुष्टं लग्नं गुणान्वितमपि त्यजेद्यथानधीतं द्विजं तथा।

**भृगुषट्को दोषः-**

लग्नाद् षष्ठगते सिते भृगुषट्को दोषो भवति। त्यजेद्  यथा पुरोडाशं वायसोपहतं तथा। अस्यापवादः-नीचराशिगते, तत्तुरीये, शत्रुक्षेत्रगते तदा भृगुषट्को दोषो नास्ति तत्र न संशयः।

**कुजाष्टमो दोषः-**

लग्नाद् अष्टमगे भौमे दोषेऽप्यष्टकुजः समः। तेन दोषेण दुष्टं तल्लग्नं सर्वगुणान्वितं, पञ्चेष्टिकं शुभैर्युक्तं, जामित्रगुणयुक्तेऽपि त्यजेत्। यथा कुलसतीं परपुरुषरतां तथा। अस्यापवादः-यदा भौमोऽस्त-नीच-शत्रुक्षेत्रगतस्तदा कुजाष्टमोद्भवो दोषो न किञ्चिदपि विद्यते।

**उदयांशशुद्धिः-**

अत्र त्रिविधा उदयास्तशुद्धिर्यथा-

१) यदा लग्नांशेशो लग्नांशस्तस्येशः स्वामी लवं(द्यूनं-सप्तमं) नवमांशं पश्यति वा नवमांशेन सह युतो तदा बहु शुभफलं रचयति।

२) द्यूनस्वामी लग्नं पश्येत् लग्नेशो मदनं सप्तमभवनं पश्यति सप्तमभवनेन सह युतो वा भवेत्तदा वध्वाः शुभम्।

३) इतरथा यदा लग्नांशेशो लवं(सप्तमं) तनुं(प्रथमं) वा न पश्यति तत्र युतो वा न स्यात्तदा वरस्याशुभं मृत्युः स्यात्। यदा त्वस्तांशेशोऽस्तांशं

अस्तभवनं(सप्तमं) प्रथमं वा पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभम्। इति त्रिविधा उदयास्तविचाराः, तदनुसारेणोदयास्तशुद्धिर्मङ्गलप्रदा।

**वारमुहूर्ताः-**

आदित्यादिषु वारेषु ये निन्दिता मुहूर्तास्ते न ग्राह्याः। तेन दोषेण दूषितं लग्नं गुणयुक्तमपि त्यजेत्। अस्यापवादः-यदा त्रिग्रहैः शुभैर्युक्तस्तदा सर्वदोषनाशको भवेत्।

**कालकूटाख्य(अष्टमलग्न) दोषः-**

दम्पत्योरष्टमं लग्नं राशिं वापि तदंशकोऽतीवाशुभप्रदः। तत् त्यजेत् कालकूटाख्यं विषवद्वा प्रयत्नतः।

**द्वादशलग्नांशदोषः-**

दम्पत्योर्द्वादशलग्नं राशिः, अंशश्च विवाहेऽशुभप्रदाः। तेन दोषेण दूषितं लग्नं दम्पत्योर्निःसत्त्वप्रदमेवमुभयोः कलहकारकं भवेत्।

**अस्यापवादः-**

जन्मलग्नस्येवमष्टमस्य स्वामी एकग्रहो वा मित्रः स्यात् तदा दोषो न भवति।

स्वजन्मलग्नं स्वजन्मराशिमपि विवाहलग्ने परिवर्जयेत्। जन्मराशि-लग्नादुपचय (३-६-१०-११)राशिः शुभप्रदा।

**विषघटीदोष(विषनाडी):-**

विषनाडीदोषेण दूषितं लग्नं शुभैः सर्वैश्च संयुक्तमपि पञ्चेष्टिकं त्यजेत्।

**शुभनवांशः-**

तुला-मिथुन-कन्या-धनराशीनां नवांशकाः श्रेष्ठाः। किन्त्वन्त्यांशकाः स्युस्तदा वर्जयेत्। अन्त्यांशका अपि श्रेष्ठा यदा वर्गोत्तमाः स्युः। अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः। कुनवांशयुक्तं लग्नं त्यजेत्।

**कुलिकः-यमघण्टः -अर्धप्रहरः(अर्धयामः)-**

एते कुयोगाः शुभे कर्मणि (देशभेदतो) विवर्जयेत्। फलम्-यमघण्टेऽर्थहानिर्भवति। यामार्धे कुलनाशनं जायते। एतैर्वारदोषैर्दुष्टं सर्वगुणान्वितमपि तल्लग्नं त्यजेत्। त्यजेद्यथा पुरोडाशं वायसोपहतं तथा।

ग्रहणोत्पातनक्षत्रदूषितं लग्नं परिवर्जयेत्। मणिहेममयं हर्म्यं भूताक्रान्तमिव त्यजेत्। क्रूरविद्धं क्रूराक्रान्तं नक्षत्रमपि त्यजेत्। अकालमेघध्वनिना वृष्ट्या दूषितं लग्नं सर्वगुणैर्युक्तमपि तं त्यजेत्। त्यजेदनर्घमाणिक्यं कलङ्कोपहतं यथा। महावैधृतिपाताभ्यां दूषितं लग्नं त्यजेत्। राजावधूतपुरुषं यद्वत्तत्सम्परित्यजेत्। एकोऽपि महादोषो गुणलक्षं हन्ति। तेन तं विशेषेण परिवर्जयेत्। यथा-

**हन्त्येकोऽपि महादोषो गुणलक्षं न चेद्गुणः।**

**तद्विरोधात्पञ्चगव्यघटं मद्यलवो यथा।।**

## अध्यायः-३३ ।। विवाहाध्यायः ।।

कश्यपसंहिताग्रन्थे त्रयस्त्रिंशतितमेऽध्याये विवाहाध्यायरूपनामके शताधिक-चतुर्दश-श्लोकाः सम्मिलिताः। तत्र अनुष्टुप्छन्दः प्रयुक्तः, किन्तु श्लोकक्र.३८-३९-४० त्रिष्टुप्छन्दो दृश्यते।

अस्मिन्प्रकरणे पाणिपीडनसंस्कारसाङ्गतासिद्ध्यर्थं विवाहमुहूर्तस्य शुभाशुभं तिथ्यादि-लग्न-ग्रहबलाबलवशात् फलस्य विशदं वर्णनं तथा जलयन्त्रशङ्कुयन्त्रविवाहवेदी-आदीनां वर्णनं कृतम्। पञ्चाङ्गदोषयुक्ते लग्ने सर्वे केन्द्रगताः सौम्यग्रहोद्भवाः सुयोगा नाशमायान्ति। सङ्क्रान्तिदोषगे लग्ने सौम्यखेटोद्भवा गुणा नाशं यान्ति। चन्द्रस्य सङ्ग्रहदोषयुक्तं लग्नमपि त्यजेत्। कर्तरीदोषगं लग्नमशुभप्रदं तेन तं परिवर्जयेत्। लग्नात् चन्द्रस्य षष्ठाष्टरिःफस्थाने स्थितिरप्यशुभप्रदा तेन वर्जयेत्। गण्डान्तदोषेण दूषितलग्नमप्यनिष्टदम्। पापषड्वर्गगे लग्ने गुणाः सर्वे लयं ययुः। लग्नात् षष्ठगते शुक्रे सर्वे गुणा व्यर्था भवन्ति। लग्नादष्टमगतो भौमो गुणवृन्दान् बहून्हन्ति। उदयांशयोः शुद्धिर्हीने लग्ने सर्वगुणौघं हन्ति। दुर्मुहूर्तो लग्नगतः शुभखेटोद्भवान् गुणान्हन्ति। विषनाडीभवो दोषो लग्नगः सकलान्गुणान् नाशयति। दम्पत्योरष्टमं लग्नं राशिर्वा यदि लग्नगा, तदाखिलान्सर्वान् गुणान्हन्ति। कुनवांशे लग्नगतेऽपि ग्रहोद्भवा गुणा लयं यान्ति। वारदोषेण दुष्टं लग्ने शुभकेन्द्रगते गुणा नाशमायान्ति। खार्जूरिकदोषेण युक्ते लग्ने सद्गुणा नाशमायान्ति। पातग्रहणर्क्षे च क्रूरविद्धे संयुते वा लग्ने सर्वे गुणा लयं यान्ति न संशयः। विद्युन्नीहार-प्रत्यर्क-परिवेश-इन्द्रधनुर्-लतोपग्रह-चण्डीशतिथयो मासदग्धकास्तिथयो दग्धलग्न-अन्धपङ्गुकाणसंज्ञाश्च राशयो दिग्दाहधूमबधिरमासशून्याश्च राशयः- एते सर्वे मङ्गले

दोषप्रदाः। तेन ते दोषाः प्रयत्नेन परिवर्जयेत्। किन्तु, नीहार–विद्युत्–प्रत्यर्क–परिवेश–इन्द्रचापाः कालजाश्चेन्न दोषजाः।

**दोषपरिहारः–**

गुरु–शुक्र–बुधानामेकोऽपि केन्द्रगतस्तदा दोषान्हन्ति।

**देशभेदेन दोषः–**

सौराष्ट्रदेशे साह्ये च लोहिताभं, चण्डीशचण्डायुधं वङ्गदेशे, वाल्हीके–कुरुदेशे उपग्रहं, कलिङ्गदेशे दग्धलग्नानि, मासदग्धाश्च तिथयो मध्यदेशे, काणपङ्ग्वन्धबधिरमासशून्याश्च राशयो गौडमालवयोस्त्याज्याः। अन्यदेशे न गर्हिताः। अनुक्तास्त्वखिला दोषा मध्यदेशे वर्जयेत्। निखिलेष्वपि देशेषु महादोषाश्च गर्हिताः।

जलयन्त्रेण लग्नकालनिर्णयः कार्यः। तत्र जलयन्त्रस्वरूपं कथितम्। अथवा द्वादशाङ्गुलशङ्कुना लग्नकालनिर्णयः कार्यः। अन्योन्यवीक्षणमपि लग्नसाधनेन कार्यम्।

**लग्नवेदीस्वरूपमाह–**

हस्तोच्छ्रितां, हस्तचतुष्टयेन सुविस्तृतां गृहस्य वामभागे कर्तव्या। तत्र मण्डपं स्तम्भचतुष्टयेन युक्तं कार्यम्। सोपानरथ्यां तु विवाहवेदीम्। वितानननानाविधतोरणाद्यैः, चित्र–विचित्रकुङ्कुमचित्रैश्चित्रितैः कुम्भैः सुशोभिता वेदी कार्या।

**विवाहकुण्डलीयोगफलम्-**

१) लग्नस्थौ सूर्य-चन्द्रौ विधवां करोति। मन्द-भूतनयौ निस्वां, शुभाः पुत्रधनान्वितां कुर्वन्ति।

२) द्वितीयस्थानगताः सूर्यभौममन्दराहुकेतवो दुःशीलां सदैव कुर्वन्ति। सैन्दवः सौम्याः कुर्वन्ति धनपुत्रिणीम्।

३) तृतीयस्थानगाः सर्वे ग्रहा विवाहितां स्त्रियं भोगभाग्यपुत्रपौत्रसमन्वितां कुर्वन्ति।

४) चतुर्थस्थानगाः पापाः सदा विधवां कुर्वन्ति। शुभग्रहाश्चन्द्रयुताः सौख्यायुर्धन-पुत्रिणीं कुर्वन्ति।

५) पञ्चमस्थानगाः पापखेटाः पुत्र-वित्तविनाशका भवेयुः। शुभग्रहाः पुत्रवतीं धनिनीं सतीं कुर्वन्ति।

६) षष्टगः पापः पुत्रारोग्यधनान्वितां करोति। चन्द्रो विधवां करोति। सित-गुरु-सौम्या गदान्वितां कुर्वन्ति।

७) सप्तमगाः सर्वे ग्रहाः शीघ्रतो दम्पत्योर्मरणं कुर्वन्ति यद्वा एकस्य न संशयः।

८) अष्टमगाः सौम्या दुःशीलां कुर्युः। सचन्द्रकुजो विधवां कुरुते। क्रूरः सौभाग्यायुर्धनान्वितां करोति।

९) नवमस्थानगाः क्रूरा द्वयोः कलहं कुर्वन्ति। सौम्याः सचन्द्राः सत्पुत्रां धनधान्यायुरन्वितां कुर्वन्ति।

१०) दशमस्थानगाः क्रूरा मलिनालसं कुर्वन्ति। सौम्याः सचन्द्राः श्रीपुत्रधनधान्यायुरन्वितां कुर्वन्ति।

११) लाभस्थानगाः सर्वे ग्रहा दम्यत्योरायुरारोग्यपुत्रधान्यार्थसञ्चयं कुर्वन्ति।

१२) व्ययस्थानगाः क्रूरा व्ययशालिनीं कुर्वन्ति। चन्द्रो विधवां करोति। सौम्याः पत्युद्धितां कुर्वन्ति।

एकोऽपि आचार्यः (गुरुर्बुधः शुक्रो वा) लग्नगः केन्द्रगो वा निखिलदोषनाशकः। बलवान्केन्द्रगः सौम्यो दोषशतत्रयं हन्ति। सप्तं विहाय दैत्येज्यः सहस्रदोषनाशकः। लक्षदोषान् बृहस्पतिर्नाशयति। पापषड्वर्गदोषं तथा दुर्निमित्तजं दोषं लग्नगो गुरुर्हन्ति। केन्द्र-त्रिकोणगा गुरु-शुक्र-बुधाः सकलान्दोषान् निहन्ति। एकादशगः सूर्यो वा चन्द्रः सर्वदोषनाशको भवेत्।

शुभग्रहः केन्द्रगस्तदा तिथिवासरनक्षत्रयोगतिथ्यर्धसम्भवान्, काणान्धबधिरोद्भूतान्, दग्धलग्नतिथेर्भवान्, दुर्दिनप्रतिसूर्यन्द्रचापनीहारोद्भवान् दोषान् नाशयति। त्रिविधोत्पातजं दोषं केन्द्रस्थः शुभग्रहः शुभेक्षितो ग्रहो नाशं करोति। लत्तोपग्रहचण्डीशचन्द्रजामित्रसम्भवा दोषाः केन्द्रगो गुरुर्हन्ति। वर्गोत्तमगते लग्ने वोपचयगतश्चन्द्रः सर्वदोषनाशको भवेत्।

**राशिकूटमष्टविधं स्मृतम्। तद्यथा-**

**(१)गणः, (२)योनिः, (३)ग्रहमैत्री, (४)वर्णः, (५)वश्यम्, (६)तारा, (७)नाडी, (८)भकूटम्।**

**गणः-**

स्वस्वगणे प्रीतिः श्रेष्ठा जायते। देव-मानवे मध्यमं भवेत्। मर्त्यराक्षसयोर्वैरमसुरसुरयोरपि।

**नाडी**-

त्रिरेखा विरच्य तस्योपरि अश्विन्यादिनक्षत्राणि न्यसेत्। एकरेखा(एकनाडी) तदा मृत्युर्दम्पत्योर्जन्मधिष्ण्ययोः। अतिमृत्युप्रदा मध्यनाडी नाद्या न च पार्श्वयोः।

**योनिः**-

दम्पत्योः स्वस्वयोनावतिप्रीतिः, अन्यथा द्वयोः कलहो भवेत्। गोव्याघ्रम्, आखुमार्जारम्, मृगसिंहम्, मेषकपिम्, महिषाश्वम् - मृत्युदं स्मृतम्। व्यवहारेण यथा शत्रुत्वं लोकावर्जयन्ति, तेनैवात्रापि शत्रुत्वं हितकाम्यया त्यजेत्।

एकराशौ पृथङ्नक्षत्रे श्रेष्ठम्, अन्यथा नेष्टं स्मृतम्। दम्पत्योरेकनक्षत्रराशौ विवाहो मरणप्रदः।

**वर्णः**-

पुरुषवर्णतो हीनवर्णः स्त्रीवर्णः शुभदः स्मृतः।

**राशिः**-

स्त्रीराशितः पुरुषराशिपर्यन्तं गणने षष्ठाष्टकराशिर्दम्पत्योर्मरणप्रदा। द्विद्वादशं निःस्वप्रदं जानीयात्। अपत्यहानिर्नवपञ्चमे भवेत्।

**तत्रापवादः-**

एकाधिपे मित्रभावे सर्वे दोषा लयं ययुः। अर्थाद् दम्पत्यो राशिस्वामिमित्रं वा एकाधिपतिः, तदा षडष्टकं नवपञ्चमं द्विद्वादशं पुत्रपौत्रदमतीव शुभदं स्मृतम्।

**ग्रहाणां मित्रामित्रत्वम्-**

सूर्यस्य- मित्रः- चन्द्रः, मङ्गलः, गुरुः। समः-बुधः। शत्रुः-शुक्रः, शनिः।

चन्द्रस्य- मित्रः-रविः, बुधः। समः-मङ्गलः, गुरुः, शुक्रः, शनिः। शत्रुः-न कोऽपि शत्रुः।

भौमस्य- मित्रः-सूर्यः, चन्द्रः, गुरुः। समः-शुक्रः, शनिः। शत्रुः-बुधः।

बुधस्य- मित्रः-शुक्रः, शनिः(अन्यमतेन सूर्यः)। समः-सूर्यः(अन्यमतेन शनिः), भौमः, गुरुः। शत्रुः-चन्द्रः।

जीवस्य- मित्रः-सूर्यः, चन्द्रः, मङ्गलः। समः-शनिः। शत्रुः-बुधः, सितः।

शुक्रस्य- मित्रः-बुधः, शनिः। समः-गुरुः, कुजः। शत्रुः-सूर्यः, चन्द्रः।

शनैश्चरस्य- मित्रः-शुक्रः, बुधः। समः-गुरुः। शत्रुः-रविः, इन्दुः, भौमः।

अत्र राहु-केत्वोर्मित्रामित्रत्वं न कथितम्।

अष्टविधेषु विवाहेषु चत्वारो मुख्याः सन्ति। १)प्राजापत्यः, २)ब्राह्मो, ३)दैवः, ४)आर्षः संज्ञकाः क्रमतो श्रेष्ठाः। एते चत्वारो विवाहा उक्तकाले कर्तव्याः। शेषाः विवाहाः- ५)गान्धर्वः, ६)असुरः, ७)पिशाचः, ८)राक्षसः देशकालानुसारेण स्मृताः।

अनया कन्यया धर्मपालनपूर्वकं श्रोत्रियाय विनीताय प्रदीयते तदास्माकं षड्वंश्यं पुनाति। स एव प्राजापत्यो विवाहः स्मृतः।

आहूय शक्त्यलङ्कृता कन्या दीयते, तदा उभयोरेकविंशतिपुरुषान् पुनाति। स एव ब्राह्मो विवाहः स्मृतः।

यदि विशिष्टे यज्ञकर्मणि कन्या दीयते, तदा उभयोः सप्तपुरुषान् पुनाति। स एव दैवो विवाहः स्मृतः।

गोद्वयं गृहीत्वा वेदविदुषे कन्या दीयते, तदा उभयोः षट्पुरुषान् पुनाति। स एव आर्षः विवाहः स्मृतः।

राक्षसो विवाहो युद्धेन कन्यकाहरणे भवेत्, पैशाचः कन्यकाच्छलात् भवेत्। असुरो द्रविणादानेन भवति, गन्धर्वो मिथः समयात् भवेत्।

**अभिजिल्लग्नम्**–

सूर्याच्चतुर्थं लग्नं (लग्नाद् दशमस्थानस्थितोऽर्कः) अभिजिल्लग्नं कथ्यते।

मध्यन्दिनगते सूर्ये वाभिजिल्लग्नं सम्भवेत्। तदर्को दोषौघं निहन्ति यथा पिनाकी त्रिपुरं हन्ति।

**गोधूलिकलग्नम् –**

सूर्यात् सप्तमं लग्नं (लग्नात् सप्तमस्थागतोऽर्कः) गोधूलिकलग्नं स्मृतः। आर्याणां मागधानां च गोधूलिकं मुख्यं मतम्। मुख्यमभिजिल्लग्नं सर्वदेशेषु स्मृतः।

कन्याद्वयस्य वा पुत्रद्वयस्य विवाहो ऋतुत्रये –वर्षार्धमध्ये न कर्तव्यः। यदि क्रियते तदा वर्षेण तत्रैका विधवा भवेत्, न संशयः। किन्तु एकजन्मानः(यमलयोः) सहोदरपुत्रपुत्र्योर्विवाह एवं मण्डनान्तरं मण्डनं शुभदम्। तत्र एकजन्मे भिन्ने सहोदरपुत्रपुत्र्योर्विवाहो एवं मण्डनान्तरं मुण्डनं अशुभप्रदम्। मुण्डनान्तरं द्वितीयमुण्डनं, एवं मङ्गले मङ्गलोत्तरं न कर्तव्यम्। सहजयोः सोदरयोर्भ्रात्रोः सहोदरकन्यके नोद्वाह्ये। प्रत्युद्वाहोऽपि न कारयेत्।

मूलनक्षत्रजातौ कन्यासुतौ स्वश्वशुरं हन्युः। आश्लेषानक्षत्रजातौ कन्यासुतौ स्वस्वसारं हन्युः। किन्तु, मूलान्त्यपादे तथा आश्लेषाद्यपादे न दोषः।

ज्येष्ठानक्षत्रोत्पन्ना कन्या भर्तुर्ज्येष्ठभ्रातरं(ज्येष्ठं) हन्ति। विशाखानक्षत्रोत्पन्ना कन्या भर्तुः कनिष्ठबन्धोर्नाशकर्त्री भवति। अर्थात् द्विदैवोत्था(विशाखानक्षत्रोत्पन्ना) कन्या देवरं हन्ति।

**नववधूप्रवेशः-**

षष्ठेऽष्टमे नवमे दशमे दिने नक्षत्रोदये(रात्रौ) स्त्रीप्रवेशः शुभप्रदः।

**अध्यायः-३४ ।। श्राद्धाध्यायः ।।**

कश्यपसंहिताग्रन्थे चतुस्त्रिंशतितमेऽध्याये श्राद्धाध्यायरूपनामके त्रिंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेण अनुष्टुप्छन्दः प्रयुक्तः, किन्तु श्लोकक्र.-३० त्रिष्टुप्छन्दो दृश्यते।

अस्मिन्प्रकरणे नराणां पुनर्दहनकालनिर्णयपूर्वकं नानाविधश्राद्धविवरणं तथा पुण्यप्रदश्राद्धयोगानां विशिष्टं विशदं च विवेचनं दृश्यते। एते सफलश्राद्धयोगाः

श्राद्धमुहूर्ता अन्यज्योतिषशास्त्रीयवराहादिसंहिताग्रन्थेषु न दृश्यन्ते। तिथि–नक्षत्रादिवशाद् विशिष्टयोगानां सफलं वर्णनमस्मिन्नध्याये विशेषतः प्राप्यते।

**नराणां पुनर्दहनम्–**

शुक्र–गुरुर्वस्त–बाल–वृद्धत्व–नन्दा–चतुर्दशी–भद्रा–शुक्रार्कवासर–धातृपैतृवि–षमाद्यङ्घ्रिधिष्ण्यं त्यक्त्वा, दक्षिणायने वा उत्तरायणे, कृष्णपक्षेऽपराह्णे, पापग्रहबलान्विते, चन्द्रताराबलान्विते कर्तव्यम्।

द्वादशाहे, मासे, त्रिपक्षे, अर्धवत्सरे वा वत्सरे सपिण्डीकरणं शुभदम्। त्रिपादनक्षत्रे, भृगोर्वारे, नन्दायां(१–६–११), त्रिपुष्करयोगे, नैधनर्क्षे, रेवतीरोहिण्योः श्राद्धं कर्तारं नाशयति।

भृगोर्वारे, नन्दायां(१–६–११), त्रिपुष्करयोगे, नैधनर्क्षे, कृत्तिकानक्षत्रे, पाते(व्यतीपाते–वैधृतौ) पिण्डदानं कुलविनाशकम्।

कृत्तिकानक्षत्रे, भृगोर्वारे, नन्दायां(१–६–११), पार्वणश्राद्धं न कारयेत्। एतत्सर्वं विचिन्त्य जितेन्द्रियः श्राद्धं कुर्यात्। भाद्रपदमासे सुतैः स्वपितन्प्रतिभक्तिपूर्वकं विशेषतया श्राद्धं कुर्यात्। शस्त्रहतस्य श्राद्धं चतुर्दश्यां कुर्यात्।

**श्राद्धे तिथ्यादीनां विशेषयोगाः–**

१) द्वितीया अश्विनीयुता तदा पितणां तुष्टिप्रदः श्रीवत्सयोगो भवेत्।

२) तृतीया भरणीयुता तदा श्रीप्रदो नन्दावर्तयोगो जायते।

३) चतुर्थी भरणीयुता तदा भोगदः शङ्खयोगो भवेत्।

४) पञ्चमी भरणी युता तदा गयाश्राद्धफलदः स्वस्तिकयोगो भवेत्।

५) कन्यागतगते सूर्ये सप्तम्यादिषु त्रिषु तिथिषु, शेष–ऋक्षे(आर्द्रानक्षत्रे) चन्द्रः, तदा पितृकल्याणयोगो भवेत्। तद्दिने स्वपितन्प्रति द्विजेभ्योऽन्नं दत्तं तदक्षयं भवेत्। तेन पितरो नित्यतृप्तास्ते कृतकृत्या न संशयः।

६) सप्तम्यां कृतं श्राद्धं सर्वसम्पत्प्रदं, नवम्यां कृतं श्राद्धं सर्वकामफलप्रदं भवेत्।

७) दशम्यां पुष्यनक्षत्रेऽमितयोगो भवेत्। तत्रार्चने धनधान्यं लभेन्नरः।

८) द्वादश्यां पितृनक्षत्रे(मघा) आनन्दयोगो भवेत्। तदार्चनादनन्तनुण्यफलम्, विद्यावान्धनवान्भवेत्।

९) त्रयोदश्यां कृतं श्राद्धं धनप्रदम्। गजच्छायायुता त्रयोदश्यनन्तपुण्यफलदा भवेत्।

१०) अमावास्यां कृतं श्राद्धं पक्षश्राद्धफलप्रदम्। किन्तु उत्तराफल्गुनीयुक्तामावास्या श्राद्धकर्तृविनाशकी।

११) पूर्वात्रये(पू.फा.,पू.षा.,फ.भा.)–श्रवण–धनिष्ठा–शतभिषा–अनुराधा–ज्येष्ठा–मूल–पुष्य–आश्लेषा–मघा–अश्विनी–हस्त–चित्रा–स्वाती–भरणी–मृगशीर्षनक्षत्रेषु कृतं श्राद्धं कर्तुः सुखायुर्धनदं भवेत्।

## अध्यायः-३५ ।। छुरिकाबन्धनाध्यायः ।।

कश्यपसंहिताग्रन्थे पञ्चत्रिंशतितमेऽध्याये छुरिकाबन्धनाध्यायरूपनामके त्रयोदश–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे नरेन्द्राणां(क्षत्रियवर्णानां)विशेषरूपेण छुरिकाबन्धनविषयकं वर्णनं विशदीकृतम्। विवाहात्प्राक् छुरिकाबन्धनं शुभम्। विवाहोक्तमासादिषु, नास्तगे सिते गुरौ कुर्यात्। व्रतोक्तदिन–ऋक्षेषु कुजवर्जितवासरे, शुक्लपक्षे, शुभलग्ने, शुभांशे, पूर्वाह्णे, चन्द्रताराबले सति छुरिकाबन्धनं कर्तव्यम्। तत्र नैधनोदयं (अष्टमराशिं) वर्जयेत्। अष्टमस्थानशुद्धियुक्ते, चन्द्रे लग्न–षष्ठ–द्वादशस्थानरहिते, त्रिकोण–केन्द्र–स्वत्र्यायगैः शुभखेचरैः, तृतीय–षष्ठ–लाभगैः पापैः छुरिकाबन्धनं शुभं भवेत्।

छुरिकाबन्धने पितृ–ग्रहदेवता भक्त्या समर्चयेत्। अर्चितदेवता–सन्निधावक्षतादिभिश्छुरिकार्चनमन्यशस्त्रास्त्रमखिलं तद्वदर्चयेत्। भक्तिसंयुतः, सुलग्ने विप्राशीर्वचनैः सह लक्षणोपेतछुरिकाबन्धनं शुभम्।

खड्गस्य आयो विस्तारेण छेदयेत्। प्राप्तलब्धेरष्टभागं कुर्यात्। तदा क्रमादष्टध्वजाद्यायाः भवन्ति। तत्फलम्–

१)ध्वजः– शत्रुक्षयः।

२)धूम्रः–मरणम्।

३)सिंहः–विजयः।

४)श्वा–नीरोगत्वम्।

५)वृषभः–राज्यम्।

६)खरः–दुःखम्।

७)गजः–सुखम्।

८)ध्वाङ्क्षः–अर्थनाशः।

यदायं प्राप्नोति तस्योपर्युक्तं फलं ज्ञायेत्। ततोऽङ्गुलैर्गणयेत्। तत्र एकादशेन तु छेदयेत्। तद्गणने यच्छेषस्तत्प्रमाणेन निम्नोक्तं फलं प्राप्नुयात्–

१–मृत्युः, २–आपत्तिः, ३–पुत्रहानिः, ४–स्त्रीलाभः, ५–गमनम्, ६–यशः,

७–अर्थहानिः, ८–धनम्, ९–शत्रुक्षयः, १०–सन्धिः, ११–श्रुतिः(विद्या)।

छुरिकाया अग्रभागे व्रणः स्यात्तदा जयप्रदम्। मध्यभागे तु हानिकारकं भवेत्। अन्त्यभागे व्रणे निधनप्रदम्।

**अध्यायः–३६ ।। यात्राध्यायः ।।**

कश्यपसंहिताग्रन्थे षट्त्रिंशतितमेऽध्याये यात्राध्यायरूपनामके शतं–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते। अस्मिन्प्रकरणे राज्ञां(नृपतीनां) (सामान्यजनानाञ्च) यात्राविषयकं वर्णनं विशदीकृतम्। राज्ञां सामान्यजनानाञ्चाभीष्टफलसिद्ध्यर्थं यात्राज्ञानं ग्रन्थकारो ब्रह्मर्षिकश्यपो मार्मिकं वर्णनं करोति।

घुणाक्षरन्यायेन(घुणा–उधई–इति देशभाषायां)काष्ठं भक्ष्यति, तदा तस्य काष्ठभक्षणे काष्ठोपरि काष्ठभक्षणचिह्नानि भवन्ति, तानि चिह्नानि कदाचिद्दैववशाद् राम इत्यादीन्यक्षराण्यपि भवन्ति, स एव घुणाक्षरन्यायः। अज्ञातजन्मनां जनानां कदाचित् (काकतालीयन्यायवत्) सुख्यस्य प्राप्तिर्जायते, न तु सर्वदा। प्रश्नोदयान्निमित्तादिना यात्रायां शुभाशुभफलोदयो जायते। यात्रासमये माङ्गल्यवस्तूनि (ब्राह्मणः, गौः, हुताशनः, हिरण्यः, सर्पिः, आदित्यः, आपः, राजा), शुभधान्याक्षतादीनि –एतेषां दर्शनं वा श्रुतिर्यात्राफलदायकी भवति। यात्री पृष्ठतो मानोरथं स्यात्, तदा प्रष्टुर्यात्रा जयदा भवेत्।

**पराजयप्रदयुद्धयात्रा**- यदा शुक्रः सम्मुखः, अस्तङ्गतः, नीचराशिगः, ग्रहयुद्धे पराजितः, वक्रङ्गतः, कलुषितः(मलिनकिरणैर्युतः), तदा युद्धयात्रिकं राज्ञां पराजयप्रदं भवति।

**मृत्यु-धननाशिकीयात्रा**- अष्टमी-द्वादशी-षष्ठी-रिक्ता(४-९-१४)-पूर्णिमा-मासादि(शुक्लप्रतिपद्)तिथिषु यात्रा मृत्युकरा निर्धनत्वं च करोति।

**दिक्शूलम्**- मन्द(शनि)-इन्दु(सोम)दिनयोः(वारयोः) प्राच्यां गमनं वर्जयेत्। गुरोर्वारे दक्षिणदिशं त्यजेत्। शुक्र-अर्कवारे प्रतीचीं(पश्चिमां) दिशं न गच्छेत्। बुध-भौमवारयोरुत्तरदिशं वर्जयेत्।

**शूलरूपाणि**- ज्येष्ठा-पू.भा.-रोहिणी-उ.फा.-नक्षत्राणि पूर्वादिक्रमाद् दिशायां शूलरूपकाणि भवन्ति। किन्तु अनुराधा-अश्विनी-पुष्य-हस्तनक्षत्राणि सर्वासु दिक्षु शुभदानि स्मृतानि।

अग्निधिष्ण्यादि(कृत्तिकादि)सप्तधिष्ण्यां पूर्वादिक्रमतो दिग्द्वारनक्षत्राणि सन्ति। वायुकोणे तथा अग्निकोणे रेखादण्डः स्यात्। अर्थात् पूर्वदिग्द्वारनक्षत्रेषु उतरस्यां गमनम्, एवं दक्षिणदिग्द्वारनक्षत्रे पश्चिमगमनं शुभं, किन्तु वायव्य-अग्निकोणरेखां न लङ्घयेत्।

यदा कोणे(विदिशायां) गमनं कर्तुमिच्छाति, तदा पूर्वदिग्द्वारनक्षत्रेषु आग्नेयां गमनं कुर्यात्। एवं दक्षिणदिग्द्वारनक्षत्रेषु नैर्ऋत्यां गमनं कुर्यात्। पश्चिमदिग्द्वारनक्षत्रेषु वायव्यां गमनं कुर्यात्। उत्तरदिग्द्वारनक्षेषु ईशान्यां गमनं कुर्यात्। मेषाद्या

राशयस्त्रिरावृत्या पूर्वादिक्रमतः स्थिताः। यथा– (१)पूर्वे–१–५–९ (२)दक्षिणे–२–६–१० (३)पश्चिमे–३–७–११ (४)उत्तरे–४–८–१२ –अयं चन्द्रवासो ज्ञायेत्।

**दिक्स्वामिनो ललाटयोगश्च–**

| | |
|---|---|
| १)पूर्वा–सूर्यः। | ५)पश्चिमा–शनिः। |
| २)आग्नेय्या–शुक्रः। | ६)वायव्या–चन्द्रः। |
| ३) दक्षिणा–भौमः। | ७)उत्तरा–बुधः। |
| ४)नैर्ऋत्या–राहुः। | ८)ईशाना–बृहस्पतिः। |

दिगीश्वरग्रहमस्तकोपरि–ललाटस्थः, तदा यातुर्मृत्युर्न संशयः।

दिनेशाधिष्ठितराशिर्यदा लग्नगा, तदा मरणप्रदा। प्राच्यां दिशि यात्रायां सूर्यो लग्नगः(ललाटगः), तदा मरणकारको भवेत्। आग्नेय्यकोणे यात्रायां शुक्रो यदा द्वादश–एकादशस्थानगः, तदापि मरणं भवेत्। याम्यदिग्यात्रायां भौमः कर्मे स्थितः, तदापि निधनं भवेत्। नैर्ऋत्यदिग्यात्रायां राहुरष्टम–नवमभावगतः, तदापि यातुर्निधनप्रदः। पश्चिमदिग्यात्रायां शनैश्चरः सप्तमस्थितः, तदापि प्राणनाशको भवेत्।

वायव्यदिग्यात्रायां चन्द्रः पञ्च–षष्ठस्थानगः, तदापि प्राणघातको भवेत्। उत्तरस्यां दिशि यात्रायां चन्द्रपुत्रः(बुधः) चतुर्थस्थानगः, तदापि गच्छेद् यममन्दिरम्। ईशानदिग्यात्रायां गुरुः द्वितीय–तृतीयभावगतः, तदापि प्राणनाशो भवेत्। ललाटयोगरहिता यात्रा अभीष्टफलसिद्धिप्रदा भवेत्। इत्थं ललाटयोगसम्भवे कृता यात्रा प्राणघातकी भवेत्। युद्धे पराजित ग्रहो वा वक्रगतिग्रहो यदा यात्रालग्नगः, तदापि

यात्राभङ्गप्रदा भवेत्। स्वजन्म–राशिलग्नाद् अष्टम–द्वादशराशिर्यात्रालग्ने गता तदापि भङ्गप्रदा।

पापग्रहेणेक्षितयुतं द्विस्वभावलग्नमपि भङ्गदम्। स्थिरलग्नान्यपि नेष्टफलदानि। शुभग्रहेक्षितं लग्नं शुभदं स्मृतम्।

**पञ्चकविचारः–**

धनिष्ठादिपञ्चनक्षत्रे(पञ्चके) तृणकाष्ठयोः संग्रहो, याम्यदिग्यात्रा, गृहगोपनं न कारयेत्।

राहुभात् पञ्चदशनक्षत्रं, केतुग्रहपूर्वकात् पञ्चदशनक्षत्रं, त्रयोदश–त्रयोदशधिष्ण्यानि उभयोः पार्श्वयोः, गुरोर्भात् पञ्चदशभं परापरभागे यात्रा मृत्युकारकी भवेत्। यात्रायां चन्द्रो यायी सूर्यो स्थायी वर्तते। एतद् वशात् जय–पराजयमाप्नोति।

**शत्रुक्षयकारकयोगः–**

स्वजन्मलग्नं राशिर्वा यात्रालग्नगा वा तदीशो यात्रालग्नगो वा ताभ्यामुपचये यात्रालग्नं स्यात्तदा यात्री राजा शत्रुक्षयं करोति।

**अन्योऽपि शत्रुक्षययोगः–**

यात्रालग्ने शुभग्रहाणां वर्गो वा यात्रालग्नं दिग्द्वारि स्यात्,अथवा शीर्षोदयराशयः(५,६,७,८,११राशयः) तदानीं शत्रुसंक्षयः।

**अपरो योगः–**

शत्रुनैधनलग्ने(अष्टमलग्ने) वा यायी शत्रुक्षयस्तदा भवेत्।

**नेष्टफलदा यात्रा–**

मीनलग्ने वा तदंशे(मीननवांशे) वा यात्रालग्नगो वक्रग्रहो वा कुम्भलग्नमेवं कुम्भनवमांशं वा जललग्ने जलांशकेऽपि यात्रा नेष्टफलदा भवेत्।

**द्वादशस्थान(भाव)संज्ञा–**

१.मूर्तिः, २.कोशः, ३.धन्वी(धनुःपराक्रमः), ४.वाहनम्, ५.मन्त्रः, ६.शत्रुः, ७.मार्गः, ८.आयुः, ९.मनः, १०.व्यापारः, ११.प्राप्तिः, १२.अप्राप्तिः(व्ययः)।

तृतीय–एकादशं त्यक्त्वा पापग्रहा अन्यभावे नाशका भवेयुः। सूर्यभौमौ न विघ्नतः, तदा सर्वव्यापारः(क्रियाः) शुभदा ज्ञेयाः। यात्रालग्ने शुक्रोऽस्तभावे(सप्तमे), चन्द्रो लग्ने वाष्टमेऽशुभप्रदः।

**अभिजिन्मुहूर्तम्–**

अष्टममुहूर्ते(मध्याह्ने) योऽभिजित्स्यात्, तत्र याम्यदिग्गमनं वर्जयित्वा यातणां अभीष्टफलसिद्धिर्भवेत्। तदाभिजिन्मुहूर्तेऽनुक्तदिने वारे नक्षत्रेऽपि यात्रा फलदा भवेत्।

शुभग्रहयोगवशाद् यात्रा चित्र–विचित्रशुभफलदा भवेत्। तद्योगा वर्णिताः। यात्रा नृपतीनां योगवशात् विप्राणां नक्षत्रवशादितराणां (वैश्य–शूद्राणां) मुहूर्तबलाबलवशात्, तस्काराणां शकुनेन फलदा भवेत्। एकोऽपि गुरुः शुक्रो बुधो वा केन्द्रे वा त्रिकोणे(१,४,७,१०,५,९भावे) स्थितः, तदा योगो भवति। कावपि द्वौ गुरुः शुक्रो बुधो वा केन्द्रे वा त्रिकोणे(१,४,७,१०,५,९भावे) स्थितौ, तदा अतियोगो भवति। सर्वे गुरुशुक्रबुधाः केन्द्रे वा त्रिकोणे(१,४,७,१०,५,९भावे) स्थिताः तदा योगातियोगो भवति। योगे गमने क्षेम, अतियोगे जयोन्नतिः, योगातियोगे यातणां विजयार्थविभूतयः।

**जयलक्ष्मीप्रदयोगः-**

लग्नस्थः सूर्यः, कर्मे चन्द्रः, शत्रुभावगतः शनैश्चरः स्यात्तदा जयलक्ष्मीप्रदा यात्रा भवेत्।

**अन्यशत्रुहन्तृयोगः-**

शुक्र-गुरु-शनि-भौमग्रहाः जाया-आय-लग्न-त्रि-शत्रुभावगतास्तदा यायी राजा शत्रून्हन्ति।

**अपरो योगः-**

गुरुर्लग्ने स्थितः, शेषग्रहा लाभभावगतास्तदा राजा रिपुसेनानाशको भवेत्। शुक्रे लग्नगते सूर्ये लाभगे चन्द्रे सप्तमे गते, तदा राजा रिपून्हन्ति, केशरीवेभसंहतिम्। लग्नस्थ उच्चगः शुक्रश्चन्द्रो लाभगस्तदा राजा शत्रून्हन्ति, केशवः पूतनामिव। शुभाः(गु.शु.बु.चं.) त्रिकोण-केन्द्रगाः पापाः त्रि-अरि-आयगास्तदारिलक्ष्मीप्राप्तिपूर्वकं शत्रून्हन्ति। नवम-षष्ठ-लग्नगौ चन्द्रसूर्यौ यदा स्थितौ, तदा यायी राजाग्रे रिपुवाहिनी खलमैत्रीवन्न स्थिरा भवेत्, शत्रुसेना नाशमायाति। कुजार्किनौ(भौमशनैश्चरौ) त्रि-षड्-आयेषु शुभौ बलवन्तौ(उच्च-स्वराश्यादिसहितौ लाभादिस्थाने स्थितौ) स्यातां तर्हि यात्रायां तस्य नृपतेर्हस्ते शत्रुमेदिनी भवेत्। स्वोच्च-केन्द्रगतो बुधः, लाभगः सूर्यः स्यात्, तर्हि गतो राजा रिपून्हन्ति यथा पिनाकी त्रिपुरं हन्ति। यदा शुभग्रहयुता शीर्षोदयराशिः यात्रालग्नगा, तदा गतो राजा रिपून्हन्ति यथा कुमारो(कार्त्तिकेयं) तारकम्(असुरनामविशेषम्)। शुभ-दिग्राशिलग्नगते, लाभस्थिते सूर्ये गतो राजा दहत्यरिं यथा कृत्स्नवर्मेन्धनम्।

शुभग्रहो लग्नगः, कुज उपकुलधिष्ण्यगः, तदा राजा शत्रुनाशको भवेत्। शुभग्रहास्त्रिकोणगाः, सूर्यचन्द्रौ वा लाभगौ तदा राजा शत्रून्हन्ति, अन्धकारं रविर्यथा। शुभग्रहाः स्वराशिगाः, चन्द्रस्त्रिकोणाय(५,९,११)भावगः, तदा गतो राजा विनाशत्यरीन् यथा अनिलस्तूलसङ्घम्। स्वक्षेत्रगश्चन्द्रः, शुभग्रहाः केन्द्रगाः, तदा गतो राजा रिपुनाशको भवेत्, यथा पञ्चाक्षरी मन्त्रः (ॐ नमः शिवाय) पापान्हन्ति। वर्गोत्तमलग्नगतः शत्रुमित्रराशिस्थो गुरुः स्यात्तदा गतो राजा शत्रुनाशको भवेत्, यथा ज्ञानोदये कर्मनाशो भवेत्। शुभो ग्रहो वर्गोत्तमलग्नगतः, तदापि गतो राजा रिपून् हन्ति, यथा हरिस्मरणात् पापनाशो भवेत्। चन्द्रो वर्गोत्तमगः, शुभग्रहः केन्द्रगतः, तदा गतो राजा शत्रुगोत्रान्हन्ति, यथा गोत्रयुद्धे सगोत्रिणं हनेत्। शुभग्रहाः स्वमित्रराशिगाः केन्द्रलाभत्रिकोणगाः (१,४,७,१०,५,९,११) तदा गतो राजा शत्रून्हन्ति, यथा गरुडः सर्पम्।

वर्गोत्तमगतः सूर्यो लाभस्थानगतः, तदा गतो राजा रिपून्हन्ति पापान्भागीरथी यथा। (निम्नोक्त) राजयोगे गतो राजा शत्रून् जेतुं याति, तत्र यायी कोपाग्निः शत्रुयोषितामश्रुवृष्टिभिः शान्तिमुपैति। आश्विनशुक्लदशमी सर्वदा विजया स्मृता। (युद्ध)यातणां जयदा वा सन्धिकारकी, न पराजयस्तदा भवेत्। ननु मनोनिमित्तशकुनैर्लग्नं, तल्लग्नाद् रिपोर्विजयसहितां श्रियं विजयांक्षिको प्राप्नोति। निमित्त-(मुहूर्त)शकुनादिभ्यः (समयानुकूलता शुभचिह्नादिभ्यः) मनोजयः (आत्मविश्वासः) प्रधानो वर्तते। मनोजयात् यायिनां यात्रा फलसिद्धिदा भवेत्।

**यात्रानिषेधः-**

उपनयन–उत्सव–विवाह–प्रतिष्ठा–सूतक(मरण–जननसूतकं)समाप्तिपर्यन्तं यात्रा जिजीविषुर्न कुर्यात्।

**अन्योऽपि निषेधः–**

वस्त्रादीनां चलिते, क्रोधे, कलहे, कलहार्तवे, महिषतुरगैर्युद्धे रुरुकेन क्षुतौ यात्रा न कर्तव्या।

**आदौ विजयादिप्राप्त्यर्थे दोषशमनार्थे भक्ष्यपदार्थाः–**

क्रमात्पूर्वादिषु दिक्षु निम्नोक्तपदार्थान् भुक्त्वा यायी राजा यात्रां चरेत्, तदा राजा शत्रून् जयेत्।

१)पूर्वे–अन्नम्(पक्वान्नम्)।

२)पश्चिमे–तिलपिष्टान्नम्।

३)उत्तरे–मत्स्यान्नम्।

४)दक्षिणे–घृतपायसम्।

**क्रमाद् रविवारादिष्वपि विशेषः–**

१)रविवारे–मञ्जिकाम्।

२)सोमवारे–पायसम्।

३)कुजवारे–आज्यम्(घृतम्)।

४)बुधवारे–काञ्जिकम्।

५)जीववारे–पयसो दधिम्।

६)सितवारे–दुग्धम्।

७)शनिवारे–तिलोदनम्।

**क्रमाद् अश्विन्यादिषु नक्षत्रेष्वपि विशेषः-**

(१)अश्विनी-कुल्माषः(यवविशेषः)। (२)भरणी-तिलाः।

(३)कृत्तिका-तण्डुलम्। (४)रोहिणी-दधि।

(५)मृगशीर्षम्-गोघृतम्। (६)आर्द्रा-पायसम्।

(७)पुनर्वसु-मृगमांसम्। (८)पुष्यम्-मृगरक्तम्।

(९)आश्लेषा- पायसम्। (१०)मघा- रजकान्।

(११)पू.फा.- मृगिणीमांसम्। (१२)उ.फा.- शशमांसम्।

(१३)हस्तः-षाष्टिकम्(अक्षतविशेषः)। (१४)चित्रा- प्रियङ्गवः।

(१५)स्वाती- अपूपम्। (१६)विशाखा- चित्राण्डम्(मयूराण्डम्)।

(१७)अनुराधा- फलम्। (१८)ज्येष्ठा- कूर्मम्।

(१९)मूलम्- सारसम्(पक्षीविशेषः)। (२०)पू.षा.- गोधा।

(२१)उ.षा.- शाही(शालिनी/शाहू/शाहूडी-जीवविशेषः)।

(२२)अभिजित्- ओदनम्। (२३)श्रवणम्- कृसरं(पक्वतिलोदनम्)।

(२४)धनिष्ठा- मोदकान्नम्। (२५)शतभिषा(शततारका)- यवान्नम्।

(२६)पू.भा.- मत्स्यभोजनम्। (२७)उ.भा.- चित्रान्नम्।

(२८)रेवती- दध्यन्नम्।

ततो गणेश्वरान्, विप्रान्, दिक्पालान् प्रपूजयेत्। हुताशने (तद्दिक्पालानादिदेवान्) तिलैर्हुत्वा, देव–गुरु–द्विजान् नत्वा, विप्राशीर्वचनैः सह प्रसन्नचित्तो भूत्वा मङ्गलस्वनैर्यात्रा कर्तव्या। (अग्रे वक्ष्यमाण)मन्त्रोक्तां सुवर्णदिक्पालमूर्तिं कृत्वा तद्देवता वर्ण–वस्त्र–गन्धादिनार्चयेत्।

**१)पूर्वदिक्स्वामीन्द्रदेवेशः–**

ऐरावतारूढं हस्ते वज्रधर्तारं, शचीपतिं सुवर्णवर्णं सहस्राक्षं दिव्याभरणभूषितं पूर्वे इन्द्रं प्रपूजयेत्।

**२)अग्निदिक्पतिरग्निदेवः–**

स्वाहा(अग्नेर्पत्नी)प्रियं, मेषारूढं, षडक्षं, स्रुक्स्रुवायुधं, सप्तजिह्वं, सप्तपात्रधारकं, रक्तवर्णजिह्वम् आग्नेयां हुताशनं प्रपूजयेत्।

**३)याम्य(दक्षिण)दिक्पतिर्यमदेवः–**

दण्डपाणिं(आयुधरूपं), रक्तनेत्रं, सर्वाभरणभूषितं, वैवस्वतं, महातेजस्विनं, महिषारूढं, यमं याम्यां प्रपूजयेत्।

**४)नैर्ऋत्यदिक्पतिर्निर्ऋतिदेवः–**

दीर्घग्रीवापतिं, नीलवर्णं, नरवाहनम्, ऊर्ध्वकेशं, विरूपाक्षं, खड्ग–चर्मधरं, प्रभुं, नैर्ऋत्यां निर्ऋतिदेवं प्रपूजयेत्।

**५)प्रतीचीदिक्पतिर्वरुणदेवः-**

वरुणं, कालिकानाथम्, अनर्घ्यमणिभूषितं, नागपाशधरं, पीतवर्णं, मकरवाहनं वरुणं प्रपूजयेत्।

**६)वायव्यदिक्पतिर्वायुदेवः-**

वायुं कृष्णमृगासीनम्, अञ्जनीपतिम्, अव्ययं, दण्डपाणिं शुक्लवर्णं जन्तूनां प्राणरूपं वायव्यां वायुं प्रपूजयेत्।

**७)उत्तरदिक्पतिः कुबेरदेवः-**

अश्वारूढं, कुन्तपाणिं, चित्रलेखापतिं, प्रभुं, धनाधीशं, स्वर्णवर्णं, यक्षगन्धर्वनायकमुत्तरस्यां प्रपूजयेत्।

**८)ईशानदिक्पतिः महादेवः-**

गौरीपतिं चन्द्रमौलिं शुद्धस्फटिकसन्निभं, पिनाकिनं वृषारूढं सर्वाभरणभूषित-मैशान्यामीशानं(रुद्रं) प्रपूजयेत्।

यात्रायां प्रतिकूलतावशाद् यदा नृपतिः स्वयं प्रयाणेऽशक्तस्तदा छत्र-ध्वज-अश्व-वस्त्र-अक्षतादिभिः स्वस्थानात् निर्गममुहूर्ते शतद्वयं वा शतं वा दश दण्डानां प्रस्थानं कर्तव्यम्।

प्रस्थानत एकस्थाने राजा दश दिनानि, मण्डलेश्वरो नव दिनानि, इतरे जनाः सप्त दिनानि, परे पञ्च दिनानि वा व्रजेयुः। अकालतो(कालहीने)दोषे (वर्षा-विद्युत्-उल्कादिके) त्रिरात्रं न व्रजेत्।

**ततो यात्रासमये शकुनानि–**

यात्रायां शिवः, बलाका, कुक्कुरः, कपोतः, स्वर्णचक्षुः(पक्षीविशेषः), चञ्चुका, गर्दभः, वराहः, कूर्मः, गोधा, अङ्गिराः –एतेषां दर्शनादिकं यात्रायां शुभफलदम्। यियासतो वामभागे, दक्षिणभागे गुरुपाच्छुभाः। प्रदक्षिणगतिर्जीवं विनान्यपक्षिणः शुभाः। वामभागे कृष्णं विना सर्वे चतुष्पादाः शुभाः। यात्रायां कृकला–साहा–गोधा–शशानां कीर्तनं शुभं, किन्तु वेक्षणं नेष्टदम्। कपि–ऋक्षयोः कीर्तनं वेक्षणं शुभम्। पारावत–छाग–बभ्रु–चाषादीनां निरीक्षणं प्रायेण शुभदम्। किन्तु एतत्सर्वं प्रवेशे व्यस्तं(अशुभदं) भवेत्। रोदनवर्जितशवे यात्रायां कार्यसिद्धिर्जायते, किन्तु प्रवेशे मृत्युर्न संशयः।

**यात्रासमयेऽशुभशकुनानि–**

औषधं, क्लीबः, रुधिरं, जटिलः, उन्मत्तः, पापी, अभ्यक्तः, अङ्गारः, काष्ठाह्विः, चर्म, अन्धः, स्तुषरोगी, तैलं, कार्पासं, लवणं, गुडं, क्षारं, तृणं, उरगः, कषायः, कुब्जः, अपादः, मुक्तकेशः, बुभुक्षितः, सनग्नः, मुण्डः, दुष्टः, शकुनः – एतेषां दर्शने यात्रा नैव फलप्रदा (अशुभफलदा) भवेत्।

**यात्रासमये शुभशकुनानि–**

भद्रासनं, तारकः, तुरगः, प्रज्वलाग्निः, पुराङ्गना, गन्धः, अक्षताः, पुष्पम्, चामरम्, दोलिकः, नृपः, फलम्, भक्ष्यपदार्थाः, इक्षुः, शस्त्रम्, अन्नम्, मधु, आज्यम्, दधि, गौः, वृषः, धौतवस्त्रम्, सुरा, मांसं, मत्स्यः, माला, दर्पणं, द्विजः, शृङ्गारपदार्थाः,

रत्नम्, पुण्याङ्गना, पूर्णकुम्भः, उत्सवः, मृदङ्गः, शङ्खः, पटहः, भेरी, वीणा, राग–गीतादिध्वनिः प्रयाणसमये प्राप्ते यायिनां कार्यसिद्धिदाः।

यदा यात्रासमये यायी विरुद्धशकुनं पश्यति, तदा आवश्यकयात्रायां प्राणायामत्रयं कुर्यात्। तदापि पुनर्विरुद्धशकुने षट् प्राणायामाः कर्तव्याः। तथाप्यशुभमेव शकुनं दृश्यते तदा पुनः प्राणायामाः, शान्त्या यायाद् दिनान्तरे वा पुनरागम्य अन्यदिने यात्रा कर्तव्या।

यात्रायां क्षुतमशुभप्रदं, गोक्षुतं निधनप्रदं, किन्तु बालक–वृद्ध–पीनस–कपटपूर्वकं क्षुतं निष्फलदम्। विरुद्धशकुने प्राप्ते गवां स्पृशेत्। धनं चामरविप्राणां योद्धान् हन्यांश्च नेतरान्।

**अध्यायः–३७ ।। प्रवेशाध्यायः ।।**

कश्यपसंहिताग्रन्थे सप्तत्रिंशतितमेऽध्याये प्रवेशाध्यायरूपनामके नव–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे गृहप्रवेशविषयकं वर्णनं विशदीकृतम्। सौम्यायने नवसद्मप्रवेशः, न तु दक्षिणायने कार्यम्। गुरु–शुक्रास्त–वृद्धत्व–बालत्वं प्रवेशे त्यजेत्। स्थिरनक्षत्रेषु(रोहिणी, उ.षा., उ.फा., उ.भा.),पू.षा.,अनुराधा, मृगशीर्षं, चित्रा, रेवती–नक्षत्रेषु गृहप्रवेशः श्रेष्ठः। पुष्यनक्षत्रे मध्यमो ज्ञेयः। तिथिः–अमावास्या, रिक्ता(४–९–१४), अष्टमी, शुक्लप्रतिपत्, प्रवेशे वर्जयेत्। भौमवर्जितवासरे, दिनस्य पूर्वाह्णे, चन्द्रताराबलान्विते, पञ्चाङ्गशुद्धियुक्ते, नैधनोदय (अष्टमराशि)वर्जितो प्रवेशः शुभदः। स्थिरलग्ने, स्थिरनवांशे, लग्ने शुभग्रहयुतवीक्षिते प्रवेशः शुभप्रदः। दिवाप्रवेशे

सम्पत्तिप्राप्तिः। निशाप्रवेशो मङ्गलप्रदः। त्रिकोण(५,९)-केन्द्र(१,४,७,१०)-तृतीय (३)-लाभगे(११) शुभग्रहे, षष्ठ-लाभगे(६-११) अशुभग्रहे लग्न-व्यय-अष्टमस्थान(१-१२-८)वर्जिते हिमांशुना, जन्मराशौ, जमन्मलग्ने वा ताभ्यामुपचयराशौ प्रवेशः पुत्रधनदः, अन्यथा प्रवेशे दुःखनिःस्वता भवेत्।

मनोरम्यगृहे विविधमङ्गलस्वनैः, वामार्कं कृत्वा, कलशः द्विजान्नग्रं कृत्वा प्रवेशः शुभदः स्मृतः। कपाट(द्वार)रहितं, छायासहितं बलिदानं(वास्तुदेवतादिबलिदानं) एवं ब्राह्मणभोजनरहितं गृहप्रवेशं न कुर्युः। यदा कृतस्तदा स प्रवेशो नैकविपत्तिकारको भवति।

**अध्यायः-३८ ।। वास्तुलक्षणाध्यायः ।।**

कश्यपसंहिताग्रन्थे अष्टत्रिंशतितमेऽध्याये वास्तुलक्षणाध्यायरूपनामके सप्तनवति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे वास्तुविद्याविषयकं पुर-सद्मनोर्निर्माणस्य वर्णनं विशदीकृतम्। पुरनिर्माणस्य एवं गृहनिर्माणस्य भूमेः रस-गन्ध-प्लवादिकं ज्ञात्वा क्षेत्रस्य स्वीकरणपूर्वकं पुर-सद्मनोर्निर्माणं शुभदम्।

**विप्रादीनां वर्णक्रमेण भूमेर्गन्धः-**

१)विप्रः-मधु।

२)क्षत्रियः-पुष्पम्।

३)वैश्यः-सुरा।

४)शूद्रः-मांसम्।

**विप्रादीनां वर्णक्रमेण भूमेर्वर्णः-**

१)विप्रः-सितः। ३)वैश्यः-हरिद्रः।

२)क्षत्रियः-रक्तः। ४)शूद्रः-कृष्णः।

**विप्रादीनां वर्णक्रमेण भूमेर्मधुरादिरसः(स्वादः)-**

१)विप्रः-मधुरः। ३)वैश्यः-कषायः।

२)क्षत्रियः-कटुः। ४)शूद्रः-तिक्तः।

**प्लवस्य शुभाशुभफलम्-**

ईशान-पूर्व-उदक्दिशाप्लवं सर्वसम्पत्प्रदम्। अन्यदिशायां प्लवं दुःखशोकनिर्धनहानिदम्।

**ततो भूमिपरीक्षा-**

रत्निमात्रं भूमौ गर्तं कृत्वा रात्रौ जलं पूरयेत्। प्रातः पश्येत्- यदा गर्ते जलमधिकं दृश्यते, तदा वृद्धिदा। समे समा हीने हानिदा। ततोऽन्या भूमिपरीक्षा- जले वृद्धिः, पङ्के समफलं, अजले क्षयं(नाशं) ज्ञायेत्।

**ततो दिक्साधनम्-**

द्विशङ्कुमानं समानं मण्डलं(वृत्तं) विरच्य तन्मध्ये शङ्कुं स्थापयेत्। शङ्कुछायाग्रं पूर्वापराह्णयोर्यत्र वृत्ते स्पृशेत्, तत्र द्वयोः स्थाने उभौ बिन्दू कार्यौ। ताभ्यामुभाभ्यां बिन्दुभ्यामेकरेखां विरच्य, सा रेखा पूर्व-पश्चिमरेखा ज्ञातव्या। ततो पूर्व-पश्चिमरेखां बिन्दुतश्चापेनोभौ बिन्दू विरच्य, तयोरुपरि कृता रेखा दक्षिणोत्तरा भवति। तयैव रीत्या

पुनश्चापाद् विदिशा(ईशानादिकोणं) अपि साधयेत्। एवं गृहस्य पुरस्य च दिग्ज्ञानं कारयेत्।

**पूर्वादिदिशायां द्वारस्यायामाष्टभागानुसारतः फलम्–**

**(१)पूर्वद्वारम्–**

| | |
|---|---|
| १)क्रोधः | ५)महद्धनम् |
| २)भीतिः | ६)चौर्यम् |
| ३)धनप्राप्तिः | ७)विपुत्रता |
| ४)नृपपूजा | ८)हानिः |

**(२)दक्षिणद्वारम्–**

| | |
|---|---|
| १)बन्धनं | ५)धनागमः |
| २)निधनं | ६)अरुजत्वं |
| ३)प्रीतिः | ७)व्याधिभयं |
| ४)अर्थप्राप्तिः | ८) निर्धनता |

**(३)पश्चिमद्वारम्–**

| | |
|---|---|
| १)पुत्रहानिः | ३)लक्ष्मीप्राप्तिः |
| २)शत्रुवृद्धिः | ४)धनागमः |

५)धान्यप्राप्तिः

६)सौभाग्यता

७)दु:खं

८)शोकः

**(४)उत्तरद्वारम्-**

१)हानिः

२)स्त्रीदूषणं

३)निःस्वता

४)बहुधान्यं

५)धनागमः

६)सम्पद्वृद्धिः

७)महाभयम्

८)व्याधिः।

**वास्तुमण्डले शिलान्यासः-**

शिलान्यासे मध्ये नवपदात्मकं ब्रह्मास्थानं निधनप्रदम्। मण्डलपरितः पिशाचांशः स्मृतः। पिशाचांशः शिलान्यासे दुःखशोकभयप्रदः। शेषांशः पुत्र-पौत्रधनप्रदः।

भौमवारे मघा-हस्त-विशाखा-रेवती-मूल-हस्तनक्षत्रेषु गृहारम्भः कृतः, तदा तद्गृहमग्निना दह्यते न संशयः।

सोम-रविवारे कृत्तिकानक्षत्रं गृहनिर्माणसमये स्यात्तदा प्रवेशभवनं शीघ्रमग्निना दह्यते। शनिवारे अनुराधा-ज्येष्ठा-स्वाती-भरणी-पूर्वाभाद्रपदा-विशाखानक्षत्रेषु गृहारम्भः स्यात्, तर्हि यक्ष-राक्षसैर्गृहं गृह्यते।

गृहारम्भे ग्रहस्थित्यनुसारेण फलम्-

१) **परहस्तगतगृहयोगः-**

एकोऽपि परनवांशगतो ग्रहो लग्नात् सप्तमगः, एवं ब्राह्मणादिवर्णस्वामी निर्बलः, तदा तद् गृहं परहस्तगामी भवेत्।

२) **अतिनिस्वप्रदगृहयोगः-**

यदा गुरुः-शुक्रः-चन्द्रः-बुधो वा शत्रु-नीचराशिगः, तदा तद् गृहं सदातिनिस्वप्रदं भवेत्।

**३)  लक्ष्मीयुतगृहयोगः-**

उ.षा.-उ.भा.-उ.फा.-आश्लेषा-रोहिणी-श्रुति(पुष्य)-शतभिषानक्षत्रेषु गुरुस्तदा कृतं गेहं लक्ष्मीयुतं भवेत्।

**४)  सुखप्रदयोगः-**

विशाखा-पुष्य-आर्द्रा-चित्रा-धनिष्ठानक्षत्राणि शुक्रग्रहेण युतानि, तदा तद् गृहं सुखप्रदं भवेत्।

**५)  इष्टार्थसिद्धिप्रदगृहम्-**

एकोऽपि गुरुः-शुक्रः-बुधो वा लग्नगः, एवं तस्यैव वर्गः स्यात्तदा कृतं गृहमिष्टार्थसिद्धिप्रदं भवेत्।

**६)  धनधान्यसुखप्रदगृहयोगः-**

एकोऽपि गुरुः-शुक्रः-बुधो वा उच्चगो लग्नगो भवेत्, तदा कृतं गृहं सदैव धनधान्यसुखप्रदं भवेत्।

**७)  भूरिधान्यप्रदगृहयोगः-**

चन्द्रः-सूर्यः, शुभग्रहाः(गु.शु.बु.) लाभस्थानगताः, एवं कोऽपि ग्रहः शत्रु-नीचराशिगः न स्थितः, तदा कृतं गेहं भूरिधान्यप्रदं भवेत्।

**८)  भूरिलाभप्रदगृहयोगः-**

शत्रु-नीचराशिभिन्ने शुभग्रहः उच्चगः, धनकेन्द्रगतः, तदा तद् गृहं भूरिलाभप्रदं भवेत्।

## ९) सुस्थिरभूरिपुत्र-पौत्रप्रवर्धनगृहयोगः-

गृहारम्भलग्ने द्वे-त्रिशुभग्रहाः स्युस्तदा कृतं गेहं सुस्थिरभूरिपुत्र-पौत्रप्रवर्धनं भवेत्।

चर-द्विस्वभावराशिगते रवौ गृहारम्भो न कार्यः। गृहारम्भः स्थिरराशिगते रवौ कार्यः।

## गृहनिर्माणे मासाः-

माघ-फाल्गुन-वैशाख-ज्येष्ठ-श्रावण-कार्त्तिक-सौम्य(मार्गशीर्ष)मासा धनधान्यसुखप्रदाः।

## वासार्थं ग्राम-नगरे शुभाशुभफलज्ञानम्-

अकारादिषु वर्गेषु क्रमतो प्रागादिदिशो भवन्ति। गरुडः, मार्जारः, सिंहः, श्वा, सर्पः, आखुः, गजः, शाशकः(शशकः) पूर्वादिक्रमत इयं योनिर्भवति। तासां योनीनां पञ्चमो रिपुवर्गो भवेत्। यथा-गरुडतः पञ्चमो वर्गो सर्पः शत्रुर्भवेत्।

साध्यवर्गं(ग्रामस्य वा नगरस्य) पुरः स्थाप्य, साधकस्य(पुरुषस्य) वर्गसंख्या पृष्ठतो न्यसेत्। तद्वर्गसंख्या अष्टभिर्भक्ता, शेषं साधकस्य धनं स्मृतम्। तद् व्यत्यययादातं लब्धिर्ऋणाल्पधनाच्छुभम्। गृहस्यायामगुणितं विस्तारं तत्पदं भवेत्।

विषमायः श्रीप्रदः, समायो दुःखशोकदः। साधकनक्षत्रात् गृहनक्षत्रं तृतीयं स्यात्तदा दुःखप्रदं, पञ्चमं यशःक्षयं, सप्तमर्क्षमायुर्नाशकं स्मृतम्। राशिसम्बन्धः-षष्टाष्टकं नैधनदं, त्रिकोणेष्वनपत्यता, द्विर्द्वादशे निस्वदं, शेषा राशयो भोगभाग्यदाः।

सूर्य-भौमवारनवमांशौ गृहनिर्माणेऽग्निभयकारकौ भवेताम्। शेषग्रहाणां वारांशा इष्टार्थसिद्धिदाः।

नभस्यादितः(भाद्रपदादिषु) त्रिषु-त्रिषु मासेषु प्राच्यादिप्रदक्षिणक्रमतो वामपार्श्वशायी वास्तुशीर्षं विद्यते। वास्तुमुखदिशायां गृहद्वारं शुभप्रदम्। प्रतिकूलमुखं सद्म दुःखशोकभयप्रदम्। चतुर्दिश्यादिशालागृहेऽयं दोषो न विद्यते। रत्नं(पञ्चरत्नानि), स्वर्णं, पुण्योदकं(गङ्गादितीर्थजलं) मृत्पेटिकामध्ये स्थापयित्वा गृहमध्ये हस्तमात्रे गर्ते विन्यसेत्। वास्त्वायामदले नाभिरस्ति। तस्या नाभेरादितस्त्र्यङ्गुलं कुक्षिः। तस्मिन्स्थाने शङ्कुं स्थापयेत्। तेन पुत्रपौत्रवृद्धिर्भवेत्।

**विप्रादीनामङ्गुलमानात्मकं शङ्कुमानम्-**

१)विप्रः-२२

२)क्षत्रियः-२३

३)वैश्यः-१६

४)शूद्रः-१२

एतच्छङ्कुं गन्धपुष्पादिना स्वलङ्कृतं कुर्यात्।

**शङ्कुनिर्माणार्थयोग्यकाष्ठम्-**

१)रक्तचन्दनं, २)बिल्वः, ३)आम्रः, ४)खदिरः, ५)अर्जनः, ६)वंशः, ७)नीपः, ८)करञ्जः, ९)कुटजः, १०)निम्बः, ११)महापत्रः, १२)युग्मपत्रः, १३)गौरत्वक्, १४) सारका। एतद्वृक्षोद्भवकाष्ठेन शङ्कुनिर्माणं भवेत्। शङ्कुनिर्माणे विशेषः-(अत्रोक्तविधिः केवलं शिलान्यास एव प्रयुक्तः।) शङ्कोस्त्रिविभागं कृत्वा

प्रथम(ऊर्ध्व)भागं चतुष्कोणं, द्वितीय(मध्य)भागमष्टास्रं, तृतीय(अधो)भागं छिद्ररहितं सुन्दरवलयाकारं कर्तव्यम्। एवं लक्षणयुक्तस्य शङ्कोः शुभे दिने निर्माणं कारयेत्। मृदु-स्थिर-क्षिप्रनक्षत्रे रिक्तामामावास्यां च वर्जयित्वा, भौमसूर्यरहितलग्नवारे, अष्टमस्थानं क्रूरग्रहेण रहिते, अष्टमं शुद्धियुक्ते, अष्टमराशिं त्यक्त्वा, स्थिरलग्ने, स्थिरांश उत्तमं शङ्कुं स्थापयेत्। पुण्याहघोषैर्वादित्रैर्विप्राशीर्वचनैः सह शङ्कुं स्थापयेत्। शुभग्रहास्त्रिकोण-केन्द्र-स्व-आयभावगाः, षष्ठ-त्रि-आयगाः पापग्रहाः, लग्नभिन्ने चन्द्रे, ज्योतिर्विद् पूजनपूर्वकं शङ्कुं स्थापयेत्। अलिन्दभेदेन गृहस्य षोडश भेदा भवन्ति।

**गृहस्य षोडश वक्ष्यमाणनामानि यथा-**

(१) ध्रुवं, (२)धन्यं, (३)जयं, (४)नन्दं, (५)खरं, (६)कान्तं, (७)मनोरमं, (८)सुमुखं, (९)दुर्मुखं (१०)क्रूरं, (११)शत्रुं, (१२) स्वर्णप्रदं, (१३)क्षयं, (१४)आक्रन्दं, (१५)विपुलाख्यं, (१६)विजयम्।

एतानि गृहाणि पुण्यकारकानि तेषां प्रस्तारमुच्यते। प्रस्तारभेदतो गृहाणां षण्णवत्येव प्रकाराः भवन्ति। गुरोरधो लघुस्थाप्यः पुरस्तादूर्ध्ववन्न्यसेत्। पश्चाद् गुरुभिः पूजयेत् एवं विधिः सर्वलब्धविधिर्भवति। गृहद्वारात् प्रदक्षिणं लघुपदेऽलिन्दं कुर्यात्। मुखादिष्वलिन्देषु षोडशगृहभेदा भविष्यन्ति। ततः सलक्षणात्मकं नामभिर्भेदज्ञानं यथा-

**१) सर्वतोभद्रम्-**

चतुःशाला, चतुर्द्वारयुक्तं गृहं सर्वतोभद्रं कथ्यते।

सर्वतोभद्रफलम्-नरेशानामन्येषां जनानाञ्च सर्वदा पुत्रायुर्धनधान्यदं भवेत्।

**२) नन्द्यावर्तम्-**

पश्चिमद्वाररहितं( पू., द.,उ., द्वारयुतं ) नन्द्यावर्तसंज्ञितम्।

नन्द्यावर्तफलम्- आयुरारोग्यमैश्वर्यं पुत्रसौभाग्यवृद्धिकारकं भवेत्।

**३) वर्धमानम्-**

दक्षिणद्वाररहितं( पू., प., उ., द्वारयुतं ) वर्धमानसंज्ञितम्।

वर्धमानफलम्- धनप्रदं भवेत्।

**४) स्वस्तिकम्-**

प्राग्द्वाररहितं( द., प., उ., द्वारयुतं ) स्वस्तिकसंज्ञितम्।

स्वस्तिकफलम्- पुत्रधनप्रदं भवेत्।

**५) रुचकम्-**

उत्तरद्वाररहितं( पू., प.,द., द्वारयुतं ) रुचकसंज्ञितम्।

रुचकफलम्- आयुर्धनप्रदं भवेत्।

**६) जयम्-**

सौम्यशालारहितं त्रिशालायुतं गृहं विजयं कथ्यते। एतद्गृहं त्रिषु लोकेषु विश्रुतं शुभदम्।

जयफलम्- बुद्धिवृद्धिकरं क्षेमारोग्यकरं राज्ञां पुत्रपौत्रधनप्रदं भवेत्।

**७)  मनोरमम्-**

पूर्वशालारहितं त्रिशालायुतं गृहं मनोरमं कथ्यते। एतद् गृहं नक्षत्रपदसंज्ञितं शुभदम्।

मनोरमफलम्- भयशोकविनाशकारकं भवेत्।

**८)  वृद्धिदम्-**

दक्षिणशालारहितं त्रिशालायुतं गृहं वृद्धिदं कथ्यते।

तत्फलम्- कुलक्षयकरं दृष्ट्वा सूर्यं विलोकयेत्।

**९)  क्षतम्-**

प्रत्यक्शालारहितं त्रिशालायुतं गृहं क्षतं कथ्यते।

तत्फलम्- बहुव्ययकरं पुत्रायुःश्रीविनाशदं भवेत्।

**गृहस्य शालाभेदफलम्-**

याम्यपरा द्विशाला धनायुष्यसुतप्रदा भवेत्। पश्चिमोत्तरा द्विशाला कुलक्षयकरी भवेत्। उदक्पूर्वा द्विशाला वह्निव्याधिभयप्रदा भवेत्। पूर्वयाम्या द्विशाला कर्तृमृत्युप्रदा भवेत्। नृपैस्तस्मात्परीक्ष्य गृहाणि कारयेत्।

**गृहस्याभ्यन्तरव्यवस्था-**

(१)प्राच्यां दिशि-स्नानगृहम्, (२)आग्नेयां दिशि-पचनालयम्(पाकशाला), (३)याम्यदिशि-शयनगृहम्, (४)नैर्ऋत्यदिशि- वस्त्रमन्दिरम्, (५)प्रतीच्यां दिशि-

भोजनगृहम्, (६)वायुदिशि–गवां गृहम्, (७)सौम्य(उत्तर)दिशि–भाण्डारसदनम्, (८)ईशानदिशि– देवतालयम्।

**वास्तुदेवता-पादात्मकं गृहस्याभ्यन्तरव्यवस्था-**

(१)इन्द्राग्न्योः– वर्धनं गेहम्, (२)यमाग्न्योः– घृतमन्दिरम्। (३) राक्षसकालयोर्मध्ये– पुरीषत्यागसदनम्, (४)जलाधिशनिर्ऋत्योर्मध्ये– विद्यागृहम्, (५)जलाधिशसमीरयोः– रोदनं सदनम्, (६)वायुकुबेरयोर्मध्ये– कामोपभोगसदनम्, (७)कुबेरेश्वरयोर्मध्ये– नवरत्नालयम्। (८)ईशेन्द्रयोर्मध्ये–धान्यगृहम्।

एतानि कार्याणि स्वस्वायेषु स्वदिक्ष्वपि वर्तन्ते। ध्वजोद्भवः सर्वत्र शोभनः।

**अष्टायाः-**

(१)ध्वजः, (२)धूम्रः, (३)सिंहः, (४)श्वा, (५)वृषः, (६)गर्दभः, (७)कुञ्जरः, (८)ध्वांक्षः, क्रमेणाष्टायाः प्रागादितः क्रमतो भवेयुः।

गृहोपरि गृहादीनां एतल्लक्षणानि परीक्ष्य गृहनिर्माणं शुभम्। गृहात् जलनिष्कासनार्थे नैका भेदाः सन्ति। तत्र पाञ्चालमानं, वैदेहं, कौरवं, विजयं, मागधं, शूरसेनं, गान्धारम्, आवन्तिकं–इत्यष्टमानं वर्तते। पाञ्चालं सर्ववर्णानां जलप्लावं शुभप्रदम्। विप्राणामावन्तिमानं क्षत्रियस्य गान्धारमानं वैश्यानां कौरवमानं द्विजादीनां भवेत्। द्वित्रिभूमिकवेश्मानं जलस्त्रावं यथोचितं कारयेत्।

ध्वजाये वा गजाये गजोष्ट्रगेहं कार्यम्। तुरग–पशुमन्दिरौ ध्वजाये वा वृषभाये कार्यौ। शय्यामन्त्रासनद्वारे वृषाये वा सिंहे वा ध्वजाये शुभौ।

गृहे वा प्रतिगृहे प्लक्षः, उदुम्बरः, निम्बः, चूतः, विभीतकः,(बदरीं खदिरं विना) सर्वे कण्टकाः, वटः, अश्वत्थः, कपित्थः, तिन्तिणीः, तृणद्रुमाः, अगस्तिः, शिग्रुः, पालाशः, दग्धवृक्षाः, करञ्जः, अेरण्डः, निर्गुण्डिः, गृहशल्याश्च  निन्दिताः।

स्वगृहात् पश्चिमे वा दक्षिणे दिग्भागे  पितुः साग्रजस्य मन्दिरं शुभम्। गृहाधारा गृहास्तंभाः समसंख्यकाः कार्याः, किन्त्वसमानसंख्यका न कार्याः। गृहस्य भित्तेरुच्छ्रितमानं न त्वत्यधिकं नातिन्यूनं कार्यम्। भित्तिः पक्वेष्टकैः कार्या, अथवा दारुणमृदा कार्या। तृणैः पत्रैश्चित्रपदैर्न कार्या।

**गृहाङ्गणे प्रशस्ता वृक्षाः-**

पुंनागः, अशोकः, तिलकः, शमी, बकुलः, चम्पकः, दाडिमः, पिप्पली, द्राक्षा, पिचुमन्दा, जया, मुरा, बन्धूकः, पूगः, पनसः, सरोजं, गृहमल्लिका, मल्लिका, पाटली, जाती, नारिकेरा -एते तृणद्रुमा गृहाङ्गणे  सर्वदा  मङ्गलप्रदाः।

प्लक्षकर्कन्धुवृक्षौ द्वौ गृहस्योत्तरतः शुभौ।

न्यग्रोध उदुम्बरोऽश्वत्थो  गृहप्रागादितः  शुभाः।

**अध्यायः-३९ ।। वास्तुपूजाध्यायः ।।**

कश्यपसंहिताग्रन्थ एकोनचत्वारिंशतितमेऽध्याये वास्तुपूजाध्यायरूपनामके विंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे वास्तुशान्ति-पूजनविषयकं पुर-सद्मनोर्वास्तुशान्तिवर्णनं विशदीकृतम्।

**ततो वास्तुपूजनक्रमः-**

हस्तमात्रं दश पूर्वा दशोत्तरा रेखाभिर्गृहमध्ये तण्डुलोपर्येकाशीतिपदं वास्तुमण्डलं रचयेत्। बाह्यतो द्वात्रिंशत् पूज्यास्तत्रान्तस्थास्त्रयोदश, तेषां स्थानानि, नामानि च कथितानि।

**एकाशीतिपदं वास्तुमण्डलस्वरूपम्-**

ईशानतो द्वात्रिंशदमरा बाह्ये –(१)हिरण्यरेताः(शिखी = अग्निः), (२)पर्जन्यः (३)जयन्तः (४)कुलिशायुधः(इन्द्रः) (५)रविः (६)सत्यः (७)भृशः (८)आकाशः (९)वायुः (१०)पूषा (११)रैवतः(वितथः) (१२)गृहक्षतः (१३)पितृपतिः(यमः) (१४)गन्धर्वः (१५)भृङ्गराजः (१६)मृगः (१७)पितरः (१८)गणाधीशः (१९) दौवारिकः (२०)सुग्रीवः (२१)पुष्पदन्तः (२२)जलाधीशः (२३)निशाचरः (२४)शोषः (२५)पापः (२६)रोगः (२७)सर्पः (२८)मुख्यः (२९)दानवः (३०)सोमः (३१)सर्पाः (३२) अदितिः। पूज्या द्वात्रिंशदमरा अमी।

ततो ईशान्यादि चत्वारकोणस्थास्तत्समीपगाः (१)आपः (२)सावित्रः (३)जयः (४)रुद्राश्च अमी क्रमात्। मण्डलमध्ये नवपदो ब्रह्मा। तस्य परित अष्टौ प्रागाद्या एकान्तराः (१)अर्यमा (२)सविता (३)विवस्वान् (४)विबुधाधिपः (५)मित्रः (६)राजयक्ष्मा (७)पृथ्वीधरः (८)आपवत्सः। एते ब्रह्मासहिताः पञ्चचत्वारिंशद्(४५) अमराः।

१)आपः, २)आपवत्सः, ३)पर्जन्यः, ४)अग्निः, ५) अदितिः –एते क्रमतः पदिकायामेकपदात्मकाः कोणे स्थिताः। शेष एकपदीयः द्वाविंशति(२०)कोष्टकेषु

चत्वारिंशत् (४०)द्विपदात्मकाः। अर्यमा, विवस्वान्, मित्रः, पृथ्वीधरः क्रमतो ब्रह्मणः परितो दिक्षु चत्वारस्त्रिपदाः स्मृताः।

ब्रह्मा–९ पदात्मकः, २० एकपदात्मकाः, ४०द्विपदात्मकाः, १२ त्रिपदात्मकाः वर्तन्ते।

**९+२०+४०+१२=८१ अतः ८१पदात्मकं वास्तुमण्डलं भवेत्।**

ब्रह्माणं तथा च एक–द्वि–त्रिपदान् सुरान् वास्तुज्ञो वास्तुमन्त्रेण गन्धदूर्वाक्षतादिभिः पूजयित्वा तन्मन्त्रेण शुक्लवस्त्रयुग्मं प्रदापयेत्। ततोऽपूपैर्भूरिनैवेद्यैः सह समर्पयेत्। ततः कर्ता पुष्पाञ्जलिं दद्यात्।

**ततो वास्तुमन्त्रेण प्रार्थयेत्–**

**वास्तुपुरुष नमस्तेऽस्तु भूशैयाभिरत प्रभो।**

**मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा।।**

तत आचार्यायार्चनपूर्वकं दक्षिणां दद्यात्, विप्रेभ्यो भोजनं दद्यात् सर्वं भुञ्जीत बन्धुभिः। सम्यग्वास्तुपूजां पूर्वाक्तां प्रयत्नतः कुरुते, तदारोग्यायुःपुत्रपौत्रधनादीनि लभेन्नरः। वास्तुपूजारहिते नवसद्मप्रवेशं यः कोऽपि करोति, तदा रोगान्नानाविधक्लेशान् सर्वसङ्कटान् प्राप्नोति।

## अध्यायः-४० ।। राजाभिषेकाध्यायः ।।

कश्यपसंहिताग्रन्थे चत्वारिंशतितमेऽध्याये राजाभिषेकाध्यायरूपनामके चतुर्दश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते। अस्मिन्प्रकरणे राजाभिषेकमुहूर्तविषयकं वर्णनं विशदीकृतम्।

**भूपानां राज्याभिषेकमुहूर्तः-**

उत्तरायणे, गुरुशुक्रास्तबालवृद्धत्वरहिते, स्वजन्मराशि-लग्ने तदंशेंऽशे बलान्विते, पट्टबन्धनलग्नेशास्तरहिते, बलान्विते, मित्रस्त्रिकोणस्वक्षेत्रगा ग्रहाः स्युः तदा यस्याभिषेकं कुर्वन्ति तस्य स्थिरा कीर्तिः श्रीः सुखं च भवेत्। अस्त-नीच-शत्रु-पराजितग्रहा यदा पट्टबन्धनसमये स्थिताः, तदानर्थकलहव्याधिभीतिदुःख-पराजयादिकमवाप्नोति। राजाभिषेके नक्षत्राणि-उत्तराभाद्रपदा, उत्तराषाढा, उत्तराफाल्गुनी, अनुराधा, ज्येष्ठा, रोहिणी, मृगशीर्षं, श्रवणं, अश्विनी, पुष्यः, रेवती। अरिक्तदिवसे, कुजवर्जितवासरे,चन्द्रताराबलान्विते, नैधनोदय (अष्टमराशि-लग्न) वर्जिते, जन्मराशेरुपचये लग्ने, स्थिरलग्ने, शीर्षोदयलग्ने, शुभग्रहेक्षिते युक्ते, परैर्न युते-वीक्षिते, शुभलग्ने, शुभांशे, अष्टमं शुद्धिसंयुते, शुभग्रहास्त्रिकोण-केन्द्र-स्व-त्रि-आयगैः, पापास्त्रि-षडायगैः, चन्द्रः द्वादश-निधनस्थान भिन्ने राजाभिषेको शुभप्रदः। चरोग्रलग्नस्थः क्रूरैः पट्टबन्धनलगनं निधनं भवेत्। चतुर्थग्रहा व्ययगास्तदा स राजा शीघ्रं राज्यभ्रष्टः, पञ्चमगैः सौख्यहीनः, धर्मगे धर्महीनस्तु मृत्युमाप्नोति मृत्युगैः।

षष्टान्त्यष्टम गते चन्द्रे लग्नं पापग्रहेन निरीक्षिते राजा द्राङ् मृत्युमाप्नोति मित्रदृष्टे त्रिवत्सरात्। यस्य पट्टबन्धनलग्ने त्रिकोणस्थानगतो गुरु-शुक्रः, कुजः षष्ठस्थानगः स चिरं लक्ष्म्या मोदते। यस्य पट्टबन्धनलग्ने त्रिलाभगौ सौरि(शनैश्चरः)सूर्यौ, चतुर्थे वा

दशमस्थाने गुरुः स्यात् तस्मिन् समये यस्याभिषेकः क्रियते तदा तस्य मही स्थिरा भवेत्।

**अध्यायः-४१ ।। प्रतिष्ठाध्यायः ।।**

कश्यपसंहिताग्रन्थ एकचत्वारिंशत्तमेऽध्याये प्रतिष्ठाध्यायरूपनामके चतुर्दश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते। अस्मिन्प्रकरणे देवताप्रतिष्ठामुहूर्तविषयकं वर्णनं विशदीकृतम्।

**सुरप्रतिष्ठाकालः-**

सौम्यायने(मकरराशितो मिथुनराशिपर्यन्तं सूर्यभ्रमणकालः), अस्त-बाल-वृद्धत्वरहिते गुरौ, माघ-फाल्गुन-वैशाख-ज्येष्ठमासे, शुक्लपक्षतः कृष्णपक्षार्ध-कृष्णाष्टमीतिथिपर्यन्तं, देवानां स्थापनं(प्राणप्रतिष्ठा) शुभा।

या तिथिर्यस्य देवस्य (यथा- चतुर्थीस्वामी गणेशः -इत्यादि ज्ञायेत्), सा तिथिस्तस्या(तिथिस्वामी)देवतानां प्रतिष्ठापने शुभदा स्मृता। वर्ज्यम्-शुक्लप्रतिपदां, रिक्तां(४-९-१४)अमावास्यां, दिनक्षयं, कुजवारं(मङ्गलवारं) स्थापने परिवर्जयेत्। नक्षत्राणि - मूल - ज्येष्ठा - आश्लेषा - पू.षा. - पू.भा. - पू.फा.-कृत्तिका -विशाखा -मघा-भरणी- एतानि त्यक्त्वान्यनक्षत्रेषु सुराणां स्थापनं शुभम्।

कर्ता सूर्य-चन्द्रताराबलान्विते, पञ्चाङ्गशुद्धिसंयुक्ते, दिनस्य पूर्वाह्णे, स्वजन्मराशेरष्टमोदयरहिते, पञ्चेष्टिकयुतलग्ने, अष्टमलग्नशुद्धियुक्ते, लग्नं शुभग्रहेक्षितयुक्ते, लग्नं न पापैरीक्षितयुते देवतास्थापनं शुभं भवेत्।

देवतास्थापनलग्नगाः सूर्येन्दुकुजराह्वार्किकेतवः स्युस्तदा कर्तुर्मृत्युप्रदा भवेयुः, किन्तु सौम्यग्रहा (गु.शु.बु.चं.)आयुःश्रीपुत्रपौत्रदा भवन्ति। द्वितीयस्थानगाः सचन्द्राः सौम्याः (गु.,शु.,बु.,चं.) वित्तदाः, पापग्रहाः(सू.,मं.,श.,रा.,के.) नेष्टदाः। तृतीयस्थानगाः सर्वे पापशुभा ग्रहाः श्रीपुत्रसौख्यदा भवन्ति। चतुर्थे सौम्या लाभप्रदाः, क्रूराश्चन्द्रश्च (चं.,सू.,मं.,श.,रा.,के.) दुःखदा भवेयुः। पञ्चमस्थानगाः क्रूरा व्याधिप्रदाः, शुभग्रहाः पुत्रधनप्रदा भवेयुः। पूर्णेन्दुः पुत्रदस्तत्र क्षीणेन्दुः पुत्रनाशदो भवेत्। शत्रुस्थानगाः सौम्याः शत्रुप्रदाः, क्रूरग्रहाः शत्रुविनाशदा भवेयुः। श्रीप्रदाः सैन्दवः सौम्या (गु.,शु.,बु.,चं.) नवमस्थानगाः क्रूरा(सू.,मं.,श.,रा.,के.) गद(रोग)प्रदा भवन्ति। चन्द्रयुताः सौम्याः (गु.,शु.,बु.,चं.) दशमस्थानगताः कीर्तिदाः, कूराः(सू.,मं.,श.,रा.,के.) क्लेशदा भवन्ति। सर्वे ग्रहा लाभस्थानगताः स्युस्तदा श्रीपुत्रलाभदा भवन्ति। व्ययस्थानगताः सर्वे(कूर-सौम्याः) ग्रहा बहुव्ययकराः।

अर्थ(दक्षिणा)हीनं देवताप्रतिष्ठाकर्तारं हन्ति, मन्त्रहीनं तु ऋत्विजं हन्ति, लक्षणहीनं तु श्रियं हन्ति। अतो विवेकहीनानां प्रतिष्ठासदृशं कोऽपि रिपुर्नास्ति।

**अध्यायः-४२ ।। वस्त्रलक्षणाध्यायः ।।**

कश्यपसंहिताग्रन्थे द्विचत्वारिंशत्तमेऽध्याये वस्त्रलक्षणरूपनामके द्वादश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते। अस्मिन्प्रकरणे नूतनवस्त्रस्य दग्ध-स्फुटित-दन्तच्छेदादिना निमित्तैर्भविष्यमाणफल- कथनविषयकं नववस्त्रस्य लक्षणं विशदीकृतम्। ततोऽश्विन्यादिनक्षत्रानुसारेण **प्रतिनक्षत्रस्य नूतनवस्त्रधारणे**

**फलम्-**

(१)अश्विनी-वस्त्रलाभः।

(२)भरणी-अर्थहानिः।

(३)कृत्तिका-वह्निदाहः।

(४)रोहिणी- धनागमः।

(५)मृगशीर्षम्-आखुभीतिः।

(६)आर्द्रा-मृत्युः।

(७)पुनर्वसुः-लक्ष्मीः।

(८)पुष्यः- अर्थलाभः।

(९)आश्लेषा- महागदः।

(१०)मघा-मृत्युः।

(११)पूर्वाफाल्गुनी- नृपभयम्।

(१२)उत्तराफाल्गुनी-सम्पल्लाभः।

(१३)हस्तः- कर्मसिद्धिः।

(१४)चित्रा- अरिक्षयः।

(१५)स्वाती- सुभोजनलाभः।

(१६)विशाखा- राजपूजा।

(१७)अनुराधा- मित्रप्राप्तिः।

(१८)ज्येष्ठा-युवतीयुतिः।

(१९)मूलम्- जलप्लुती(जलभयम्)।

(२०)पूर्वाषाढा-रोगभीतिः।

(२१)उत्तराषाढा- मिष्टान्नलाभः।

(२२)श्रवणम्-नयनामयः(नयनरोगः)।

(२३)धनिष्ठा-धान्यलाभः।

(२४)शतभिषा(शततारका)- विषभयम्।

(२५)पूर्वाभाद्रपदा-सर्वसम्पत्प्राप्तिः।

(२६)उत्तराभाद्रपदा-धनलाभः।

(२७)रेवती- जलागमः।

**ततो नवधा कृतनवाम्बर-शय्यासनादिषु शुभाशुभफलम्-**

| देवाः | राक्षसाः | देवाः |
|---|---|---|
| नराः | राक्षसाः | नराः |
| देवाः | राक्षसाः | देवाः |

काष्टाद्यैः स्फुटितस्य, अग्न्यादिना दग्धस्य, दन्तच्छिन्नस्य नवाम्बरस्य नवांशकं समभागं कृत्वा शुभाशुभफलं चिन्तयेत्। नवांशकवस्त्रभागे कोणेषु देवा वसन्ति, अन्त्यमध्याह्वये नरा वसन्ति, मध्यांशत्रितये दैत्या वसन्ति। देवतांशेऽर्थप्राप्तिः, नरांशके पुत्रवृद्धिः, पिशाचांशे पीडा हानिः सर्वप्रान्तेष्वशोभनम्।

ततो नवाम्बर-शय्यासनादिषु चिह्निताकृत्यानुसारेण शुभाशुभफलचिन्तनम्- शङ्ख- चक्र- अम्बुज- छत्र- ध्वज- तोरण- श्रीवत्स- सर्वतोभद्र- नन्द्यावर्त्त- गृहोपम- वर्धमान- स्वस्तिक- मृग- कूर्म- झषाकृति- छेदाकृति- इत्यादयो दैत्यभागेऽपि नराणां आयुरर्थप्रदा भवेयुः। खर-उष्ट्र-उलूक-काक-अहि-जम्बूक-वृष-त्रिकोण-सूर्याकृतयो देवभागेऽप्यशोभनाः।

अशुभचिह्नादिना निन्दितस्य वस्त्रस्य द्विजेभ्यः स्वर्णसंयुतं दानं कुर्यात्। तत आशीर्वचनं कृत्वान्यवस्त्रं धारयेत्।

नूतनं वस्त्रं सुयोग्यमुहूर्ते धारयेत्, किन्तु प्रीत्या क्ष्मापालदत्तं(नृपतिना दत्तं) वा विप्रादेशात् वा करग्रहे प्राप्तवस्त्रं तन्नवाम्बरं निन्द्यवासरधिष्ण्येऽपि धारयेत्।

**अध्यायः-४३ ।। अग्न्याधानाध्यायः ।।**

कश्यपसंहिताग्रन्थे त्रिचत्वारिंशत्तमेऽध्यायेऽग्न्याधानरूपनामके पञ्चदश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे द्विजातीनामग्न्याधानं सप्रयोजनं, तन्मुहूर्तविवेचनं मुहूर्तफलचिन्तनं विशदीकृतम्।

अग्न्याधानं द्विजातीनां अत्यन्तं प्रवित्रं पुण्यप्रदम्। अग्नित्रयेण संयुक्तः सदा यज्ञफलं लभेत्। अग्नित्रयहीने तत्पुण्यफलं न प्राप्नोति।

**अग्न्याधानसमयशुद्धिः(मुहूर्तः)-**

सौम्यायने(उत्तरायणे), शुक्रेज्येऽस्तरहिते, रिक्ताममां तिथिं वर्जयित्वा, चन्द्र-बुध-शनिवासरे, पञ्चाङ्गशुद्धियुक्ते, चन्द्रताराबले सति, चन्द्र-लग्नशुद्धियुते, अष्टमराशिरहिते, जलजराश्यंशके लग्ने (कर्क-मीन-कुम्भ-मकरस्योत्तरार्धम्), जलराशिगते चन्द्रे शुभप्रदम्।

यस्य आधानकाललग्ने निधनस्थो(अष्टमस्थो) निशाकरः, तदा तस्य भार्यामरणं शीघ्रं वा स्वमरणं करोति। अष्टमस्थानगो भौमो वा सूर्योऽग्न्याधानकं क्षिप्रं हन्ति। शशी-गुरु-शुक्र-बुध- अष्टमस्थानस्थितिवशाद् रोगदुःखभागी भवेत्। बलवान् पापग्रहेण निःस्वं, सबलचन्द्रेण अन्नप्राप्तिः, बुधे शनैश्चरे चन्द्रे वा लग्नगतेऽग्निर्विनश्यति। लग्नस्थे धनुराशिगे बृहस्पतौ, वा सप्त-दशमस्थाने मेषराशिगे

गुरौ, मङ्गले सूर्ये चन्द्रे वा त्रिषडाय( ३-६-११भावे)स्थितेऽग्निं जयति। लग्नगे सूर्य-गुरु-भौमस्थिते यावज्जीवं जयति। अग्नित्रयहितैषिणां मघानक्षत्राद् दशनक्षत्रेषु, अश्विनीनक्षत्रात् षट्सु चाग्न्याधानं न कर्तव्यम्।

**अध्यायः-४४ ।। सद्योवृष्टिलक्षणाध्यायः ।।**

कश्यपसंहिताग्रन्थे चतुश्चत्वारिंशत्तमेऽध्याये सद्योवृष्टिलक्षणरूपनामके द्वादश-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः, किन्तु श्लो.क्र.-५ उपेन्द्रवज्राछन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे वर्षाज्ञानं विशदीकृतम्। वर्षाप्रश्ने चन्द्रं तोयराशिमाश्रित्य लग्नगो वा शुक्लपक्षे केन्द्रगश्चन्द्रः शुभग्रहेक्षितस्तदा सम्पूर्णवृष्टिकरो भवेत्, किन्तु पापग्रहदृष्टेऽल्पवृष्टिकरो भवेत्। शुक्रात् सप्तमस्थश्चन्द्रः शुभदुष्टेऽपि वृष्टिकरो भवेत्। शनैश्चरात् पञ्च-सप्तम-नवमस्थोऽपि चन्द्रो वृष्टिकरो भवेत्। चन्द्रेण सह बुध-शुक्रसमागमेऽपि, दुर्बलचन्द्रोऽपि जलराशिगः सौम्यग्रहदृष्टस्तथापि नियमेन वृष्टिर्भवेत्। बुध-शुक्रमध्यगतः सूर्योऽनावृष्टिकरो भवेत्। यदा भौमौ मेष-धनु-मीन-वृष-सिंहराशिगः, शनैश्चरो वक्री स्यात्तदा हय-नाग-नराः त्रिभागशेषं वसुन्धरां कुर्वन्ति। प्राच्यां (पूर्वोदितः) शुक्रो स्वात्यादित्रयनक्षत्रेषु, प्रतीच्यां (पश्चिमोदितः) मघादिपञ्चनक्षत्रेष्वनावृष्टिकरः, विपरीते(उक्तयोगभिन्ने) तु वृष्टिदः।

ग्रहोदयास्तसमये सूर्यार्द्राप्रवेशने, मासान्ते ग्रहणे युद्धे नियमेन प्रवर्षणं भवेत्। कर्कटयुते सूर्ये वृष्टिर्न भवेत्, सिंहे वृष्टिर्भवेत्। परस्परे समसप्तमगौ प्राक्-पश्चिमदिशि संस्थितौ बृहस्पति-शुक्रौ यदा भवेतां, तदानावृष्टिप्रदौ। परिवेषासन्नसूर्येन्दू वृष्टिकारकौ।

यदा प्रत्यग्गतो मेघो सशल्यः परिगो यदि भवेत्तदा पतन्ति पक्षिणस्तोये शीघ्रं वृष्टिर्भवेत्ततः। प्रतिचन्द्रातिवायुः सदैव वृष्टिहेतवे भवेत्।

## अध्यायः-४५ ।। काकादिसंयोगोत्पात-दोषशान्त्यध्यायः।।

कश्यपसंहिताग्रन्थे पञ्चचत्वारिंशत्तमेऽध्याये काकादिसंयोगोत्पात-दोषशान्तिरूपनामके चतुर्विंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे उत्पातवर्णनपूर्वकं काक-कपोत-पिङ्गल-मधुवल्मीकदोष-शान्तिविधिर्विशदीकृतः।

**निखिला लोके उत्पाताः-**

(१)दिव्य-उत्पाताः (२)भौम-उत्पाताः (३)अन्तरिक्ष-उत्पाता वर्तन्ते। एतेषामुत्पातानां नामानि स्वरूपाणि शान्तिविधिं चाग्रे ग्रन्थकर्ता वक्ष्यति।

**तत्र काकमैथुनदोषः-**

दिवा वा रात्रौ यः कोऽपि काकमैथुनं पश्येत् स नरो मृत्युमाप्नोति। अथवा स्थाननाशं प्राप्नोति। तद्दोषशान्त्यर्थं शान्तिं कुर्यात्।

**शान्तिविधिः-**

अर्धवत्सरं यावद् अकाकघातव्रतं चरेत्। पितृ-देवता-द्विजेभ्यो भक्त्या प्रत्यहं अभिवादयेत्। जितेन्द्रियः शुद्धकर्मा सत्यधर्मपरायणो भूत्वा तद्दोषशमनार्थायेत्थं शान्तिं समाचरेत्। गृहस्येशानकोणे(पूर्वोत्तरदिग्भागे) होमस्थानं प्रकल्पयेत्। तस्मिन्कुण्डे

स्वगृह्योक्तविधानेनाग्निप्रतिष्ठापनं कुर्यात्। **कुण्डस्वरूपम्**- चतुरस्त्रं हस्तप्रमाणेन कारयेत्। सर्वत्र मेखलायुक्तं कुण्डं सखातं सचतुरङ्गुलं समं विप्रहस्तमात्रमन्यवर्णानामेकैकाङ्गुलहीनतो भवेत्। **योनिप्रमाणम्**-अष्टाङ्गुलोच्छ्रया चतुरङ्गुलविस्तृता द्वादशाङ्गुलदीर्घैका पश्चिमभागतः कारयेत्। **मेखलाप्रमाणम्**- चतुरङ्गुलविस्तीर्णा चतुरङ्गुलैव चोच्छ्रिता भवेत्। सर्वत्र शान्तिकर्मण्येवं कुण्डं प्रकल्पयेत्। ब्राह्मणान् षोडश वाष्टौ वा चत्वारो वेदपारगान् स्वस्तिवाचनपूर्वकं वरयेत्। तेषां मध्ये विशिष्टविद्वद्वरमाचार्यत्वे नियोजयेत्। ततो गाणपत्यं, सावित्रं(सूर्यं), पञ्चदुर्गाजपं, रुद्रसूक्तं, श्रीसूक्तं च जपं कुर्युर्द्विजोत्तमाः। कुण्डे स्वगृह्योक्तविधानेनाग्निं स्थापयेत्। मखान्ते (ग्रहमखान्ते-ग्रहहोमान्ते प्रधानहोमे) समिधा आज्येन अन्नैः अष्टोत्तरसंख्यया(१०८) (१)यत इन्द्र० (२)स्वस्तिदा० (३)त्र्यंबकं० मन्त्रैः क्रमतो जुहुयात्। तिलव्रीहिभिः जपसंख्यानुसारतो व्याहृतिहोमं कृत्वा पूर्णाहुतिं जुहुयात्। तत्पुण्यफलं गृहीत्वा प्रार्थयेत्-

**हेमशृङ्गां रौप्यखुरां कृष्णधेनुं पयस्विनीम्।**

**वस्त्रालङ्कारसंयुक्तां निष्कत्रयसमन्विताम्।।**

अनेन मन्त्रप्रार्थनापूर्वकमाचार्याय कुटुम्बिने गां दद्यात्। चित्तदोषानुसारतो न्यूनाधिकं दानादिवस्तूनां दानं कुर्यात्। ततो वित्तानुसारतो ब्राह्मणाभ्यो जापकेभ्यो दक्षिणां दद्यात्। ब्राह्मणान्भोजयित्वा शान्तिवाचनपूर्वकमेतच्छान्तिविधिं भक्त्या कुर्यात्। अनेनोक्तविधिना भक्त्या श्रद्धया कृता शान्तिरुक्तदोषनाशकी भवेत्।

**कपोत-पिङ्गल-मधु-वल्मीकदोषशान्तिः-**

कपोतो गृध्रो वा यस्य गृहमारोहेद् प्रविशेद्वा तस्य स्थानहानिर्भवेत्, अनर्थपरंपरा वा जायते। धनिनां गेहे दोषकारकं, द्ररिद्राणां गृहे कल्याणार्थं कपोतस्य–गृध्रस्य आरोहणं–प्रवेशो वा भवेत्। एतद्दोषशमनार्थाय पूर्ववच्छान्तिविधिं कुर्यात्। अत्र विशेषमाह– (१)देवाः कपोत इत्यादि ऋग्भिः पञ्चभिर्यथाविधिरष्टोत्तर–शतसंख्या जपं कारयेत्। तत आचार्याय निष्कसंयुतामरुणवर्णामेकां गां दद्यात्। ब्राह्मणेभ्यो जापकेभ्यश्च तस्यार्धं (आचार्यार्धं)वा वित्तानुसारतो दक्षिणां दद्यात्। तेन विधिना कृतशान्तिः तद्दोषात्प्रमुच्यते।

पिङ्गलस्यैवं मधुवल्मीकस्यापि दोषशमनार्थं शान्तिविधिमनेन रीत्या कारयेत्। प्रासादे, पुरद्वारे, प्राकाराद्ये, वीथिषूत्पन्नमपशकुनं (अशुभशब्दप्रवेशादिकं) ग्रामाधिपत्यर्थमेवं सीमायामशुभफलं सीमाधिपत्यर्थमशुभसूचकं भवेत्।

**अध्यायः–४६ ।। उत्पातशान्त्यध्यायः ।।**

कश्यपसंहिताग्रन्थे षट्चत्वारिंशत्तमेऽध्याय उत्पातशान्त्यरूपनामके नव–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते। अस्मिन्प्रकरणे विविधदिव्य–भौम–अन्तरिक्षादिका उत्पाताः प्रकृतेर्विकृतिकारणाद्भवन्ति तथा महोत्पातादीनां ज्ञानमेवं तच्छान्त्युपायो विशदीकृतः।

यत्र देवतामूर्तयो नृत्यन्ति–पतन्ति–प्रज्वलन्ति–पुनः पुनर्गायन्ति–रोदन्ति–प्रस्विद्यन्ति–हसन्ति, अग्निं–धूमं–स्नेहं–रक्तं–पयो–जलं वमन्ति, अधोमुखं तिष्ठन्ति–स्थानात्स्थानं व्रजन्ति–एते प्रतिमाविकारा ज्ञायेत्।

गन्धर्वनगरं- दिवा नक्षत्र(तारा)दर्शनं-महोल्कापतनं-काष्ठतृणरक्तप्रवर्षणं-दिवानिशि दिव्यगन्धर्व-दिग्धूम-भूमिकम्पाः- अग्निहीने च स्फुल्लिङ्गाः (ज्वालाशिखाः), विनेन्धनं स्युर्ज्वलनम्। रात्रौ इन्द्रचापस्य-मण्डूकशिखरे श्वेतवायसस्य दर्शनं, विनाग्निना ज्वाला, गोगज-उष्ट्रगात्रतोऽग्निज्वालादर्शनं, नृपपशुषु जन्तवो द्वित्रिमस्तकेन प्रगायन्ते, प्रतिसूर्याश्चतुर्दिक्षु युगपद्रवं, जम्बूकस्य ग्रामसंसर्गः(प्रवेशनं), धूमकेतूनां दर्शनं, रात्रौ काकानां दिवा कपोतानामाकुलत्वं, एवमुक्तमहोत्पाताः केचिन्मृत्युदाः, केचित् स्थाननाशकाः, केचित् शत्रुभयकारकाः, राज्ञां भयकारका वा वित्तनाशका भवन्ति। एतदशुभ-दारुणफलनिवारणार्थं शान्तिमाचरेत्। एतदुत्पातदोषशमनार्थ शान्तिविधिं पूर्ववदाचरेत्।

## अध्यायः-४७ ।। शिथिलीदोषशान्त्यध्यायः।।

कश्यपसंहिताग्रन्थे सप्तचत्वारिंशत्तमेऽध्याय उत्पातशान्तिरूपनामके त्रयोविंशति-श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते। अस्मिन्प्रकरणे शिथिलीजननस्य शुभाशुभफलं विवेचनं शान्तिश्च विशदीकृतः।

### विविधस्थाने शिथिलीजननस्य फलम्-

(१)मन्दिरस्य मध्ये-शुभफमप्राप्तिः। नगरजनानां सप्ताहाभ्यन्तरे व्याधिपीडा भवेत्।

(२)मन्दिरस्य प्राच्यां- अष्टदिनाल्लाभं पश्चाद् व्याधिस्तु तत्परे।

(३) मन्दिरस्याग्नेय्यां- त्रिदिनाल्लाभः पश्चादर्धं तस्कराद्भयम्।

(४)मन्दिरस्य याम्ये–अष्टाहाद्दिष्टसिद्धिस्ततः पत्नीविनाशनम्।

(५)मन्दिरस्य पश्चिमे–सप्ताहाद् धान्यलाभस्ततो नृपतेर्भयम्।

(६)मन्दिरस्य वायव्ये– प्रीतिरष्टाहात्परतः पशुनाशनम्।

(७)मन्दिरस्योत्तरे– त्रिरात्रतः शत्रुहानिः पश्चाद्धनक्षयः।

(८)मन्दिरस्येशाने–पञ्चाहात्प्रीतिः परतः पशुनाशनम्।

(९)मन्दिरस्य द्वारे– विनाशः स्त्रीहानिः पश्चात्तत्पशुनाशनम्।

(१०)शयनस्थाने– प्रीतिस्त्रिरात्रात्पत्नीविनाशनम्।

(११)पशुस्थाने –शिथिलीजनने पशुहानिः।

(१२)अम्बुभाण्डके–दासीनाशः।

(१३)सौवीरभाण्डे–स्त्रीनाशः।

(१४)अन्नभाण्डे– सुहृन्मृतिः।

(१५) तैलाज्यमध्वादीनां घटेषु– कुटुम्बहानिः।

एतत् फलं देवालये ग्राममध्ये सीम्नि च विद्यात्। शिथिलीजनने राज्यनाशो वा ग्रामनाशो भवेत्। तद्दोषशमनार्थं तस्य प्रयत्नतः शान्तिं कुर्यात्। वित्तानुसारतः सुवर्णेन तद्रूपाणि कारयेत्। तासु प्रतिमासु मृत्युमावाहयेत्। तेषां रक्तमाल्याम्बरादिभिरपमृत्युमिति द्वाभ्यां मन्त्राभ्यां भक्तितोऽर्चयेत्। तेषां पश्चिमे पूर्णकुम्भस्तद्देवता लिङ्गैर्मन्त्रतश्च तदीशान्यां गृह्यमार्गतः स्थण्डिलेऽग्निं स्थापयेत्।

तत्तद्दिक्तोदितमन्त्रैः पृथक् पृथगष्टोत्तरशतं सभक्तितः समिदाज्यान्नैर्जुहुयात्। पलाशाश्वत्थखदिरास्त्वर्कप्लक्षास्तूदुम्बरा अपामार्गवटबिल्वादिसमिधः पूर्वतः क्रमात्। उक्तसमिधलाभे तु सर्वेषु पलाशसमिधः स्मृताः। नमो ब्रह्मणे० यत इन्द्र० अग्निं दूतं० त्र्यम्बकं० मानस्तोके० गणानान्त्वा० वायस्तां सोममन्त्रकैः क्रमादघोरमन्त्रेण तत्पुरुषेण तत्र तिलव्रीहिव्याहृतिभिः शान्तिवाचनं कारयेत्।

ततः कुम्भोदकेन तत्स्थानं प्रोक्षयेत्। ततो मृत्युरूपां मूर्तिमाचार्याय सदक्षिणं दद्यात्। ततोऽन्यब्राह्मणाभ्यः शक्तितो भोजनपूर्विकां दक्षिणां दद्यात्। एवं यः सम्यग्रूपेण कुरुते सः पूवोक्तदोषात् प्रमुच्यते।

यस्य मनुष्यमस्तक इन्द्रधनुर्लुप्तं भवेत्तदा तस्य पूर्वादिदिक्क्रमतः फलम्–

(१)श्रीः (२)अग्निः (३)बन्धुनाशः (४)वित्तहानिः (५)महद्यशः (६)बन्धुलाभः (७)पुत्रहानिः (८)भूमिता एवं मध्ये महतीं गदं प्राप्नोति।

एतेषां शान्त्यर्थं पञ्चत्वग्वल्कलैर्पर्णैः पञ्चामृतफलोदकैः स्नानं कुर्यात्। तथा तल्लिङ्गैर्मन्त्रितं जलस्नानात् तद्दोषो विनश्यति। एवमग्निदाहे मस्तकमध्यमलदूषिते, दन्तच्छदे, काकपाते, सरटीपतनेऽपि चाशिषो वचनं कृत्वा ब्राह्मणान्भोजयेच्छुचिः। शरीरस्य दक्षिणभागे स्फुरणे लाभो वामस्फुरणे व्ययो भवेत्।

## अध्यायः–४८ ।। निखिलोत्पातशान्त्यध्यायः।।

कश्यपसंहिताग्रन्थेऽष्टाचत्वारिंशत्तमेऽध्याये निखिलोत्पातशान्तिरूपनामक एकोन–नवति–श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे सलक्षणं विविधोत्पातानि, तच्छान्तिविधिस्तन्नानाविधोत्पातानां शुभाशुभफलसहितं विशदीकृतम्।

**अथोल्कालक्षणम्**-

स्वर्गाच्च्युतोल्का भूमौ विविधनाम्नाभिधीयते यथा- (**१)विद्युत् (२) उल्का (३)अशनिः (४)धिष्ण्या (५)तारा** –एतत्पञ्चैव रूपाणि स्मृतानि।

**पञ्चोल्कानां फलकालः**- एताः (१)तारा (२) उल्का (३)अशनिसंज्ञितास्त्रिभिः पक्षैः(४५दिनानि) फलप्रदा भवन्ति। ताराविद्युत् तथैव षड्दिनाभ्यन्तरे फलदा। उल्काविद्युत्-अशनिसंज्ञकाः सम्पूर्णफलदायकाः। धिष्ण्यार्द्धफलप्रदा, तारा पाद (चतुर्थांश) फलप्रदा।

**१) अशनिलक्षणम्**-

पशु-इभ-अश्व-वृक्षनवक्षोणिषु क्रमात् विदारयन्निपतति। महताशनिः व्योम्नि सदा त्रासं जनयति।

**२) धिष्ण्यालक्षणम्**-

धनराशिषु वक्राकारा, विशालकाया, प्रज्वलिता, ज्वलिताङ्गारप्रभा, सुपुच्छातिकृशा, हस्तद्वयप्रमाणा, समीपतो दृश्यमाणा पतन्ति।

**३) तारालक्षणम्**-

चलिता, शुक्लवर्णा, कुन्ताकारा, हस्तप्रमाणा, रक्तकुमुदवर्णा, अधो-ऊर्ध्व-तिर्यक् शिरायुक्ता।

४) **उल्कालक्षणम्**- विशालमस्तका, तनुः पतने वर्धते, दीर्घपुच्छयुक्ता, अनेकभेदयुक्ता भवेत्।

सोल्का दीर्घपुच्छा वर्तते, तस्या बहवो भेदाः स्युः- प्रेतः, अस्त्रं, अहिः, गोमायुः, खरः, लाङ्गुलः, दंष्ट्री, कपिः, गोधाः, द्रुमः-एतेषां सन्निभा द्विशिरा उल्का नृणां पापदा-अशुभफलदा भवेत्। अश्वः, चन्द्रः, रजतं, कृष्णः, हंसः, ध्वजः, वज्रः, शङ्खः, स्वस्तिकः, आब्जम् -एतेषां रूपा उल्का शुभप्रदा सुखप्रदा च।

यदाग्नावुल्कापातो भवति, तदा राज्ञो राष्ट्रस्य च विनाशो भवेत्। यदाकाशे वोल्का विभ्रमेत्तदा लोकानामपि भ्रमकारका भवेत्। यदा सूर्यस्य चन्द्रस्य वा स्पर्शं करोति, तदा तत्तद्रूपं प्रकम्पनं, परचक्रागमनभयं, दुर्भिक्ष-जलभयं च भवति। अर्केन्द्वोरपसव्य उल्कापतने रवि(राज)विनाशदा भवति। दीर्घमान उल्कापातः सूर्य-चन्द्रोदयोः पुरतो भवेत्तदा शुभफलं करोति।

शुक्ला, रक्ता, पीता, कृष्णवर्णा विप्रादीनां (ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां) क्रमतो नाशकर्त्री भवति। मणिनिभोल्का विप्रपीडाकारकी भवति। सिता, कुन्दनिभा, स्निग्धा, ऋज्वी उल्का शुभप्रदा। नीला, श्यामा, अरुणा, अग्न्यसृग्भस्मभा, रुग्भयप्रदा भवति।

चरधिष्ण्येषु (स्वा.पुन.श्र.ध.श.) पतिता उल्का स्त्रीणां भयप्रदा। क्षिप्रनक्षत्रेषु(ह.अ.पु.अभि.) दिशां(सर्वतः) पीडाकारकी भवति। क्ष्मापतीनां(नृपाणां) स्थिरनक्षत्रेषु (उ.षा., उ.फा., उ.भा., रोहिणी)पीडाकारकी भवति। मृदुनक्षत्रेषु (मृ.रे.चि.अनु.) द्विजातीनां पीडाकारकी भवति। चौराणां दारुणनक्षत्रेषु

(मू.ज्ये.आर्द्रा,आश्ले.) पीडाकारकी भवति। द्वारे पतितोल्का तत्पुरवासिनां पीडाकारकी भवति। गोष्ठे गोस्वामिनां, जलेषु शिल्पकानां पीडाकारकी भवति।

तन्तुवृत्ता, इन्द्रध्वजसमा राजहन्त्री भवति। प्रतीपगोल्कापतने राजपत्नीं, तिर्यगा च चमूपतिं नाशयति। अधोमुख्युल्का नृपं हन्ति, ब्राह्मणान्तूर्ध्वगा तथा। वृकोदरी पुच्छनिभा जलसंक्षोभकारिणी भवति। प्रसर्पिणी सर्पवत्यङ्गनानामनिष्टदा भवति। वर्तुलोल्का पुरं हन्ति, छत्राकारा पुरोहितं हन्ति। वंशगुल्मलताकारा राष्ट्रविद्रावणी भवति। सूकरव्यालसदृशी षण्डाकारा वरप्रदा(इच्छापूर्णकरी) भवति।

इन्द्रचापनिभा राज्यं, खेलना जलनाशदा भवति। यो विद्युद्भावं(उल्काज्ञानं) वेत्ति सैव ज्योतिषो भुवि।

**परिवेषलक्षणम्-**

चन्द्रसूर्ययो: किरणा वायुनिहता मूर्च्छिता मण्डलीकृता:, ते शशीनयोर्नानावर्णाकृतय: परिवेषा: कथ्यन्ते। उक्तपरिवेषा रक्तनीलपाण्डु-रकपोताम्राभकपिला: सपीता: शुक्लवर्णाश्च क्रमत: पूर्वादिषु सुवृष्टिदा भवन्ति।

यदि ते मुहुर्मुहुर्जायन्ते, तदा सम्पूर्णफलप्रदा न भवन्ति। शुभ्रस्त्वविकलस्निग्ध: क्षीरतैलाम्बुसन्निभ:, चापशृङ्गाटकरथक्षतजात:, अरुणसदृश: परिवेष: शुभप्रद:, किन्त्वनेकवृत्तवर्णोऽयं परिवेषो नृपान्तकृद्भवति। अशोकपुष्पसङ्काशो धूम्राभ: परिवेष: कलहप्रदो भवति। मयूरपत्रसदृश: पीताभ: परिवेषो वातवृष्टिकृद्भवेत्। अहर्निशं प्रतिदिनं चन्द्रार्कौ यदारुणौ लोहितोऽपि, तदा परिवेषो नृपवधं कुरुते। द्विमण्डलश्चमूनाथं(सेनापतिं), त्रिमण्डल: परिवेषो नृपनाशकरो भवति।

परिवेषगतः सौरिः क्षुद्रधान्यविनाशको भवति। युद्धकृद्भूमिजो जीवः सर्वेषामामयप्रदौ। बुधः सस्यहानिदः, शुक्रो नृपाणां भयप्रदो भवति। परिवेषगतः केतुर्दुर्भिक्षकलहप्रदो भवति। राहुपीडां नृपभयं गर्भच्छेदं च करोति। यदा परिवेषस्थौ द्वौ ग्रहौ दृश्येते, तदा क्षितीशमरणप्रदौ। परिवेषगतास्त्रयो ग्रहाः कलहानर्थं च कुर्वन्ति। चत्वारो ग्रहाः परिवेषस्था नृपेशमरणप्रदा भवन्ति। परिवेषगताः पञ्च ग्रहा जगत्प्रलयदा भवन्ति। ये वक्रिणो ग्रहास्तेषामेवं फलं भवेत्। कुजादीनां नृपहानिर्वक्रित्वेऽपि परिवेषे पृथक् पृथग्भवति। एवं धिष्ण्यानां परिविष्टेषु यत्फलं ग्रहवद्वदेत्।

द्विजातीनां परिवेषः प्रतिपदादिषु नेष्टफलदो भवति। पञ्चम्यादिषु तिथिषु (५,६,७) त्रिषु दिवसेषु क्रमात् परिवेषः शुभदो भवति। युवराजस्याष्टम्यां परिवेषस्त्वनिष्टप्रदो भवेत्। राज्ञां नवम्यादिषु (९,१०,११) च त्रिष्वशुभदो भवति। पुरोहितस्य द्वादश्यां निधनाय धनार्थाय च भवति। त्रयोदश्यां परिवेषः सैन्यरोधो वा क्षितीशानामवरोधकारको भवति। चतुर्दश्यां राज्ञां पीडाकारकः, पञ्चदश्यां नृपस्य पीडादो भवति।

परिवेषस्य मध्यगा रेखा स्थायिराज्ञां, यायिनां पार्श्वे नेष्टफलदा भवति। प्रायेण वर्षा–शरद्–ऋतूत्पन्नः परिवेषो जलप्रदः, अन्येषु ऋतुषु पूर्वोक्तफलदायको भवति।

**इन्द्रचापलक्षणम्–**

भानोर्नानावर्णांशयुक्ताः किरणा अभ्रवायुयोगवशाद् अनेकवर्णरञ्जिता, नभोमण्डले चापाकार(धनुषाकार)सदृशं दृश्यन्ते सैव इन्द्रचापः कथ्यते। अथवा शेषनागेन्द्रदीर्घनिःश्वासकारणात् तस्य विषप्रभावादिन्द्रचापो भवेत्। इन्द्रधनुषं यद्दिशा–

विदिशायां दृश्यते, तद्दिशायां स्थितनृपविनाशं करोति। पीतपाटलनीलैश्च वह्निशस्त्रास्त्रभीतिदो भवति। व्योम्निजं चापं नृक्षयकृद्, भूमिजं सस्यहानिदं भवति। जलोद्भूतमवृष्टिदं, वल्मीकोत्थं रणप्रदं भवति। पूर्वदिशि अवृष्टौ वृष्टिदं, वृष्ट्या च वृष्टिदं भवति। इतरयोर्दिशि सदैव वृष्टिदं भवति।

रात्र्यां प्राच्यामिन्द्रधनोर्दर्शनं भवतेत्तदा नृपहानिर्भवेत्। याम्यदिशायां स्थित इन्द्रधनुः सेनापतिं हन्ति, पश्चिमे नायकोत्तमं, सौम्यदिग्भागे मन्त्रिणं हन्ति, कोणसम्भवं सचिवं हन्ति। रात्र्यां शुक्लवर्णाद्यमिन्द्रधनुर्विप्रपूर्वकान् हन्ति। यद्दिग्भवं चापं स्पष्टं तद्दीगीशनृपोत्तमं हन्ति। अच्छिन्नमतिगाढमिन्द्रधनुः शुभफलदायकं भवति।

यदि द्वे इन्द्रधनू दृश्येते, तदा प्रातिकूल्यं(अशुभप्रदं) भवति। यदा इन्द्रधनुःप्रातिकूल्यं स्यात्तदा नृपान्तकं व्याधिभयकारकं भवति। अनुकूल्याय तत्सुतादिक्षेमकारकं भवति। इन्द्रचापमग्निधूमाभं सर्वेषां जनानामशुभप्रदं भवति।

**गन्धर्वनगरलक्षणम्–**

पूर्वादिदिक्षु सम्भूतगन्धर्वनगरं नेष्टफलदं भवेत्। (१)पूर्वे–धराधीशानां, (२)दक्षिणे–चमूनाथानां, (३)पश्चिमे–सेनेश्वराणां, (४)उत्तरस्यां पुरोधानामनिष्ट–फलदायकं भवेत्। ततो वर्णानुसारतः फलम्–(१)सितं–विप्राणां, (२)रक्तं–क्षत्रियाणां, (३)पीतं–वैश्यानां, (४)कृष्णं–शूद्राणामनिष्टदं भवेत्।

यदा रात्रौ गन्धर्वनगरं दृश्यते, तदा धराधीशविनाशो भवेत्। यदा चित्रवर्णमनेकरूपं प्राकारध्वजतोरणयुतं गन्धर्वनगरं दृश्यते, तदा महायुद्धमन्योन्यं धरणीभुजां सह जायते।

**प्रतिसूर्यलक्षणम्-**

कदाचिदभ्र-सूर्यकिरणवशात् संघातकयोगकारणात् सूर्यबिम्बसदृशं बिम्बं दृश्यते सैव प्रतिसूर्यः कथ्यते। प्रतिसूर्यः सूर्यसमानो दृश्यते। स्निग्धवर्णः प्रतिसूर्यो यदा पार्श्वे दृश्यते, तदा भयप्रदः, किन्तु वैदूर्यसदृशो वा शुक्लवर्णः प्रतिसूर्यः शुभप्रदः। पीतवर्णो व्याधिदः, कृष्णो मृत्युकरः, अरुणवर्णो युद्धदो भवेत्। यदा प्रतिसूर्याणां माला दृश्यते, तदा शत्रुचोरभयप्रदा भवेत्।

सूर्यादुत्तरस्थः प्रतिसूर्यो जलदः, भानोर्याम्ये प्रतिसूर्योऽनिलप्रदः। उभयस्थो (उत्तर-दक्षिणयोरुभौ दिशि) दृश्यते, तदातिजलदो भवेत्। सूर्यस्योपरि दृश्यमाणः प्रतिसूर्यो नृपनाशको भवेत्। सूर्यस्याधोभागे दृश्यमाणः प्रतिसूर्यो जनानां नाशको भवेत्। यदा तीक्ष्णांशोर्वा शीतद्युतः प्रतिसूर्यो दृश्यते, तदा सम्पूर्णस्य जगतो विनाशो भवेत्।

**निर्घातलक्षणम्-**

वायुनाभिहतो वायुर्गगनात्पतितः क्षितौ, यो दीप्तः खगरुतं स निर्घातोऽतिदोषकृद् भवेत्। सूर्योदयसमये निर्घातोऽनिष्टफलदो भवेत्। स निर्घातो विशेषतया क्षितीशाद्यङ्गनानां विशामनिष्टदो भवेत्।

सूर्योदयात् प्राक् प्रहरात् पौरजनानां शूद्रशाबराणां हानिदः। आमध्याह्नात्तु विप्राणां राजोपजीविनामशुभदः। तृतीययामे वैश्यानां जलजानामनिष्टदः। चतुर्थे यामे चोरनाशं करोति, सन्ध्यायां सङ्करान् हन्ति। रात्रावाद्ये यामे सस्यहानिः, द्वितीये यामे पिशाचकानां हानिदः। अर्धरात्रे तुरगानां, रात्रौ तृतीये यामे

लिपिलेखकानामशुभभप्रदः, रात्रौ चतुर्थयामे निर्घातपात इतराङ्गनान्हन्ति। निर्घातभीमगम्भीरशब्दः कृतस्तत्र तदीश्वरं नाशयति।

**दिग्दाहलक्षणम्–**

दिग्दाहः पीतवर्णश्चेत् क्षितीशानां भयप्रदः। अग्निवर्णे–देशनाशो, वारुणवर्णोऽनिलप्रदो भवेत्। धूम्रवर्णः सस्यविनाशाय, कृष्णः शस्त्रभयप्रदः।

पूर्वदिग्भागदाहः क्षत्रियाणां, परेशानां चाभीष्टदः। आग्नेयदिशायां युवराजस्य, शिल्पीनामशुभप्रदः। याम्ये मूर्खवैश्या नराधमाः पीडां व्रजन्ति। नैर्ऋत्यदिशि चोराणां, पुनर्भूनां, प्रमदागणानां पीडा भवति। प्रतीच्यां तु कृषिकराणां, वायव्यां पशुजातीनां पीडा भवति। सौम्यां विप्रानुरीशान्यां वैश्याः पाखण्डिनो जनाः पीडामनुभवन्ति।

दिग्दाहो यः स्वर्णनिभः स जन्तूनां मङ्गलप्रदो भवति। पञ्चदिग्दाहदिवसा राष्ट्रविद्रावणप्रदा भवन्ति।

**रजोलक्षणम्–**

यदा ग्राम–वन–पर्वताः सितरजसाच्छन्ना स्युः, तर्हि भूमिपानां निधन प्रदाः। यस्यां दिशि धूम्रसमुद्भवो जायते तस्यां दिशिस्थजन्तूनां हानिदः शस्त्रकोपदः। कृष्णवर्णरजो मन्त्रिजनपदानां व्याधिदम्। रजोऽर्कोदयकाले गगनस्थगयन्निव विजृम्भति, तदा दिनद्वयं चैकदिनमत्युग्रो भयदम्। यदा रज एकरात्रं निरन्तरं भवेत्तदा नृपं हन्ति। यदा रजः सततं द्विरात्रं तदा परचक्राभिगमनं भवेत्। सततं त्रिरात्रं रजो भवेत्तदा क्षामडामरमातङ्को भवेत्।

यदि रात्रिचतुष्टयं रजो स्यात्तदा ईतिदुर्भिक्षमतुलं भवेत्। निरन्तरं पञ्चरात्रं रजो भवेत्तदा महाराजो विनाशमायाति। शिशिर–ऋतुभिन्ने रजः सम्पूर्णफलदं भवेत्।

**भूकम्पलक्षणम्–**

भूभारखिन्ननागेन्द्रशेषविश्रामसम्भवो भूकम्पो जगतामशुभाय भवेत्। द्विजादीनां यामक्रमेण भूकम्पोऽनिष्टदः, उभयोः सन्ध्ययोः क्षितीशानामनिष्टदः। अर्यमाद्यानि (उ.फा., ह.,चि., स्वा.) चत्वारि, द्रस्त्रेन्द्वदितिभानि (अश्वि.,मृग.,पुन.) च वायव्यमण्डलं भवति। एतस्मिन्भूकम्पो यदि भवेत्तदा नृप–सस्य–वणिक्–वेश्या–शिल्प–वृष्टिविनाशको भवति। पुष्यद्विदैवा (पुष्य,विशाखा), भरणी पितृभाग्याग्निभानि (मघा,रोहिणी,कृत्तिका) च आग्नेयमण्डलं भवति। नक्षत्रेष्वेतेषु भूकम्पो यदा भवेत्, तदा नृपवृष्ट्यर्घनाशस्तथा शाबरसङ्करान् च हन्ति। अभिजित्, रोहिणी, उ.षा., ज्येष्ठा, धनिष्ठा, श्रवण, अनुराधा –एतन्माहेन्द्रमण्डलसंज्ञकं भवति। तत्र यदि कम्पो भवेत्तदा राजनाशाय, रोगाय च भवति, तथा मार्दजदर्दुरान् च हन्ति। मूलाहिर्बुध्न्यवरुणपौष्णार्द्रासार्पभानि वारुणं मण्डलसंज्ञकम्। एतस्मिन्कम्पो यदि भवेत्तदा राज्यनाशकरः पौण्ड्र–चीन–पुलिन्दिकान् च हन्ति।

प्रायेण निखिलोत्पाताः क्षितीशानामनिष्टदा भवन्ति। षड्भिर्मासैश्च भूकम्पो द्वाभ्यां मासाभ्यां दाहः फलप्रदो भवति। पञ्चभिर्मासैरनुक्तं रज उत्पातानां च फलदं भवति।

**अध्यायः-४९ ।। मिश्रकाध्यायः।।**

कश्यपसंहिताग्रन्थ एकोनपञ्चाशत्तमेऽध्याये मिश्रकरूपनामके शताधिकसप्तसप्तती श्लोकाः सम्मिलिताः। तत्र प्रायेणानुष्टुप्छन्दः प्रयुक्तो दृश्यते।

अस्मिन्प्रकरणे राजाचारम्, अश्वशान्तिविधिः, अभ्यङ्गस्नानं, शिवरात्रिव्रतं, पञ्चम्यां नागपूजनं, चतुर्थ्यां गणेशपूजनं, सप्तम्यां भास्करार्चनादिकं, सूर्यादिग्रहाणामाधिपत्यवसुन्धरा, शून्यराशयः, मासदग्धा राशयः, शून्यतिथयः, अभुक्तमूलं, अभुक्तमूलजननशान्तिविधिः, सप्तविंशतिनक्षत्रजन्मफलं च विशदीकृतम्।

**राजाचारः-**

कुलीनः, धार्मिकः, शूरः, नीतिज्ञः, स्मृतिमान्, शुचिमान्, सत्यवाक्, सत्यसम्पन्नः श्रीमान्वृद्धोपसेवकः, अलुब्धः, अव्यसनः, मन्त्रगोप्ता, सप्ताङ्गसंयुतः, उपायसंयुतः, शक्तित्रयात्मा, गुणभूषणः, देशकालविभागज्ञः, विपत्पातनिवारणज्ञाता - एतल्लक्षणानि राज्ञां श्रेष्ठगुणाः सन्ति। तस्य कार्यस्य सिद्धिः सप्ताङ्गे तथा मन्त्रपञ्चागे वर्तते। स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि सप्ताङ्गानि। सामभेदौ दानदण्डौ चत्वार उपायाः, उत्साहमन्त्रप्रभवस्तिस्रः शक्तयः, सन्धिश्च विग्रहो यानमासनं संश्रयो द्वैधीभावः -एते षड्गुणाः। एवंलक्षणसंयुक्तः सेवकैः सेव्यमानो राजा उन्नतिं प्राप्नोति।

**दिनचर्या-**

प्राक्सन्ध्यायां सूर्योदये श्रीकामी गीततूर्यरवैः शय्यां परित्यजेत्। अनन्तरं मङ्गलपाठकान् ब्राह्मणाग्न्यर्कगोहेमघृततोयधराधिपान् च विलोकयेत्। ततो मूत्रपुरीषे

उदङ्मुखः कुर्यात्। प्राङ्मुखोदङ्मुखो वापि वितस्तिमात्रकाष्ठेन सत्त्वचापारितेन च दन्तधानमाचरेत्। तदर्थं शिरीषलोध्रपनसनिम्बजम्बूकदम्बकैः कुलजाङ्कोलबकुलैः काष्ठैर्दन्तधावनेन लक्ष्मीवृद्धिर्भवेत्। भाण्डारकरवीराम्लनीपक्रमुकदाडिमैः करञ्जकोविदारार्कै रत्नवृद्धिर्भवेत्। अपामार्गवटप्लक्षखदिरोदुम्बरार्जुनैर्बिल्व-पुन्नागबकुलैरायुर्वृद्धिर्भवेत्। श्रीकण्टचतपाम्बष्टनारिकेरविभीतकैः कङ्कुष्टशालनार-ङ्गनिचुलैरतुलं यशः प्राप्नोति। पलाशाश्वत्थजम्बीरमातुलङ्गकपित्थकैरगस्ति-तालहिन्तालकङ्ककाष्ठैश्च दन्तधावने निःस्वता भवति। तिन्तिणीकशमीखण्ड-मध्वामलकवञ्जुलैर्विकङ्कताव्याघ्रपादसर्ज्जकृष्ण्यैर्यशःक्षयो भवति। हरीतकीविष्णुनागकतकोद्दलतापनैः कार्यासाढकिवाग्रूचीवलाश्लेष्मातकैर्गदो भवति। भल्लातकीदेवदारुमदयन्तीक्षुपादकैस्तृणाङ्गुलाश्मलोहाद्यैः शत्रुभ्यः साध्वसं भवति।

ततो राजा हरिकथालापं शृण्वन् सन्ध्यादिनियमान् चरेत्। श्वेतवृषभदूर्वेभदानतीर्थाम्बुमृत्तिका धारयित्वा सहोमाज्यावेक्षणं दर्पणेऽपि वा कार्यम्। देवद्विजगुरून् नत्वा गां वत्ससंयुतां तेभ्यो दत्त्वा। तेभ्यस्तिथिश्रवणपूर्वकं स्वस्तिवाक्यं कुर्यात्। वैद्यात् स्वतनुस्थितिं ज्ञायेत्। शुक्लमाल्याम्बरधरः सर्वाभरणभूषितः सभां प्रविशेत्। ततो भृत्यशिष्याप्तवाक्यज्ञां पर्यायिकैः सह मन्त्रं कुर्यात्। राज्यस्य वृद्धिं धर्मेण चिन्तयेत्। मध्याह्निकं कृत्वा पुत्राद्यैः सह भुञ्जीत। हरीशयोर्गाथां शृण्वन् इष्टालापांश्च निर्वर्त्य गजाश्वादींश्च वीक्षयेत्। सायं सन्ध्यादिकं कृत्वा सतां प्राग् विनिवेशयेत्। ततो राजा सन्ध्यां बलिक्रियां विलासिन्यैः सह कुर्यात्। राज्यस्य चिन्तनं कृत्वा गुप्तचारकान् प्रेषयेत्। ततोऽन्तःपुरं प्रविशेत्।

**अश्वरक्षणम्**–

यस्य भूपतेरश्वा भवन्ति, स रणे विजयी भवति। सूर्ये स्वातीनक्षत्रे सति, अश्वानां बहवो रोगा भवन्ति। यदा यदा अश्वानां रोगा भवन्ति तदा लोकपालरैवन्तपूजाहोमं कारयेत्। साश्वशान्तिर्भानुवारे मेषसङ्क्रान्तावयने, विषुवद्द्वये, दिनक्षये, व्यतीपाते, द्वादश्यां, अश्विनीनक्षत्रे कारयेत्।

**शान्तिविधिर्यथा**–

ऐशान्यामष्टभिर्हस्तैश्चतुर्भिर्हस्तैर्वा मण्डपं विरच्य, तं मण्डपं चतुर्द्वारं सविधानेन तोरणाद्यैरलङ्कृतं विधाय, तन्मध्ये पञ्चविंशतिमानतो वेदिकां कुर्यात्। तस्य मण्डपस्य बहिः प्राच्यां पूर्वोक्तलक्षणं कुण्डं कार्यम्। ततः स्वस्तिवाचनपूर्वकं पूर्ववद् विप्रान् वरयेत्। सूर्यपुत्रं, हयारूढं, पञ्चवक्त्रं, दशावरं, रक्तवर्णाङ्कुशं, खड्गं, द्विभुजं, रैवन्तं स्मरेत्। **तन्मन्त्रः**–

**सूर्यपुत्र नमस्तेऽस्तु नमस्ते पञ्चवक्त्रक।**

**नमो गन्धर्वदेवाय रैवन्ताय नमो नमः।।**

अनेन मन्त्रेण गन्धवस्त्राक्षतादिभी रैवन्तं वेदिकामध्ये तन्दुलोपरि विधिवत् पूजयेत्। तत्परितः स्वस्वमन्त्रैश्च पञ्चलोकपालान् पूजयेत्। प्राग्वन्मन्त्रजपपूर्वकं पञ्चैव लोकपालाः स्थाप्याः। चतुर्द्वारेषु पूर्वत ऋग्वेदादीन् चतुर्वेदान् जपेत्। गन्धवस्त्राद्यलङ्कृतानुक्तवर्णान् पञ्चत्वक्पल्लवोपेतान् पञ्चामृतसमन्वितान् पूर्णकुम्भान् तल्लिङ्गैर्मन्त्रैर्द्वारिष्वर्चनपूर्वकं स्थापयेत्। स्वगृह्योक्तविधानत आचार्यपूजां कृत्वा व्याहृतिभिस्तस्मिन्कुण्डे हुताशनं संस्थापयेत्। ततस्तदातन्द्रित आज्यभागान्तं दत्त्वा

मुख्याहुतिं जुहुयात्। प्रयत्नत आद्यान्तप्रणवयुक्ते "अग्नये स्वाहेति" आदौ घृतेन हुत्वा पलाशसमिदाज्येन रैवन्तपूजामन्त्रेण पृथगष्टोत्तरशतरं व्रीहितिलान् व्याहृतिभिराचार्यो जुहुयात्। अनेन विधिनैकरात्रं त्रिरात्रं वा नवरात्रमथापि वैकभक्तो जितेन्द्रियः कुर्यात्। सम्यग्जपादिपूर्वकं कर्ता पूर्णाहुतिं जुहुयात्। ततो सुनैवेद्यं मङ्गलघोषैश्च समर्पयेत्। ततस्ते द्विजाः कुम्भोदकैरश्वान्व्रजन्तः प्रादक्षिण्यं हुतशेषेण सहाश्वान् जपन्त उत्तमं बलिं दद्युः। जीमूतस्येत्यनूवाकान् पठित्वा चतुर्दिक्षु बलिं विनिःक्षिपेत्। ततो निष्कपञ्चकमाचार्याय दक्षिणां दद्यात्। तदर्धं वा तदर्धं वा यथा वित्तानुसारतो दक्षिणां ब्राह्मणेभ्यो जापकेभ्य आचार्याय प्रदापयेत्। पृथक् पृथग्विशिष्टेभ्यो ब्राह्मणेभ्यो यथाशक्त्या दक्षिणां प्रदापयेत्। शान्तिवाचनपूर्वकं ब्राह्मणान्भोजयेत्। एवं योऽश्वशान्तिं कुरुते तस्याश्वा रोगेभ्यः प्रमुच्यन्ते दिने दिने वर्धन्ते च।

आश्विनसितचतुर्दश्यां वामावास्यां तथा ऊर्जादौ(कार्त्तिकादौ) स्वातीसंयुक्ते यदा दीपावलिर्भवेत्तदा तैले लक्ष्मीर्जले गङ्गा वसेत्। तदा अलक्ष्मीपरिहारार्थमभ्यङ्गस्नानं कारयेत्। अमावास्यायां सङ्क्रान्तौ(सूर्यसङ्क्रमणे) पाते(व्यतीपाते वैधृतिपाते) दिनक्षये तदाभ्यङ्गं प्रातः स्नानं च न दोषाय, पापनाशकं भवेत्।

सिंहस्थे भास्करे, रोहिणीगते चन्द्रे, अष्टमीतिथिर्यदार्धरात्रियुता स्यात्तदा

जयन्ती नाम योगो भवेत्। माघमासेऽर्धरात्रयुतायां कृष्णचतुर्दशीतिथौ शिवरात्रिव्रतं भवेत्। यो व्रतं कुरुते स नरोऽश्वमेधयज्ञफलं लभेत्। ऋणरोगविमुक्तय आषाढसितपञ्चम्यामसंप्राश्योपोषितः षण्मुखदेवं(कार्त्तिकेयं) अर्चयेत्। कार्त्तिके शुक्लचतुर्थ्यां यः सर्पेभ्यः पयःप्रदानेन नागपूजनं कुरुते तस्य भयलोभविनाशो भवेत्। भाद्रपदे मासि शुक्लचतुर्थ्यां मोदकाहारैः सर्वविघ्नोपशान्तये गणनायकं पूजयेत्।

माघे मासि शुक्लसप्तम्यां यो नरो भास्करमर्चयति स नर आरोग्यं श्रियमाप्नोति रोगी रोगात्प्रमुच्यते। आश्विनमासि शुक्लनवम्यां भक्तितो लक्ष्मीं सरस्वतीं शक्रमर्चयति स नरो धनवान् विजयी भवेत्। कार्त्तिकमासि कृत्तिकानक्षत्रयोगे चोपोष्य शिवप्रीत्यै वृषमुत्सृजेत् स नरः पुरारिध्वजदर्शनात् स्वर्गभाग्भवेत्।

**ग्रहाधिष्ठितो भूमिभागः-**

**शनिः-**

हिमाद्रिविन्ध्ययोर्मध्ये या भूमिः सा सूर्यसुतस्य(शनैश्चरस्य) वर्तते।

**बुधः-**

विन्ध्याद्रिगङ्गयोर्मध्ये या भूमिः सा बुधस्य वर्तते।

**बृहस्पतिः-**

विन्ध्यगोदावरीमध्ये या भूमिः सा सुरार्चितस्य(बृहस्पतेः) वसुन्धरा वर्तते।

**शुक्रः-**

गोदावरीकृष्णवेण्योर्मध्ये या भूमिः सा काव्यस्य(शुक्रस्य) वसुन्धरा वर्तते।

**मङ्गलः-**

वेण्यालङ्कयोर्मध्ये या वसुन्धरा सा धरात्मजस्य वर्तते।

**सूर्यचन्द्रौ-**

समुद्रमुद्रितक्षोणीनाथौ सूर्यनिशीश्वरौ वर्तेते।

याः शून्यराशयः, दिनदग्धराशयः, मासदग्धराशयः, मासशून्यास्तिथयः, ताः शुभे कर्मणि विवर्जयेत्।

**विशेषाशुभनक्षत्रकालः-**

अभुक्तमूलजं पित्र्यमभुक्तपितृधिष्ण्यभं जातं पुत्रं पुत्रीमपि परित्यजेत्। मूलनक्षत्रस्याद्यपादजः शिशुः स्वपितरं हन्ति, द्वितीयचरणजो मातरं हन्ति, तृतीयोऽर्थान्सुहृदं च हन्ति। (चतुर्थचरणं शुभम्।) एतदेवाशुभफलं सार्पर्क्षे( आश्लेषानक्षत्रे) प्रथमपादं त्यक्त्वान्यपादेषु भवेत्। तद्दोषशमनार्थाय प्रयत्नतः शान्तिं कुर्यात्।

**शान्तिविधिः-**

स्वसद्मन ईशानभागे पूर्वे वोत्तरे भागे मण्डपं चतुरस्रं च चतुर्हस्तप्रमाणं चतुर्द्वार-समायुक्तं तोरणाद्यैरलंकृतं गोमयेनानुलिप्तं च मण्डपं विरचयेत्। पूर्वोक्तलक्षणोपेतं कुण्डमीशानतो बहिः कार्यम्। सुवर्णेन प्रमाणेन तदर्धेनार्धेन वा यथा वित्तानुसारेण निर्ऋतेः प्रतिमां कुर्यात्। उदुम्बरवटाश्वत्थप्लक्षाम्रत्वक् सपल्लवा, शतौषधीमूल-शङ्खनवरत्नानि, मृत्तिका, पञ्चामृताम्बुसद्बीजं, कुङ्कुमं, रोचनं, फलं च कुम्भे निःक्षिपेत्।

**दश सर्वौषध्यः-**

कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनं वचार्कचोरकं मुस्ता -एता दश सर्वौषध्यः कथ्यन्ते।

**अष्टविधा मृत्तिका–**

गजाश्वरथवल्मीकसङ्गमस्थानसम्भवा क्षुद्रगोरजनगरद्वारस्थानस्था मृत्तिका – एषाष्टविधा मृत्तिका स्मृता।

**सद्बीजः–**

तिलमाषव्रीहियवा गोधूमानि प्रियङ्गवश्चणकैः सहिताः सद्बीजाख्यानि वर्तन्ते।

ततः कर्ता स्वस्तिवाचनपूर्वकं श्रोत्रियान् अष्ट–द्वादश वा षोडश ब्राह्मणान् वरयेत्। ईशानादिचतुष्कोणे जलपूरितान् पूर्वोक्तद्रव्यसंयुक्तान् रक्तवर्णकलशान् स्थापयेत्। तन्दुलोपरि शतच्छिद्रं बृहत्कुम्भं, मण्डपमध्ये खड्गचर्माग्रदंष्ट्रिणः स्थापयेत्। ततः मोषुणश्चेति मन्त्रेण निर्ऋतिं पूजयेत्। शुक्लाक्षताम्बरैः षोडशोपचारैः, दधिमध्वाक्षतैः कुम्भांस्तल्लिङ्गमन्त्रकैः विधिवत्प्रपूजयेत्। गन्धपुष्पैश्च धूपाद्यैः कुशपूर्वकैरर्चयेत्। रुद्रेण, भद्रेण, अग्निसूक्तेन, आनो भद्रा, पूर्वसूक्तेन, भक्तितोऽर्चयेत्। अत्र मूलाय स्वाहा प्रजापतयेत्युपहोममन्त्रौ स्तः। पलाशसमिदाज्येनाष्टसहस्रकमथवाष्टोत्तरशतं प्रत्येकं जुहुयात्। मूलं प्रजामित्यष्टभिरनुवाकैर्मन्त्रद्वयेन वा सावित्र्यसौम्यनैर्ऋत्यमन्त्रैरश्वत्थसम्भवैः समिद्भिश्च तिलव्रीहीन् व्याहृतिभिर्हुत्वा पूर्णाहुतिं जुहुयात्। ततः स्नानकर्म मङ्गलघोषैः समाचरेत्। आद्यपादे पितुर्गण्डे त्रयाणामभिषेकं कुर्यात्। ततः शतच्छिद्रयुक्तं बृहत्कुम्भं धारयित्वाभिषेकं कुर्यात्। अनेन पूजनाख्येन कर्मणा निर्ऋतिः प्रीयतामिति वाचयेत्। आचार्याय वृषभं लोहपिण्डं स्वशक्त्या सदक्षिणं दापयेत्। अन्यब्राह्मणेभ्यो यथाशक्त्या दक्षिणां दद्यात्। श्रोत्रियाय विशिष्टाय ब्राह्मणाय कुटुम्बिने वस्त्रालङ्कारसंयुक्तां पयस्विनीं धेनुं दद्यात्। ततो भयलोभविवर्जितो ब्राह्मणान् भोजयेत्।

एवं यः श्रद्धया भक्तिसमन्वितः शान्तिं कुरुते स गण्डदोषात्प्रमुच्यते। एतत्सर्वविधिं सार्पभेऽपि प्रायेण समानं वर्तते। ततो मखान्ते सर्पेभ्यः स्वाहेति जुहुयात्। आश्लेषाभ्यः स्वाहा, दन्दशूकेभ्यः स्वाहेत्युपहोमं कारयेत्। सर्पेभ्य इत्यष्टौ मन्त्रस्य आस्तिक–ऋषिस्त्रिषु सर्पाश्च देवताः। नमोऽस्तु सर्पेभ्य इति मन्त्रेण पूजनं कारयेत्।

**अथारिष्टयोगाः–**

(१) षष्टाष्टरि:फगश्चन्द्रः क्रूरग्रहैश्च युतवीक्षितस्तदा जातस्य सद्यो मृत्युदः, किन्तु शुभग्रहेक्षितः स्यात्तदाष्टवर्षैर्मृत्युदो भवेत्।

(२) सौम्यग्रहोऽपि यदा वक्र–क्रूरग्रहैर्वीक्षितस्तदा शशिवन्मृत्युदो भवति।

(३) यस्य जन्मनक्षत्रे सूर्यार्कीन्दुकुजानां कोऽपि ग्रहो वर्तते तस्य जातकस्य पिता माता भ्राता वा निधनं व्रजेत्।

(४) लग्नगो भौमोऽपि पापेक्षितो युतः, किन्तु न शुभेक्षितस्तदा मृत्युदो भवेत्।

(५) अष्टमस्थानगतो भौमो यदा सौरिणार्केण वा युतस्तदा मृत्युदो भवेत्।

(६) पापान्वितः शशी धर्मद्यूनलग्नगः, शुभैरवीक्षितयुतस्तदा मृत्युप्रदो भवेत्।

(७) सन्ध्यायां चन्द्रहोराद्यैर्गण्डान्तं निधनकारकं भवेत्। सूर्योदयास्ते मण्डलार्धात्तु (सूर्यार्धबिम्बात्) त्रिनाडिका सन्ध्या भवति। तथैवार्धोदयात्पूर्वं प्रातः सन्ध्या त्रिनाडिका भवति।

(८) चक्रे पूर्वापरार्धेषु क्रूरसौम्येषु कीटराशिलग्नगे लग्नस्थाभिमुखै रथैर्जातो निधनं याति।

(९) लग्नसप्तमगौ पापग्रहौ वा चन्द्रो यदा क्रूरसंयुतः, सौम्यग्रहैरवीक्षितः, तदा शीघ्रान्मृत्युर्भवेत्।

(१०) क्षीणे शशिनि लग्नभावस्थे पापैः केन्द्राष्ट(१-४-७-१०-८)स्थानसंस्थितैर्जातो मृत्युमाप्नोति। सोऽचिरायुर्न संशयः।

(११) पापग्रहयोर्मध्यगश्चन्द्रो लग्नाद्वधान्त्यसप्तमभावगः(८-१२-७), तदा स शिशुरचिरान्मृत्युमाप्नोति।

(१२) पापग्रहद्वयमध्यगते लग्ने चन्द्रसमाश्रिते, पापग्रहाः सप्ताष्टमस्थानगाः स्युस्तदा स शिशुर्मात्रा सह मरणं व्रजेत्।

(१३) रवौ पापान्विते ग्रस्ते यदा लग्नगो भवेत्, तथाष्टमस्थानगो भौमः स्यात्तदा शस्त्रकृन्मरणं भवेत्।

(१४) शनैश्चरार्कभौमेषु रिःफधर्माष्टमस्थानगेषु, शुभग्रहैरवीक्ष्यमाणेषु जातो निधनं व्रजेत्।

उक्तारिष्टयोगा यदा पापग्रहेण युतेक्षिताः स्युस्तदोक्तफलप्रदा भवेयुः, अन्यथा सौम्येक्षितयुतास्युस्तदा सर्वथा विफलप्रदा भवन्ति।

**अरिष्टभङ्गप्रदयोगाः-**

(१) एकोऽपि गुरु-बुध-शुक्राणां लग्नात्केन्द्रगो यदि, तदा निखिलारिष्टं हन्ति, भास्करस्तिमिरनाशको यथा।

(२) एक एव बली जीवो लग्नगः सम्पूर्णारिष्टसञ्चयनाशको भवेत्, यथा भक्त्या शूलिनः प्रणामः पापचयं हन्ति।

(३) एक एव हि लग्नेशः केन्द्रगः सबलः स्यात्तदा निखिलारिष्टं हन्ति, यथा पिनाकी त्रिपुरं हन्ति।

(४) शुक्लपक्षे क्षपा(रात्रि)जन्मलग्ने सौम्यग्रहनिरीक्षिते तथा कृष्णपक्षे विपरीते जातस्यारिष्टविनाशो भवेत्।

(५) यस्य जातस्य जन्मन्यष्टमस्थानगताः स्वक्षेत्रगा ग्रहाः स्युस्ते शिशुं चिरायुषं कुर्वन्ति।

**अश्विन्यादिजन्मनक्षत्रफलम्-**

(१) अश्विनी- अश्विभे जातो नरो दक्षः, सुरूपः, सुभगः, मतिमान्, भूषणप्रियः, अङ्गनावल्लभः, शूरो वा भवेत्।

(२) भरणी- कामोपचारकुशलः, सत्यवादी, दृढव्रतः, लघुभुक्, सत्यवान्, धीरः, अरोगी यामयधिष्ण्यजो भवति।

(३) कृत्तिका- तेजस्वी, मतिमान्, दान्तः, बहुभुक्, प्रमदाप्रियः, गम्भीरः, कुशलः, मानी, शुचिः वह्निधिष्ण्यसम्भवो भवति।

(४) रोहिणी-शूरः, सुस्थिरः, धीरः, मानी, भोगभाक्, सुरतप्रियः, प्रियवाक्, चतुरः, दक्षः, तेजस्वी, ब्राह्मधिष्ण्यजो भवति।

(५) मृगशीर्षम्-उत्साही, चपलः, भीरुः, धनी, सामप्रियः, शुचिः, आगमज्ञः, शुचिर्विद्वान्, पटुः सौम्यर्क्षसम्भवो भवति।

(६) आर्द्रा-अविचारपरः, शूरः, क्रयविक्रयनैपुणः, गर्वी, हिंस्रः, चण्डरतिः, कृतघ्नः शिवधिष्ण्यजो भवेत्।

(७) पुनर्वसु-दुर्मेधावान्, दर्शनीयः, स्त्रीपरः, श्लेष्मलोचनः, सहिष्णुः, अल्पसन्तुष्टः, शीघ्रगोऽदितिधिष्ण्यजः भवेत्।

(८) पुष्यः-सुभगः, पण्डितः, शूरः, दयालुः, धार्मिकः, धनी, कलाभिज्ञः, सत्यरतः, कामी पुष्यर्क्षजोऽलसो भवेत्।

(९) आश्लेषा–धूर्तः, शूरः, क्रूरचेष्टः, परदाररतः, शठः, अवक्रः, व्यसनी, दान्तः सार्पनक्षत्रजो नरो भवति।

(१०) मघा–शूरः, स्थूलहनुः, कोपी, वक्ता, क्लेशसहः, प्रभुः, सुरगुरावनुरतः, तेजस्वी पितृधिष्ण्यजो भवति।

(११) पूर्वाफाल्गुनी–द्युतिमान्, अटनः, दाता, नृपः, शास्त्रविशारदः, कार्याकार्यविचारज्ञः, पूर्वाभाग्यर्क्षसम्भवो भवति।

(१२) उत्तराफाल्गुनी–जितशत्रुः, सुखी, भोगी, प्रमदामदनः, कविः, कलाभिज्ञः, सत्यरतः, सुविद्वान् अर्यमर्क्षजो भवति।

(१३) हस्तम्–मेधावी, तस्करः, उत्साही, परकार्यरतः, अटनः, परन्तपः, कार्यकुशलः, स्त्रीलोलः सूर्यधिष्ण्यजो भवति।

(१४) चित्रा–चित्रमाल्याम्बरधरः, कामशास्त्रविशारदः, द्युतिमान्, धनवान्, भोगी, पण्डितस्त्वष्ट्रधिष्ण्यजो भवति।

(१५) स्वाती–धार्मिकः, प्रियवाक्यार्थः, क्रयविक्रयनैपुणः, कामी, चरसुतः, दाता, विद्यावान् मारुतर्क्षजो भवति।

(१६) विशाखा–अल्पसूर्यापरः, श्लक्ष्णः, मायापटुः, अरिन्दपः, जितेन्द्रियः, अर्थवान्, लुब्धो विशाखर्क्षसम्भवो भवति।

(१७) अनुराधा–आढ्यः, क्षुधानुरटः, विदेशस्थः, अङ्गनाप्रियः, नृपार्चितः, छन्नपापः, पिङ्गलो मैत्रधिष्ण्यजो भवति।

(१८) ज्येष्ठा–बहुव्ययपरः, क्लेशसहः, कामी, दुरासदः, क्रूरचेष्टः, मृषाभाषी, धनवान्निन्द्रधिष्ण्यजो भवति।

(१९) मूलम्–हिंस्त्रः, मानी, धनी, भोगी, परकार्यप्रतारकः, मिथोपचारः, स्त्रीलोलः, श्लक्ष्णो निर्ऋतिधिष्ण्यजो भवति।

(२०) पूर्वाषाढा–सुकलत्रः, कामचारः, कुशलः, दृढसौहृदः, क्लेशयुग्, वीर्यवान्, मानी तोयनक्षत्रसम्भवो भवति।

(२१) उत्तराषाढा–कृतज्ञः, धार्मिकः, शूरः, बहुमित्रः, विनीतः, सुकलत्रः, सुपुत्राढ्यो वैश्वदेवर्क्षसम्भवो भवति।

(२२) श्रवणम्–उदारः, वीरः, श्रुतवान्, श्रीमान्, वक्ता, धनान्वितः, कार्यकृत्, सुरताभिज्ञः, धार्मिकः श्रवणर्क्षजो भवति।

(२३) धनिष्ठा–धार्मिकः, व्यसनी, लुब्धः, नृत्यगीताङ्गनाप्रियः, सामैकसाध्यः, तेजस्वी, वीर्यवान् वसुधिष्ण्यजो भवति।

(२४) शतभिषा(शततारका)– , (२५)पूर्वाभाद्रपदा– फलमप्राप्तम्।

(२६) उत्तराभाद्रपदा–प्रजावान्, धार्मिकः, वक्ता, जितशत्रुः, सुखी, प्रभुः, स्वसहोत्साग्रजः, कामी ह्याहिर्बुध्न्यर्क्षसम्भवो भवति।

(२७) रेवती–रूपवान्, धनवान्, भोगी, पण्डितः, अन्यजनार्थभुक्, कामी, दुर्गार्चितः, शूरः, परदेशगः पौष्णजो भवति।

जन्मसमये जन्मनक्षत्रे पापग्रहयुते सर्वे गुणा निर्गुणा जायन्ते, गुणाः पापग्रहायुक्ते शुभा भवन्ति।

**द्वादशांशफलम्–**

(१) स्त्रीलोलः, चपलः, दक्षः, मानी प्रथमद्वादशांशजो भवति।

(२) भोक्ता, शूरः, कार्यदक्षः, सहिष्णुः, वीर्यवान्, प्रभुः, परंतपः, कार्यदक्षः द्वितीयद्वादशांशजो भवति।

(३) पण्डितः, विबुधानीकः, मान्यः, गुणविभूषणः, सौभाग्यसत्यसम्पन्नः तृतीयद्वादशांशजो भवति।

(४) कलत्रधनपुत्रीवान्, श्रीमान्, स्त्रीविजितः, सुखी, भूषणाढ्यः, अलसः, मानी, कर्कट(चतुर्थ?)द्वादशांशजो भवति।

(५) नृपः, नृपोपमः, श्रीमान्, भोगी, जितेन्द्रियः, नीतिज्ञः, कार्यकुशलः, बन्धुद्विट् पञ्चमांशजो भवति।

(६) परकार्येषु निरतः, परगाथानुवादकः, स्त्रीनिर्जितः, नटः, भोगी, चपलो वृश्चिकांशजो भवति।

(७) प्रेष्यः, नटः, कलाभिज्ञः, स्त्रीलोलः, लिपिलेखकः, कार्यवान्, चपलः, भीरुः, वदान्यो धनुरंशजो भवति।

(८) पापाभिनिरतः पापकर्मणामधिपोऽथवा, स्त्रीलोलः, अर्थवान्, भोगी, वक्ता मकरांशजो भवति।

(९) जीवहिंसापरः, क्रोधी, परदाररतः, अटनः, बन्धुद्विट्, हार्यः, कुशलः, कलाभिज्ञो घटांशजो भवति।

(१०) धीमान्, भोगी, कलाभिज्ञः, श्रीमान्, वक्ता, अङ्गनाप्रियः, गृहीतवचनः, शूरः, दाता मीनांशसम्भवो भवति।

ब्रह्मर्षिकश्यपेन रम्यैरेकोनपञ्चाशदध्यायैः सम्यग्रूपेण महासंहिता विनिर्मिता।

**।। इति कश्यपब्रह्मर्षिविरचिताया महासंहिताया अध्यायानां सारः।।**

# प्रथमो विभागः

# पञ्चमं प्रकरणम्

# तुलनात्मकमध्ययनम्

---

**कश्यपसंहिताया अन्यसंहितानां साकं तुलना-**

१) **बृहत्संहितायां कश्यपस्योल्लेखो वर्षागर्भलक्षणसंदर्भे स्पष्टतया दृश्यते। तद्यथा-**

तल्लक्षणानि मुनिभिर्यानि निबद्धानि तानि दृष्ट्वेदम्।
क्रियते गर्गपराशरकाश्यपवज्रादिरचितानि।।२।।

-बृ.सं.२१.२ (पृ.१५४)

**एवमेव नारदसंहितायां कश्यपस्याष्टादश ज्योतिषशास्त्रप्रवर्तकरूपेण स्पष्टतयासमुल्लेखो दृश्यते। तद्यथा-**

ब्रह्माचार्यो वसिष्ठोऽत्रिर्मनुः पौलस्त्यरोमशौ।
मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः।।२।।
च्यवनो यवनो गर्गः कश्यपश्च पराशरः।
अष्टादशैते गम्भीरा ज्योतिःशास्त्रप्रवर्तकाः।।३।।

-ना.सं. अ.१.३

एतेन इदं सिद्धं भवति -कश्यपस्य सन्मानपूर्वकं समुल्लेखो नारदसंहिताबृहत्संहितयोः प्राप्यते।

**संहितानां बाह्यस्वरूपदृष्ट्या स्थूलरूपेण तुलना-**

**(१) विविधसंहितानामध्यायसंख्या-**

१.कश्यपसंहिताया अध्यायानां संख्या ४९ वर्तते।

२.बृहत्संहिताया अध्यायानां संख्या १०७ वर्तते।

३.नारदसंहिताया अध्यायानां संख्या ५५ वर्तते।

४. वसिष्ठसंहिताया अध्यायानां संख्या ४६ वर्तते।

५. भद्रबाहुसंहिताया अध्यायानां संख्या २७ वर्तते।

अध्यायसंख्यादृष्ट्या बृहत्संहिताग्रन्थो विस्तृतो वर्तते। अन्यसंहितानामध्यायसंख्या प्रायेण कैश्चिदेवाध्यायैर्भिन्ना दृश्यते।

**(२) सम्पूर्णग्रन्थे श्लोकसंख्या-**

१.कश्यपसंहितायाः श्लोकसंख्या १,५५४ वर्तते।

२.बृहत्संहितायाः श्लोकसंख्या २,८०२ वर्तते।

३.नारदसंहितायाः श्लोकसंख्या १,२९० वर्तते।

४.वसिष्ठसंहितायाः श्लोकसंख्या – २,७१९ वर्तते।

५.भद्रबाहुसंहितायाः श्लोकसंख्या १,७७९ वर्तते।

श्लोकसंख्यादृष्ट्यापि बृहत्संहिता-वसिष्ठसंहितयोर्विषयविवेचनं विस्तृतं वर्तते।

**विविधसंहितानां विषयविवेचनमध्यायक्रमानुसारेण-**

**कश्यपसंहिता-**

(१)शास्त्रोपनयनाध्यायः(श्लो.२२) (२)सूर्यचाराध्यायः(श्लो.३६)

(३)चन्द्रचाराध्यायः(श्लो.१३) (४)भौमचाराध्यायः(श्लो.१४)

(५)बुधचाराध्याय:(श्लो.१४) (६)गुरुचाराध्याय:(श्लो.३१)

(७)शुक्रचाराध्याय:(श्लो.१४) (८)शनिचाराध्याय:(श्लो.२)

(९)राहुचाराध्याय:(श्लो.१२) (१०)केतुचाराध्याय:(श्लो.१७)

(११)अब्दलक्षणाध्याय:(श्लो.९०) (१२)तिथ्यध्याय:(श्लो.३४)

(१३)वाराध्याय:(श्लो.१९) (१४)नक्षत्राध्याय:(श्लो.५८)

(१५)योगाध्याय:(श्लो.१०) (१६)करणाध्याय:(श्लो.६)

(१७)मुहूर्ताध्याय:(श्लो.१३) (१८)उपग्रहाध्याय:(श्लो.२२)

(१९)संक्रान्त्यध्याय:(श्लो.२४) (२०)गोचराध्याय:(श्लो.१६)

(२१)चन्द्रताराबलाध्याय:(श्लो.९) (२२)सर्वलग्नाध्याय:(श्लो.४५)

(२३)प्रथमार्त्तवाधानाध्याय:(श्लो.४३) (२४)सीमन्ताध्याय:(श्लो.११)

(२५)जातकर्माध्याय:(श्लो.६) (२६)अन्नप्राशनाध्याय:(श्लो.१२)

(२७)चौलाध्याय:(श्लो.१२) (२८)उपनयनाध्याय:(श्लो.४३)

(२९)समावर्तनाध्याय:(श्लो.११) (३०)प्रश्नलक्षणाध्याय:(श्लो.१६)

(३१)कन्याप्रदानाध्याय:(श्लो.१०) (३२)एकविंशतिदोषनिरूपणाध्याय:(श्लो.९९)

(३३)विवाहाध्याय:(श्लो.११४) (३४)श्राद्धाध्याय:(श्लो.३०)

(३५)छुरिकाबन्धनाध्याय:(श्लो.१३) (३६)यात्राध्याय:(श्लो.१००)

(३७)प्रवेशाध्याय:(श्लो.९) (३८)वास्तुलक्षणाध्याय:(श्लो९७)

(३९)वास्तुपूजनाध्याय:(श्लो.२०) (४०)राजाभिषेकाध्याय:(श्लो.१४)

(४१)प्रतिष्ठाध्याय:(श्लो.१४) (४२)वस्त्रलक्षणाध्याय:(श्लो.१२)

(४३)अग्न्याधानाध्याय:(श्लो.१५) (४४)सद्योवृष्टिलक्षणाध्याय:(श्लो.१२)

(४५)काकादिसंयोगोत्पातशान्त्यध्याय:(श्लो.२४) (४६)उत्पातशान्त्यध्याय:(श्लो.९)

(४७)शिथिलीदोष–शरीरोपशान्त्यध्याय:(श्लो.२३)

(४८)निखिलोत्पातशान्त्यध्याय:(श्लो.८७) (४९)मिश्रकाध्याय:(श्लो.१७७)

**बृहत्संहिताया विषया:-**

(१)उपनयनाध्याय:(श्लो.११) (२)सांवत्सरसूत्राध्याय:(श्लो.३९)

(३)आदित्यचाराध्याय:(श्लो.४०) (४)चन्द्रचाराध्याय:(श्लो.३२)

(५)राहुचाराध्याय:(श्लो.९८) (६)भौमचाराध्याय:(श्लो.१३)

(७)बुधचाराध्याय:(श्लो.२०) (८)बृहस्पतिचाराध्याय:(श्लो.५३)

(९)शुक्रचाराध्याय:(श्लो.४५) (१०)शनैश्चरचाराध्याय:(श्लो.२१)

(११)केतुचाराध्याय:(श्लो.६२) (१२)अगस्त्यचाराध्याय:(श्लो.२२)

(१३)सप्तर्षिचाराध्याय:(श्लो.११) (१४)कूर्मविभागाध्याय:(श्लो.३३)

(१५)नक्षत्रव्यूहाध्याय:(श्लो.३२) (१६)ग्रहभक्तियोगाध्याय:(श्लो.४२)

(१७)ग्रहयुद्धाध्याय:(श्लो.२७) (१८)शशिग्रहसमागमाध्याय:(श्लो.८)

(१९)ग्रहवर्षफलाध्याय:(श्लो.२२) (२०)ग्रहशृङ्गाटकाध्याय:(श्लो.९)

(२१)गर्भलक्षणाध्याय:(श्लो.३७) (२२)गर्भधारणाध्याय:(श्लो.८)

(२३)प्रवर्षणाध्याय:(श्लो.१०) (२४)रोहिणीयोगाध्याय:(श्लो.३६)

(२५)स्वातीयोगाध्याय:(श्लो.) (२६)आषाढीयोगाध्याय:(श्लो.१५)

(२७)वातचक्राध्याय:(श्लो.९) (२८)सद्योवर्षणाध्याय:(श्लो.२४)

(२९)कुसुमलताध्याय:(श्लो.१४) (३०)सन्ध्यालक्षणाध्याय:(श्लो.३३)

(३१)दिग्दाहलक्षणाध्याय:(श्लो.५)(३२)भूकम्पलक्षणाध्याय:(श्लो.३२)

(३३)उल्कालक्षणाध्याय:(श्लो.३०) (३४)परिवेषलक्षणाध्याय:(श्लो.२३)

(३५)इन्द्रायुधलक्षणाध्याय:(श्लो.८)(३६)गन्धर्वनगरलक्षणाध्याय:(श्लो.५)

(३७)प्रतिसूर्यलक्षणाध्याय:(श्लो.३)(३८)रजोलक्षणाध्याय:(श्लो.८)

(३९)निर्घातलक्षणाध्याय:(श्लो.५) (४०)सस्यजाताध्याय:(श्लो.१४)

(४१)द्रव्यनिश्चयाध्याय:(श्लो.१३) (४२)अर्धकाण्डाध्याय:(श्लो.१४)

(४३)इन्द्रध्वजसम्पदध्याय:(श्लो.६८) (४४)नीराजनाध्याय:( श्लो.२८)

(४५)खञ्जनकलक्षणाध्याय:(श्लो.१६)(४६)उत्पाताध्याय:(श्लो.९९)

(४७)मयूरचित्राध्याय:(श्लो.२८) (४८)पुष्यस्नानाध्याय:(श्लो.८७)

(४९)पट्टलक्षणाध्याय:(श्लो.८) (५०)खड्गलक्षणाध्याय:(श्लो.२६)

(५१)अङ्गविद्याध्याय:(श्लो.४४) (५२)पिटकलक्षणाध्याय:(श्लो.१०)

(५३)वास्तुविद्याध्याय:(श्लो.१२५) (५४)दकार्गलाध्याय:(श्लो.१२५)

(५५)वृक्षायुर्वेदाध्याय:(श्लो.३१) (५६)प्रासादलक्षणाध्याय:(श्लो.३१)

(५७)वज्रलेपाध्याय:(श्लो.८) (५८)प्रतिमालक्षणाध्याय:(श्लो.५८)

(५९)वनसम्प्रवेशाध्याय:(श्लो.१४)(६०)प्रतिमाप्रतिष्ठापनाध्याय:(श्लो.२२)

(६१)गोलक्षणाध्याय:(श्लो.१९) (६२)श्वलक्षणाध्याय:(श्लो.२)

(६३)कुक्कुटलक्षणाध्याय:(श्लो.३) (६४)कूर्मलक्षणाध्याय:(श्लो.३)

(६५)छागलक्षणाध्याय:(श्लो.११) (६६)अश्वलक्षणाध्याय:(श्लो.५)

(६७)हस्तिलक्षणाध्याय:(श्लो.१०)(६८)पुरुषलक्षणाध्याय:(श्लो.११६)

(६९)पञ्चमहापुरुषलक्षणाध्याय:(श्लो.४०)(७०)स्त्रीलक्षणाध्याय:(श्लो.२६)

(७१)वस्त्रछेदनलक्षणाध्याय:(श्लो.१४) (७२)चामरलक्षणाध्याय:(श्लो.६)

(७३)छत्रलक्षणाध्याय:(श्लो.६) (७४)स्त्रीप्रशंसाध्याय:(श्लो.२०)

(७५)सौभाग्यकरणाध्याय:(श्लो.१०) (७६)कान्दर्पिकाध्याय:(श्लो.१२)

(७७)गन्धयुक्तिर्नामाध्याय:(श्लो.३७) (७८)पुंस्त्रीसमागमायोगाध्याय:(श्लो.२६)

(७९)शय्यासनालक्षणाध्याय:(श्लो.३९) (८०)रत्नपरीक्षाध्याय:(श्लो.१८)

(८१)मुक्तलक्षणाध्याय:(श्लो.३६) (८२)पद्मरागलक्षणाध्याय:(श्लो.११)

(८३)मरकतलक्षणाध्याय:(श्लो.१) (८४)दीपलक्षणाध्याय:श्लो.२)

(८५)दन्तकाष्ठलक्षणाध्याय:(श्लो.९) (८६)शाकुनाध्याय:(श्लो.८०)

(८७)अन्तरचक्राध्याय:(श्लो.४५) (८८)विरुताध्याय:(श्लो.४७)

(८९)श्वचक्राध्याय:(श्लो.२०) (९०)शिवारुताध्याय:(श्लो.१५)

(९१)मृगचेष्टिताध्याय:(श्लो.३) (९२)गवेङ्गिताध्याय:(श्लो.३)

(९३)अश्वेङ्गिताध्याय:(श्लो.१५) (९४)हस्तिचेष्टिताध्याय:(श्लो.१४)

(९५)वायसविरुताध्याय:(श्लो.६२) (९६)शाकुनोत्तराध्याय:(श्लो.१७)

(९७)पाकाध्याय:(श्लो.१७) (९८)नक्षत्रकर्मगुणाध्याय:(श्लो.१७)

(९९)तिथिकर्मगुणाध्याय:(श्लो.३) (१००)करणगुणाध्याय:(श्लो.८)

(१०१)नक्षत्रजातकाध्याय:(श्लो.१४) (१०२)राशिविभागाध्याय:(श्लो.७)

(१०३)विवाहपटलाध्याय:(श्लो.१३) (१०४)ग्रहगोचराध्याय:(श्लो.६४)

(१०५)रूपसत्राध्याय:(श्लो.१६) (१०६)उपसंहाराध्याय:(श्लो.६)

(१०७)शास्त्रानुक्रमण्यध्याय:(श्लो.१४)

**नारदसंहिताया विषया:-**

(१)शास्त्रोपनयनाध्याय:(श्लो.१६) (२)ग्रहचाराध्याय: ( श्लो.१४२)

(सू.२७-चं.१०-भौ.११-बु.१५-गु.३१-शु.९-श.६-रा.१३के.२०)

(३) संवत्सरफलाध्याय:(श्लो.७६)(४)तिथिलक्षणाध्याय:( श्लो.३८)

(५)वारलक्षणाध्याय:( श्लो.२०) (६)नक्षत्रफलाध्याय:( श्लो.६९)

(७)योगप्रकरणासध्याय:(श्लो.८) (८)करणाध्याय:(श्लो.४)

(९)मुहूर्ताध्याय:(श्लो.७) (१०)उपग्रहाध्याय:(श्लो.२१)

(११)सङ्क्रान्तिलक्षणाध्याय:(श्लो.२६)(१२)गोचराध्याय:(श्लो.१३)

(१३)चन्द्रबलाध्याय:(श्लो.८) (१४)सर्वलग्नाध्याय:(श्लो.२४)

(१५)प्रथमार्तवाध्याय:(श्लो.३४) (१६)आधानाध्याय:(श्लो.५)

(१७)पुंसवनाध्याय(श्लो.१) (१८)सीमन्तोन्नयनाध्याय:(श्लो.६)

(१९)जातकमाध्याय:(श्लो.१) (२०)नामकरणाध्याय:(श्लो.४)

(२१)अन्नप्राशनाध्याय:(श्लो.६) (२२)चौलाध्याय:(श्लो.८)

(२३)मङ्गलाङ्कुरार्पणं नामाध्याय:(श्लो.४) (२४)उपनयनाध्याय:(श्लो.३५)

(२५)छुरिकाबन्धनाध्याय:(श्लो.११) (२६)समावर्तनाध्याय:(श्लो.४)

(२७)विवाहप्रश्नलग्नाध्याय:(श्लो.१३) (२८)कन्यावरणाध्याय:(श्लो.८)

(२९)विवाहाध्याय:(श्लो.१६२) (३०)सुरप्रतिष्ठाध्याय:(श्लो.१९)

(३१)वास्तुविधानाध्याय:(श्लो.६२) (३२)वास्तुलक्षणाध्याय:(श्लो.२०)

(३३)यात्राध्याय:(श्लो.९२) (३४)प्रवेशाध्याय:(श्लो.८)

(३५)सद्योवृष्टिलक्षणाध्याय:(श्लो.१९) (३६)कूर्मविभागाध्याय:(श्लो.६)

(३७)उत्पाताध्याय:(श्लो.१८) (३८)वायसमैथुनलक्षणाध्याय:(श्लो.११)

(३९)पल्लीसरटाशुभस्थानशान्तिप्रकरणाध्याय:(श्लो.१३)

(४०)कपोतपिङ्गलादिशान्त्यध्याय:(श्लो.११)

(४१)शिथिलीजननशान्त्याध्याय:(श्लो.९) (४२)निमित्तशान्त्यध्याय:(श्लो.५)

(४३)उल्कालक्षणाध्याय:(श्लो.२७) (४४)परिवेषलक्षणाध्याय:(श्लो.१८)

(४५)इन्द्रचापलक्षणाध्याय:(श्लो.८) (४६)गन्धर्वनगरदर्शनाध्याय:(श्लो.४)

(४७)प्रतिसूर्यलक्षणाध्याय:(श्लो.४) (४८)निर्घातलक्षणाध्याय:(श्लो.६)

(४९)दिग्दाहलक्षणाध्याय:(श्लो.५)　　(५०)रजोलक्षणाध्याय:(श्लो.७)

(५१)भूकम्पलक्षणाध्याय:(श्लो.१०)　　(५२)नक्षत्रगुणाध्याय:(श्लो.२७)

(५३)मिश्रकाध्याय:(श्लो.२३)　　(५४)श्राद्धलक्षणाध्याय:(श्लो.२१ )

**वसिष्ठसंहिताया विषयानुक्रम:-**

(१)शास्त्ररूपाध्याय:(श्लो.१३)　　(२)अर्कचाराध्याय:(श्लो.२५)

(३)चन्द्रचाराध्याय:(श्लो.२१)　　(४)भौमचाराध्याय:(श्लो.१५)

(५)बुधचाराध्याय:(श्लो.१७)　　(६)गुरुचाराध्याय:(श्लो.१०१)

(७)शुक्रचाराध्याय:(श्लो.१९)　　(८)शनिचाराध्याय:(श्लो.६)

(९)राहुचाराध्याय:(श्लो.६२)　　(१०)केतुचाराध्याय:(श्लो.५०)

(११)वर्षेशादिनिर्णयफलाध्याय:(श्लो.५०)(१२)तिथिस्वरूपाध्याय:(श्लो.७५)

(१३)वारस्वरूपाध्याय:(श्लो.२०)　　(१४)नक्षत्रस्वरूपाध्याय:(श्लो.११२)

(१५)योगाध्याय:(श्लो.४१)　　(१६)करणाध्याय:(श्लो.१९)

(१७)मुहूर्ताध्याय:(श्लो.९)　　(१८)गोचराध्याय:(श्लो.१७९)

(१९)संक्रान्त्यध्याय:(श्लो.३१)　　(२०)चन्द्रताराबलाध्याय:(श्लो.१२)

(२१)उपग्रहाध्याय:(श्लो.१०)　　(२२)ग्रहकूटाध्याय:(श्लो.१४)

(२३)लग्नबलाध्याय:(श्लो.४७)　　(२४)आधानाध्याय:(श्लो.४८)

(२५)पुंसवमसीमन्ताध्याय:(श्लो.१७)　　(२६)जातकर्मनामकर्माध्याय:(श्लो.४)

(२७)अन्नप्राशनाध्याय:(श्लो.१०)　　(२८)चौलाध्याय:(श्लो.१२)

(२९)उपनयनाध्याय:(श्लो.७९)　　(३०)समावर्तनाध्याय:(श्लो.३)

(३१)विवाहप्रश्नाध्याय:(श्लो.८)　　(३२)विवाहाध्याय:(श्लो.२४४)

(३३)राज्याभिषेकाध्याय:(श्लो.६०)　　(३४)अश्वारिष्टशान्त्यध्याय:( श्लो.२३)

**भद्रबाहुसंहिताया विषयानुक्रमः-**

(२७)वस्त्रव्यवहारनिमित्तकोध्याय:(श्लो.१३) (२८)परिशिष्टाध्याय:(श्लो.१९५)

**कश्यपसंहिता-बृहत्संहितयोर्विषयसाम्यम्-**

एते निम्नलिखिता विषया द्वयो: समाना वर्तन्ते।

(१)शास्त्रोपनयनाध्याय: (२) सूर्यचाराध्याय: (३)चन्द्रचाराध्याय:

(४)भौमचाराध्याय: (५)बुधचाराध्याय: (६)गुरुचाराध्याय:

(७)शुक्रचाराध्याय: (८)शनिचाराध्याय: (९)राहुचाराध्याय:

(१०)केतुचाराध्याय:।

**विषयेषु भिन्नताविचार:**

कश्यपसंहितोक्ता निम्नलिखितोक्तविषया बृहत्संहितायां न वर्णिता: सन्ति।

(११)अब्दलक्षणाध्याय: (१३)वाराध्याय: (१५)योगाध्याय:

(१७)मुहूर्ताध्याय: (१८)उपग्रहाध्याय: (१९)संक्रान्त्यध्याय:

(२१)चन्द्रताराबलाध्याय: (२२)सर्वलग्नाध्याय: (२३)प्रथमार्त्तवाधानाध्याय:

(२४)सीमन्ताध्याय: (२५)जातकर्माध्याय: (२६)अन्नप्राशनाध्याय:

(२७)चौलाध्याय: (२८)उपनयनाध्याय: (२९)समावर्तनाध्याय:

(३०)प्रश्नलक्षणाध्याय: (३१)कन्याप्रदानाध्याय:

(३२)एकविंशतिदोषनिरूपणाध्याय: (३३)विवाहाध्याय:

(३४)श्राद्धाध्याय: (३९)वास्तुपूजनाध्याय: (४३)अग्न्याधानाध्याय:

(४५)काकादिसंयोगोत्पातशान्त्यध्याय: (४७)शिथिलीदोष-शरीरोपशान्त्यध्याय:

(४८)निखिलोत्पातशान्त्यध्याय: (४९)मिश्रकाध्याय:।

**२)बृहत्संहितोक्ता निम्नलिखिता विषया: कश्यपसंहितायां न वर्णिता: सन्ति।**

(२)सांवत्सरसूत्राध्याय: (१२)अगस्त्यचाराध्याय: (१३)सप्तर्षिचाराध्याय:

(१४)कूर्मविभागाध्याय: (१५)नक्षत्रव्यूहाध्याय: (१६)ग्रहभक्तियोगाध्याय:

(१९)ग्रहवर्षफलाध्याय: (२०)ग्रहशृङ्गाटकाध्याय: (२३)प्रवर्षणाध्याय:

(२४)रोहिणीयोगाध्याय: (२५)स्वातीयोगाध्याय: (२६)आषाढीयोगाध्याय:

(२७)वातचक्राध्याय: (२९)कुसुमलताध्याय: (३०)सन्ध्यालक्षणाध्याय:

(४०)सस्यजाताध्याय: (४३)इन्द्रध्वजसम्पदध्याय: (४८)पुष्यस्नानाध्याय:

(४९)पट्टलक्षणाध्याय: (५१)अङ्गविद्याध्याय: (५२)पिटकलक्षणाध्याय:

(५४)दकार्गलाध्याय: (५५)वृक्षायुर्वेदाध्याय: (५७)वज्रलेपाध्याय:

(६१)गोलक्षणाध्याय: (६२)श्वलक्षणाध्याय: (६३)कुक्कुटलक्षणाध्याय:

(६४)कूर्मलक्षणाध्याय: (६५)छागलक्षणाध्याय: (६६)अश्वलक्षणाध्याय:

(६७)हस्तिलक्षणाध्याय: (६८)पुरुषलक्षणाध्याय: (६९)पञ्चमहापुरुषलक्षणाध्याय:

(७०)स्त्रीलक्षणाध्याय: (७२)चामरलक्षणाध्याय: (७३)छत्रलक्षणाध्याय:

(७४)स्त्रीप्रसंशाध्याय: (७५)सौभाग्यकरणाध्याय: (७६)कान्दर्पिकाध्याय:

(७७)गन्धयुक्तिर्नामाध्याय:(७८)पुंस्त्रीसमागमायोगाध्याय: (८०)रत्नपरीक्षाध्याय:

(८१)मुक्तलक्षणाध्याय: (८२)पद्मरागलक्षणाध्याय: (८३)मरकतलक्षणाध्याय:

(८४)दीपलक्षणाध्याय: (८६)शाकुनाध्याय: (८७)अन्तरचक्राध्याय:

(८८)विरुताध्याय: (८९)श्वचक्राध्याय: (९०)शिवारुताध्याय:

(९१)मृगचेष्टिताध्याय: (९२)गवेङ्गिताध्याय: (९३)अश्वेङ्गिताध्याय:

(९४)हस्तिचेष्टिताध्याय: (९५)वायसविरुताध्याय: (९६)शाकुनोत्तराध्याय:

(९७)पाकाध्याय: (१०२)राशिविभागाध्याय: (१०६)उपसंहाराध्याय:।

**कश्यपसंहिता-नारदसंहितयोर्विषयसाम्यम्-**

(१)शास्त्रोपनयनाध्याय: (२) सूर्यचाराध्याय: (३)चन्द्रचाराध्याय: (४)भौमचाराध्याय: (५)बुधचाराध्याय: (६)गुरुचाराध्याय: (७)शुक्रचाराध्याय: (८)शनिचाराध्याय: (९)राहुचाराध्याय: (१०)केतुचाराध्याय: (११)अब्दलक्षणाध्याय: (१२)तिथ्यध्याय: (१३)वाराध्याय: (१४)नक्षत्राध्याय: (१५)योगाध्याय: (१६)करणाध्याय: (१७)मुहूर्ताध्याय: (१८)उपग्रहाध्याय: (१९)संक्रान्त्यध्याय: (२०)गोचराध्याय: (२१)चन्द्रताराबलाध्याय: (२२)सर्वलग्नाध्याय: (२३)प्रथमार्त्तवाधानाध्याय: (२४)सीमन्ताध्याय: (२५)जातकर्माध्याय: (२६)अन्नप्राशनाध्याय: (२७)चौलाध्याय: (२८)उपनयनाध्याय: (२९)समावर्तनाध्याय: (३०)प्रश्नलक्षणाध्याय: (३१)कन्याप्रदानाध्याय: (३२)एकविंशतिदोषनिरूपणाध्याय: (३३)विवाहाध्याय: (३४)श्राद्धाध्याय: (३५)छुरिकाबन्धनाध्याय: (३६)यात्राध्याय: (३७)प्रवेशाध्याय: (३८)वास्तुलक्षणाध्याय: (३९)वास्तुपूजनाध्याय: (४०)राजाभिषेकाध्याय: (४१)प्रतिष्ठाध्याय: (४४)सद्योवृष्टिलक्षणाध्याय: (४५)काकादिसंयोगोत्पातशान्त्यध्याय: (४६)उत्पातशान्त्यध्याय: (४७)शिथिलीदोष-शरीरोपशान्त्यध्याय: (४८)निखिलोत्पातशान्त्यध्याय: (२३)मङ्गलाङ्कुरार्पणं नामाध्याय:।

**कश्यपसंहितोक्तनिम्नविषयौ नारदसंहितायां नोपलभ्येते-**

(४३)अग्न्याधानाध्याय: (४२)वस्त्रलक्षणाध्याय:।

**नारदसंहितोक्तो निम्नलिखितविषय: कश्यपसंहितायां नोपलभ्यते-**

(३६)कूर्मविभागाध्याय:।

**कश्यपसंहिताया वसिष्ठसंहितोक्तविषयैः साम्यम्–**

(१)शास्त्रोपनयनाध्यायः (२) सूर्यचाराध्यायः (३)चन्द्रचाराध्यायः

(४)भौमचाराध्यायः (५)बुधचाराध्यायः (६)गुरुचाराध्यायः (७)शुक्रचाराध्यायः

(८)शनिचाराध्यायः (९)राहुचाराध्यायः (१०)केतुचाराध्यायः

(११)अब्दलक्षणाध्यायः (१२)तिथ्यध्यायः (१३)वाराध्यायः (१४)नक्षत्राध्यायः

(१५)योगाध्यायः (१६)करणाध्यायः (१७)मुहूर्ताध्यायः (१८)उपग्रहाध्यायः

(१९)संक्रान्त्यध्यायः (२०)गोचराध्यायः (२१)चन्द्रताराबलाध्यायः

(२२)सर्वलग्नाध्यायः (२३)प्रथमार्त्तवाधानाध्यायः (२४)सीमन्ताध्यायः

(२५)जातकर्माध्यायः (२६)अन्नप्राशनाध्यायः (२७)चौलाध्यायः

(२८)उपनयनाध्यायः (२९)समावर्तनाध्यायः (३०)प्रश्नलक्षणाध्यायः

(३२)एकविंशतिदोषनिरूपणाध्यायः (३३)विवाहाध्यायः (३६)यात्राध्यायः

(३७)प्रवेशाध्यायः (३८)वास्तुलक्षणाध्यायः (३९)वास्तुपूजनाध्यायः

(४०)राजाभिषेकाध्यायः (४१)प्रतिष्ठाध्यायः (४२)वस्त्रलक्षणाध्यायः

(४५)काकादिसंयोगोत्पातशान्त्यध्यायः (४६)उत्पातशान्त्यध्यायः

(४७)शिथिलीदोष–शरीरोपशान्त्यध्यायः (४८)निखिलोत्पातशान्त्यध्यायः।

**कश्यपसंहितोक्ता निम्नलिखिता विषया वसिष्ठसंहितायां न प्राप्यन्ते** –

(३१)कन्याप्रदानाध्यायः (३४)श्राद्धाध्यायः (३५)छुरिकाबन्धनाध्यायः

(४३)अग्न्याधानाध्यायः (४४)सद्योवृष्टिलक्षणाध्यायः (४९)मिश्रकाध्यायः

**वसिष्ठसंहितोक्ता निम्नलिखिता विषयाः कश्यपसंहितायां न प्राप्यन्ते** –

(२२)ग्रहकूटाध्यायः (३५)गजारिष्टशान्त्यध्यायः (३६)ग्रहणशान्त्यध्यायः

(४६)रोगोत्पत्तिशान्त्यध्यायः।

**कश्यपसंहिताया भद्रबाहुसंहितोक्तविषयैः साम्यम्-**

(२)सूर्यचाराध्यायः (३)चन्द्रचाराध्यायः (४)भौमचाराध्यायः (५)बुधचाराध्यायः (६)गुरुचाराध्यायः (७)शुक्रचाराध्यायः (८)शनिचाराध्यायः (९)राहुचाराध्यायः (१०)केतुचाराध्यायः (२०)गोचराध्यायः (४२)वस्त्रलक्षणाध्यायः (४४)सद्योवृष्टिलक्षणाध्यायः।

**कश्यपसंहितोक्ता निम्नलिखिता विषया भद्रबाहुसंहितायां न सन्ति-**

(११)अब्दलक्षणाध्यायः (१२)तिथ्यध्यायः (१३)वाराध्यायः (१४)नक्षत्राध्यायः (१५)योगाध्यायः (१६)करणाध्यायः (१७)मुहूर्ताध्यायः (१८)उपग्रहाध्यायः (१९)संक्रान्त्यध्यायः (२१)चन्द्रताराबलाध्यायः (२२)सर्वलग्नाध्यायः (२३)प्रथमार्त्तवाधानाध्यायः (२४)सीमन्ताध्यायः (२५)जातकर्माध्यायः (२६)अन्नप्राशनाध्यायः (२७)चौलाध्यायः (२८)उपनयनाध्यायः (२९)समावर्तनाध्यायः (३०)प्रश्नलक्षणाध्यायः (३१)कन्याप्रदानाध्यायः (३२)एकविंशतिदोषनिरूपणाध्यायः (३३)विवाहाध्यायः (३४)श्राद्धाध्यायः (३५)छुरिकाबन्धनाध्यायः (३६)यात्राध्यायः (३७)प्रवेशाध्यायः (३८)वास्तुलक्षणाध्यायः (३९)वास्तुपूजनाध्यायः (४०)राजाभिषेकाध्यायः (४१)प्रतिष्ठाध्यायः (४३)अग्न्याधानाध्यायः (४५)काकादिसंयोगोत्पातशान्त्यध्यायः (४६)उत्पातशान्त्यध्यायः (४७)शिथिलीदोष-शरीरोपशान्त्यध्यायः (४८)निखिलोत्पातशान्त्यध्यायः (४९)मिश्रकाध्यायः।

**भद्रबाहुसंहितोक्ता निम्नलिखिता विषयाः कश्यपसंहितायां न सन्ति।**

(३)निमित्तशास्त्रम्  (२४)ग्रहयुद्धनामाध्यायः  (२५)सङ्ग्रहयोगार्धकाण्डाध्यायः (२६)स्वप्नाध्यायः (२८)परिशिष्टाध्यायः।

विषयविवेचनवर्णनेनेदं दृश्यते यत् –बृहत्संहितायां बहवो नवीना विषया विश्लेषिताः, भद्रबाहुसंहितायामपि बहवोऽन्या विषया वर्तन्ते। नारद–कश्यपयोः प्रायेण समानत्वं, तथापि क्वचिद्भिन्नविषयानां प्रतिपादनम्। वसिष्ठसंहितया साकं कश्यपस्य विषयसाम्यं तथापि वसिष्ठसंहितायां विस्तारेण विषयप्रतिपादनं वर्तते।

**संहिताग्रन्थानां मङ्गलाचरणम्–**

**१.कश्यपसंहिता–**

महेशाय नमस्तमै सच्चिदानन्दरूपिणे।

नतामरकिरीटौघप्रभाविस्फुरिताङ्घ्रये।।१।।

कश्यपसंहिताकारो भगवतः शिवस्य वन्दनेन ग्रन्थारम्भं करोति। तस्योपरि शैवसम्प्रदायस्य प्रभावो दरीदृश्यते।

**२.बृहत्संहिता–**

जयति जगतः प्रसूतिर्विश्वात्मा सहजभूषणं नभसः।

द्रुतकनकसदृशदशशतमयूखमालार्चितः सविता।।१।।

बृहत्संहिताकारः सूर्यदेवताया वन्दनेन ग्रन्थारम्भं करोति। सः सूर्योपासको ज्ञायते। अन्यग्रन्थेष्वपि वराहमिहिरः सूर्यमेव प्रायेण प्रस्तौति।

**३.नारदसंहिता–**

अणोरणुतरः साक्षादीश्वरो महतो महान्।

आत्मागुहायां निहितो जन्तोर्जयत्यतीन्द्रियः।।१।।

नारदसंहिताकार: परमात्मन:–ईश्वरस्य वन्दनेन ग्रन्थारम्भं करोति।अस्मान् स्मारयति चोपनिषद्वाक्यं– अणोरणीयान्महतो महीयान्

आत्मास्य जन्तोर्निहितो गुहायाम्।। –कठोपनिषत् २.२०

**४. वसिष्ठसंहिता–**

प्रह्वोऽम्भोजभवामरेन्द्रनिकरस्फूर्जत्किरीटोज्वल–

ज्ज्योत्स्नालीढपदारविन्दयुगलस्तत्त्वस्वरूपो रवि:।

ब्रह्माण्डोदरसंस्थिताखिलजगत्तद्ध्वान्तविध्वंसनं

य: कुर्वन्निखिलं जगत्प्रतिदिनं पर्यैति कालात्मक:।।१।।

वसिष्ठसंहिताकार: कालात्मकस्य भगवत: सूर्यस्य वन्दनेन ग्रन्थारम्भं करोति।

**५.भद्रबाहुसंहिता–**

नमस्कृत्य जिनं वीरं सुरासुरनतक्रमम्।

यस्य ज्ञानाम्बुधे: प्राप्य किञ्चिद् वक्ष्ये निमित्तकम्।।१।।

भद्रबाहुसंहिताकारो जिनवन्दनेन ग्रन्थारम्भं करोति। तस्योपरि जैनसम्प्रदायस्य प्रभावो दृश्यते।

**विषयगतं वैधर्म्यम्–**

**१ पञ्चाङ्गम्–**

बृ.सं.–पञ्चाङ्गविषये तिथि–नक्षत्र–करणविषयकं विवेचनं दृश्यते, किन्तु वार–योगविषयकं विवेचनं न दृश्यते। कश्यपसंहितायां पञ्चाङ्गविषयकं विवरणं–विवेचनं पूर्णतया दृश्यते। नारदसंहितायामपि पञ्चाङ्गविषयकं विवरणं–विवेचनं पूर्णतया दरीदृश्यते। वसिष्ठसंहितायां पञ्चाङ्गविषयकं विवरणं–विवेचनं पूर्णतया दरीदृश्यते। भद्रबाहुसंहितायां पञ्चाङ्गविषयकं विवरणं–विवेचनं नैव प्राप्यते।

**२ संस्काराः**

बृहत्संहितायां संस्कारविषयकं विवेचनं स्वल्पमेव चौल–विवाहपटलरूपं प्राप्यते, नारदसंहितायां विवरणमुपलभ्यते, वसिष्ठसंहितायां सर्वसंस्काराणां मुहूर्तस्य पूर्णतया विवरणं प्राप्यते। कश्यपसंहितायां संस्काराणां विवेचनं वर्तते। भद्रबाहुसंहितायां संस्काराणां तन्मुहूतानां च किञ्चिन्मात्रोऽपि विचारो न प्राप्यते।

कश्यप–नारद–संहितयोः श्राद्धविषयोऽपि विवेचतः। तयोः स विशेषः। किन्तु बृहत्संहिता–वसिष्ठसंहिता–भद्रबाहुसंहितासु चायं विषयो नास्ति।

कश्यप–नारद–वसिष्ठसंहितासु सर्वलग्नाध्यायो विशिष्टः। बृहत्संहिता–भद्रबाहसंहितयोः स न दृश्यते। बृहत्संहितायां देवतामूर्तीनां विकारस्य विवरणं न दृश्यते। नारद–कश्यपसंहितयोरेतद् विवेचितम्। नारदसंहितायां मूर्तिविकार–जनितमशुभफलं तच्छान्त्यर्थं च शान्तिवर्णनं न दृश्यते। वसिष्ठ–भद्रबाहुसंहिता–योर्मूर्तिविकारजनितमशुभफलं तच्छान्त्यर्थं शान्तिवर्णनं च न दृश्यते।

**कश्यप–बृहत्संहितयोः सूक्ष्मतया प्रतिपद्यसिद्धान्ततुलना–**

**अध्यायः१**

बृहत्संहिताग्रन्थोऽनेकपूर्वसूरिणां ज्योतिषशास्त्रकाराणां सिद्धान्तान् आलोड्य तेषां मतमतान्तराणां सङ्कलनं कृत्वा स्वमतप्रतिपादनपूर्वकं वराहेण प्रणीतः। तेन कश्यपस्य महर्षेर्मतमपि विचारितम्। काश्यपसंहिताग्रन्थः केवलं स्वमतप्रतिपादनपूर्वकं ब्रह्मर्षिकश्यपेन प्रणीतः। कश्यपसंहितायां अष्टादशज्योतिषप्रवर्तकानां समुल्लेखः कृतः। किन्तु एतेषामार्षप्रवर्तकानां बृहत्संहितायां समुल्लेखो न प्राप्यते। कश्यपसंहिता आर्षग्रन्थो विद्यते। बृहत्संहिता सङ्कलितो ग्रन्थः। बृ.सं.–जगदुत्पत्तिवर्णनं, तत्र कपिलादिमुनीनां समुल्लेखो वर्तते। क.सं. न प्राप्यते। स्कन्दत्रयवर्णने बृ.सं.–

१)संहिता २)सिद्धान्तः ३) होरा इति क्रमः, किन्तु क.सं.-१) सिद्धान्तः २)जातकम् ३) संहिता। अत्र क्रमभेदो वर्तते। द्वयोरपि स्त्रिस्कन्धज्योतिषशास्त्रकाररूपेण प्रसिद्धिः। क.सं.- अध्यायानां विषयानुक्रमः प्रथमाध्याये निदर्शितः। बृ.सं.- अन्तिमाध्याये (अ.क्र.-१०७) कथितम्। बृ.सं.- ज्योतिषशास्त्रस्य प्रयोजनं नोक्तम्। क.सं.- ज्योतिषशास्त्रस्य प्रयोजनं सकारणं वर्णितं वर्तते। बृ.सं.-सांवत्सरसूत्राध्यायनाम्नि द्वितीयाध्याये ३९ श्लोका वर्तन्ते। अस्मिन्नध्याये दैवज्ञानां गुणदोषाः, नक्षत्रसूचकस्य दैवज्ञस्य लक्षणं -फलं चोक्तम्। गर्गादीनां विष्णुगुप्तादीनां च वचनानि लिखितानि। कश्यपसंहितायां एतद् विवेचनं न लभ्यते।

**अध्यायः-२**

बृ.सं.-त्वष्टानाम्नो ग्रहस्योल्लेखस्तस्य फलवर्णनं च कृतम्। क.सं.- एतन्न विद्यते। क.सं.-मेषादिसंक्रातीनामधिमासस्य क्षयमासस्य लक्षणं फलं च विवेचितम्। किन्तु, बृ.सं.- एतन्न विद्यते। क.सं.-सूर्यस्यार्द्राप्रवेशः, तद्वशाद् वृष्टिफलं, अन्यनक्षत्रचारवशात् फलनिरूपणं कृतम्। किन्तु बृ.सं- न विद्यते।

**अध्यायः-३**

बृ.सं.-अमावास्याविषयकं विवेचनं बृहत्संहितायां वैज्ञानिकं सोदाहरणं वर्तते। क.सं.- चन्द्रस्य अस्तावस्थायाममावास्या भवतीति विवेचितम्। क.सं.- चन्द्रशृङ्गोन्नतिविषये कथितं यत् -चन्द्रः सौम्यशृङ्गोन्नतो यदा भवेत्तदा सर्वजन्तूनां शुभदो भवेत्। बृ.सं.-चन्द्रशृङ्गोन्नतिविषये कथितं यत् चन्द्रः सौम्यशृङ्गोन्नतो यदा भवेत्तदा क्षेमं सस्यवृद्धिवृष्टिकरः। क.सं.-चन्द्रस्य याम्यशृङ्गोन्नतिर्यदा भवेत्तदा स अनिष्टकारकः। बृ.सं.-चन्द्रयाम्यशृङ्गोन्नतौ स दुर्भिक्ष-भयदः। क.सं.-

गर्गादीनामाचार्याणां मतोल्लेखो न प्राप्यते। बृ.सं.–गर्गादीनामाचार्यानां मतोल्लेखो वर्णनं च प्राप्यते।

**अध्यायः–४**

बृ.सं.–सूर्यचन्द्रचारानन्तरं राहुचारः प्रथमं कथितः। तदनन्तरं भौमचारो वर्णितः। क.सं.–क्रमेण ग्रहचारस्य वर्णनं कृतम्। क.सं.– भौमचारविषयको निस्त्रिंशमुशलनामको योगः कथितः। ततः तत्फलं दस्युशस्त्रार्घभीतिरिति वर्णितम्। बृ.सं.–भौमचारविषयकोऽसिमुशलनामको योगः कथितः। ततस्तत्फलं–दस्युगणेभ्यः पीडा, वृष्टिशस्त्रभयमिति वर्णितम्। बृ.सं.–यदा धूमयुक्तं सशिखं भौमबिम्बं दृश्यते तदा परियात्रस्थाने तन्मनुष्यान्निहन्ति। क.सं.–एतद् वर्णनं न कृतम्।

**अध्यायः–५**

बृ.सं.–बुधास्तविषयकं विवेचनं प्राप्यते। क.सं.–बुधास्तविषयकं विवेचनं न प्राप्यते। क.सं.–आषाढ–पौष–वैशाख–श्रावणमासेषु बुधोस्योदयोऽनिष्टफलदः कथितः। बृ.सं.– आषाढ–पौष–वैशाख–श्रावणमासेषु माघसहितेषु बुधोस्योदयो–ऽनिष्टफलदः कथितः। बृ.सं.– कार्त्तिक–आश्विनमासयोश्चन्द्रज उदयं व्रजेत्तदास्त्रचौराग्निरोगजलदुर्भिक्षादिभयं भवति। क.सं.–इतरेषु शुभप्रदः –इत्युक्त्वा बुधस्य शुभफलं कथितम्।

**अध्यायः–६**

बृ.सं.–द्वादशयुगस्य स्वामिनां नामादिवर्णनं कृतम्। क.सं.– द्वादशयुगस्य स्वामिनां नामादिवर्णनमब्दलक्षणाध्याये कृतम्। बृ.सं.–षष्ठिसंवत्सराणां नामानि फलानि च गुरुचाराध्याये कथितानि। क.सं.– षष्ठिसंवत्सराणां नामानि फलानि चाब्दलक्षणाध्याये कथितानि। बृ.सं.–बृहस्पतिर्यदा वर्षमध्ये द्वे नक्षत्रे विचरणं करोति

तदा शुभफलं करोति। यदा सार्धद्वयनक्षत्रेषु विचरणं करोति तदा मध्यमं फलं करोति। सार्धद्वयाधिकनक्षत्रेषु यदा विचरणं करोति तदा धान्यनाशो भवति। क.सं.– मूलपाठ एतत् वर्णनं न प्राप्यते किन्तु व.१ – हस्तलिखितग्रन्थे वर्णितं यत्– वर्षमध्ये यदा जीवो राशित्रयं स्पृशेत् तदा दुर्भिक्षं राज्यभ्रंशो निश्चयेन भवेत्। क.सं.– द्वादशराशिषु गुरोर्भ्रमणेन शुभाशुभफलं विवर्णितम्। बृ.सं.– द्वादशराशिषु गुरोर्भ्रमणेन शुभाशुभफलं न विवर्णितम्। एतद् विचारणीयम्।

**अध्यायः–७**

क.सं.–अश्विन्यादिषु त्रिषु–त्रिषु नक्षत्रेषु नागादिनववीथयो भवन्ति। बृ.सं.–स्वमतानुसारेण स्वाती–भरणी–कृत्तिकादिषु नागवीथिः, रोहिणी–मृगीशीर्ष–आर्द्रासु गजवीथिः। पुनर्वसु–पुष्य–आष्लेषासु ऐरावतवीथिः। मघा–पू.फा.–उ.फा.षु वृषवीथिः। अश्विनी–रेवती–पू.भा.–उ.भा.षु गोवीथिः। श्रवण–धनिष्ठा–शतभिषासु जरद्गववीथिः। अनुराधा–ज्येष्ठा–मूलेषु मृगवीथिः। हस्त–विशाखा–चित्रासु अजवीथि। पू.षा.उ.षा.नक्षत्रे द्वे दहनवीथिः – इति कथितम्। क.सं. – त्रिषु–त्रिषु नक्षत्रेषु वीथयो भवन्ति। आचार्यवराहमिहिरस्य स्वमतं पूर्णतया कश्यपेन भिन्नं वर्तते। बृ.सं.–अन्याचार्याणां मतं लिखितम्। क.सं.–अन्याचार्याणां मतं न लिखितम्। बृ.सं –दिवादृश्यमाणशुक्रस्य वर्णनं फलं लिखितम्। क.सं.– दिवादृश्यमाणशुक्रस्य वर्णनं फलं न वर्णितम्। बृ.सं.–कृत्तिकानक्षत्रभेदः, रोहिणीशकटभेद एवं तद्वशात्फलं विवर्णितम्। क.सं.–कृत्तिकानक्षत्रभेदः, रोहिणीशकटभेद एवं तद्वशात्फलं न विवर्णितम्। बृ.सं.–शुक्रस्याग्रगानां खेटानां पृथक् पृथग्वर्णनं तत्फलादेशश्च प्राप्यते। क.सं.–शुक्रस्याग्रगखेटानां पृथक् पृथग्वर्णनं तत् फलं च न प्राप्यते। बृ.सं.–शुक्रस्य वर्णो,

लक्षणं, तत्फलादेशश्च वर्णितः। क.सं.- शुक्रस्य वर्णो, लक्षणं तत्फलादेशश्च न प्राप्यते।

**अध्यायः-८**

बृ.सं.- शनैश्चरचारस्य तदुद्भवफलस्य च वर्णनं विस्तारेण २१ श्लोकैः कृतम्। क.सं.- अत्यन्तं स्वल्पं वर्णनं प्राप्यते। बृ.सं.- शनैश्चरस्य बिम्बस्य वर्णलक्षणफलं विवृतम्। क.सं.-शनैश्चरस्य बिम्बस्य वर्णलक्षणफलं न प्राप्यते।

**अध्यायः-९**

बृ.सं.- राहुग्रहविषयकानां विविधाचार्याणां च मतोल्लेखं कृत्वा तत्खण्डनं कृतम्। स्वमतं च प्रस्थापितम्। वैज्ञानिकं मतं स्थापयता तेन भूच्छाया चन्द्रग्रहणस्य कारणं भवति, न तु राहुग्रह इति स्पष्टीकृतम्। तथा च राहुविषयिकी सर्वशास्त्र-जनमान्यता तेन निराकृता। क.सं.- किमपि मतमतान्तरं न प्राप्यते। केवलं स्वमतमेव प्रदर्शितम्। क.सं.- वेलाहीनं तथातिवेलायां सूर्येन्दुग्रहणं तत्फलं च वर्णितम्। बृ.सं.- वेलाहीनं तथातिवेलायां सूर्येन्दुग्रहणं गाणितिकदृष्ट्या नैव संभाव्यते। एतद् गणितज्ञाः स्पष्टतया जानन्ति। बृ.सं.-दशविधा ग्रासभेदाः फलेन सह वर्णिताः सन्ति। क.सं.- दशविधा ग्रासभेदाः कथिताः, किन्तु तेषां नामानि फलानि च न वर्णितानि।

बृ.सं.-भौमादिग्रहाणां ग्रहणं तत्फलं च विशदीकृतम्। क.सं.- भौमादिग्रहाणां ग्रहणं तत्फलं च न कथितम्। बृ.सं.-कार्त्तिकादिषु मासेषु ग्रहणस्य फलं विशदीकृतम्। क.सं- कार्त्तिकादिषु मासेषु ग्रहणस्य फलं न कथितम्। बृ.सं.- ग्रहणानन्तरं सप्तदिनाभ्यन्तरे विविधोत्पातानां वर्णनं तत् फलं च विशदीकृतम्। क.सं- ग्रहणानन्तरं सप्तदिनाभ्यन्तरे विविधोत्पातानां वर्णनं तत् फलं च न प्राप्यते।

**अध्यायः-५**

बृ.सं.- गर्ग-पराशर-असित-देवलादीनामन्येषां च शिखिचारं दृष्ट्वा स्वविवरणं प्रस्तुतम्। क.सं.-केवलं स्वमतं प्रस्तुतम्। बृ.सं.- दिव्य-भौम-अन्तरिक्षजकेतूनां ज्ञानं गणितशास्त्रेण न शक्यं भवति। क.सं.- अयं विचारो न प्रस्तुतः। बृ.सं.- केतुदर्शनान्तरं त्रिपक्षकालानन्तरं तत् फलं प्राप्यते। क.सं.-यावद् दिनपर्यन्तं केतुराकाशे दृश्यते तावन्मासपर्यन्तं तत् फलं प्राप्यते। बृ.सं.-केतूनामनेकविधा संख्या कथिता। क.सं.-एकोऽपि बहुरूपेण केतुर्दृश्यत इति कथितम्। बृ.सं.- अश्विन्यादिषु समुत्थितानां केतूनां वर्णनं कृतम्। क.सं.-केवलं कृत्तिकासु - इति समुल्लेखं करोति।

**कश्यप-नारदसंहितयोः सूक्ष्मतया प्रतिपद्यसिद्धान्ततुलना-**

**अध्यायः-१**

अष्टादशप्रवर्तकानां नामावलिः प्रायेण समानरूपा, तथापि नामद्वयेषु भेदो दृश्यते। तद्यथा- तत्र क. सं. सूर्यः-पौलिशः इति स्थाने ना.सं. आचार्यः पौलस्त्य इति भेदः। शेषं विषयविवेचनं प्रायेण समानं दृश्यते। केवलं शब्दभेदः। अनेके श्लोकाः प्रायेण समाना दृश्यन्ते।

**अध्यायः-२**

वर्षेशादिविषयका केचन श्लोकाः नारदेन सूर्यचारे संगृहीताः। कश्यपस्तान् अब्दलक्षणाध्याये पठितवान्। क.सं.-सूर्यचाराध्याये सौम्य-याम्यायनलक्षणफलविवेचनं कृतम्। ना.सं.-सूर्यचाराध्याये सौम्य-याम्यायनलक्षणफलविवेचनं न कृतम्।

क.सं.- सूर्यादिनवग्रहचाराणां विषये भिन्न-भिन्नाध्यायेषु विवेचनं वर्तते। ना.सं.- सूर्यादिनवग्रहचाराणां विषय एकस्मिन्नेव द्वितीयेऽध्याये विवेचनं वर्तते। क.सं.-

सूर्यस्य नक्षत्रचारवशात्फलादेशवर्णनं प्राप्यते। ना.सं.-सूर्यस्य नक्षत्रचारवशात्फला-देशवर्णनं न प्राप्यते। क.सं.- सूर्यमण्डलगास्त्रयस्त्रिंशद्राहुसुतास्तामसाख्याः केतवस्तेषां वर्णनं फलादेशश्च वर्णितः। ना.सं.- सूर्यमण्डलगात्रयस्त्रिंशद्राहुसुतास्तामसाख्याः केतवस्तेषां वर्णनं न प्राप्यते। क.सं.-पर्वभिन्ने सूर्येन्दुग्रहणं तत् फलं च वर्णितम्। ना.सं.-पर्वभिन्ने सूर्येन्दुग्रहणं तत् फलवर्णनं च न प्राप्यते।

**अध्यायः-३**

क.सं.-दक्षिणशृङ्गोन्नतावशुभफलमुक्तम्। ना.सं.-दक्षिणशृङ्गोन्नतौ मीन-मेषस्थेऽशुभफलमुक्तम्। क.सं.-चन्द्रस्योदयास्तविषयकं वर्णनं प्राप्यते। ना.सं.-चन्द्रस्योदयास्तविषयकं वर्णनं न प्राप्यते। ना.सं.-चन्द्रस्य नक्षत्रवशादेवं राशिचारवशात् फलस्योल्लेखो वर्तते। क.सं.-चन्द्रस्य केवलं नक्षत्रचारवशात् फलस्योल्लेखो वर्तते। क.सं.-समस्तनक्षत्रेषु याम्यगस्य चन्द्रस्य शुभफलं प्रोक्तम्। ना.सं.-समस्तनक्षत्रेषु याम्यगस्य चन्द्रस्योल्लेखो न प्राप्यते। क.सं.-अधोमुखश्चन्द्रो यदा भवेत्तदा राजहानिर्भवेत्। ना.सं.-अधोमुखश्चन्द्रो यदा भवेत्तदा शस्त्रभयं भवेत्।

चन्द्रशृङ्गवेधस्य फलम्- १)मङ्गलः- क.सं.-हन्ति प्रत्यन्तभूमिपान्। ना.सं.-क्षेमनाशो भवति। २)बुधः- क.सं.-दुर्भिक्षवृष्टिभयकृद्भवेत्। ना.सं.-अर्घनाशो भवति। ३)गुरुः- क.सं.-श्रेष्ठनृपतिनाशो भवेत्। ना.सं.-वृष्टिनाशो भवति। ४)शुक्रः- क.सं.-अल्पनृपान्नाशयति। ना.सं.-नृपवर्गनाशो भवति। ५)शनिः- क.सं.-अस्त्रभयदो भवेत्। ना.सं.-जननाशो भवति।

क.सं.-चन्द्रस्य शुक्ल-कृष्णपक्षयोर्वृद्धि-क्षयवशाद् विप्र-राज्ञयोर्वृद्धि-हानी कथिते। ना.सं.-चन्द्रस्य शुक्ल-कृष्णपक्षयोर्वृद्धि-क्षयवशाद् विप्र-राज्ञयोर्वृद्धि-हानी न

कथिते। क.सं.– प्रालेयकुन्दकुसुममुक्तास्फटिकसन्निभं चन्द्रमण्डलं सर्वजन्तूनां क्षेमारोग्य–सुभिक्षकारकं भवति। ना.सं.– एतद् वर्णनं न प्राप्यते।

**अध्यायः–४**

क.सं.–१०–११–१२ नक्षत्रेषु वक्रित्वे कुजे वक्रमस्त्रमुखं नामको योगो भवति। स योगो रस–वृद्धिविनाशको भवति। ना.सं.–१०–११–१२ नक्षत्रेषु वक्रित्वे कुजे वक्रमल्पसुखं नामको योगो भवति। स योगो वृष्टिविनाशको भवति। क.सं.–भौमस्य बिम्बवशात् शुभाशुभफलं वर्णितम्। ना.सं.–भौमस्य बिम्बवशात् शुभाशुभफलं न वर्णितम्।

**अध्यायः–५**

क.सं.–चन्द्रस्य बिम्बवर्णने वज्रमौक्तिककुन्देन्दुकुमुदस्फटिकोपमाः – इति बहुविधं वर्णनं कृतम्। ना.सं.–चन्द्रस्य बिम्बवर्णने केवलं रजतस्फटिकोपमः– इत्येव वर्णनं कृतम्। शेषं समानं वर्तते।

**अध्यायः–७**

क.सं–याम्यमार्गगामी शुक्रो दुर्भिक्षदः। सौम्यमार्गगामी शुक्रः सुभिक्षदः। ना.सं.– एतद् वर्णनं न प्राप्यते। क.सं.– बुधः शुक्रस्य समीपस्थो महीमेकार्णवां करोति। तयोर्मध्यगतः समुद्रमपि शोषयेत्। ना.सं.– एतद् वर्णनं न प्राप्यते। क.सं.– एकराशिगाश्चत्वारः पञ्च वा ग्रहास्तद्बलाबलवशाद् भूपानामाहवप्रदा भवन्ति। ना.सं.– एतद् वर्णनं न प्राप्यते। क.सं.–शुक्रस्य वक्रगते फलं विवर्णितम्। ना.सं.– एतद् वर्णनं न प्राप्यते। ना.सं.– शुक्रबिम्बवर्णवशाद् विविधफलं विवर्णितम्। क.सं.– एतद् वर्णनं न प्राप्यते।

**अध्यायः-६**

क.सं.-गुरुचारवशात् प्रभावाद्याः संवत्सरा भवन्ति- इति स्पष्टतयोक्तम्। ना.सं.- स्पष्टतया नोक्तम्। शेषं समानं वर्तते।

**अध्यायः-७**

ना.सं.- सकलनक्षत्रेषु शनैश्चरचारफलं चोक्तम्। क.सं.- केषुचिन्नक्षत्रेषु शनैश्चरचारफलं वर्णितम्। अपरेषां नक्षत्राणां चारफलं केवलं व.१ -हस्तप्रतौ प्राप्यते। ना.सं.- नक्षत्रपुरुषकल्पना तथा तत्फलं च वर्णितम्। क.सं.- नक्षत्रपुरुषकल्पना तथा तत्फलं च नोपवर्णितम्। ना.सं.-शनैश्चरस्य वक्रगतेः, मध्यमगतेस्तथा शीघ्रगतेः फलं विवेचितम्। क.सं.- एतन्न विवेचितम्। क.सं.-सम्पूर्णसंहितायामयमत्यन्तं लघुस्वरूपोऽध्यायः। अध्यायेऽस्मिन्केवलं सार्धैकसंख्याश्लोकः प्राप्यते। ना.सं.- षट्सु श्लोकेषु शनैश्चरचारवर्णनं नारदसंहितायां प्राप्यते।

**अध्यायः-९**

ना.सं.-ग्रहणे सप्तपर्वेशा ब्रह्मा-इन्द्र-चन्द्र-कुबेर-वरुण-अग्नि-यमाः क्रमेण कथिताः। क.सं.- ग्रहणे सप्तपर्वेशा ब्रह्मा-चन्द्र -इन्द्र -कुबेर-वरुण-अग्नि-यमाः- इति क्रमेण कथिताः। अत्रेन्द्र-चन्द्रयोः स्थानपरिवर्तनं दृश्यते। क.सं.-ग्रहणप्रसङ्गे कथितं यत्- वेलाहीने ग्रहणे गर्भभयं, अतिवेलार्घनाशिनी भवेत्। ना.सं.-ग्रहणप्रसङ्गे कथितं यत्- वेलाहीने ग्रहणे सस्यहानिः, नृपाणां दारुणं रणम्, अतिवेलायां पुष्पहानिः, सस्यविनाशनमिति फलं कथितम्।

नारद-कश्यपसंहितयोरनेके श्लोकाः समानरूपा दरीदृश्यन्ते। कश्यपस्य नारदोपरि प्रभावोऽनुमीयते। उभयोः संहितासु परस्परसमुल्लेखो दृश्यते तेन च प्रायेण नारदकश्यपौ समानकालीनौ स्यातामिति संभाव्यते।

**अध्यायः-१०**

नारदसंहिता-कश्यपसंहितयोः केतुचारवर्णनं प्रायेण समानं दृश्यते।

**कश्यप-वसिष्ठसंहितयोः सूक्ष्मतया प्रतिपद्यसिद्धान्ततुलना-**

**अध्यायः-१**

कश्यपोक्तसंहिता कश्यपसंहिता नाम्ना विख्याता। किन्तु वशिष्ठ-संहिताकारः स्वयमेव संहिताया नामधेयं जगन्मोहनसंज्ञया नामाभिधानं करोति। व.सं.- ज्योतिषशास्त्रं केवलं ब्राह्मणैरेवाध्येतव्यम्। इति विशेषतो वशिष्ठसंहितायां निर्दिष्टं, न तथा निर्देशः कश्यपसंहितायां कृतः। क.सं.- पुण्यमायुर्यशस्करं ज्योतिषशास्त्रज्ञान-फलमुक्तम्। किन्तु व.सं. चतुर्विधपुरुषार्थफलं वर्णितम्। व.सं.-दैवज्ञगुणदोषा वर्णिताः सन्ति। क.सं.- न वर्तते। व.सं.-अष्टादशज्योतिषशास्त्रप्रवर्तकानां समुल्लेखो न कृतः। क.सं.- संपूर्णतायाष्टादशप्रवर्तकानां समुल्लेखः कृतः।

**अध्यायः-२**

व.सं.-अयन-ऋतुवर्णनं विशदीकृतम्। क.सं.-अस्योल्लेखो न कृतः। सूर्यस्य दिवार्द्राप्रवेशफलम्- व.सं.-जगद्विपत्तिः, सस्यनाशोऽल्पवृष्टिफलं वर्णितम्। क.सं.- केवलं सस्यनाशो वर्णितः। क.सं.-सन्ध्यासमयेऽर्धरात्रावार्द्राप्रवेशस्तत् फलं च वर्णितम्। व.सं.- एतद् वर्णनं न प्राप्यते। व.सं.-राहुसुतानां केतूनां संख्यानिर्देशो न विद्यते। क.सं.- त्रयस्त्रिंशद्राहुसुता इति निर्देशो वर्तते। व.सं.-सूर्यस्य बिम्बे छिद्राणि, तोरणाकृति-कुम्भाकृति-छत्राकारादिकं वर्णनं न कृतम्। क.सं.-एतादृशं वर्णनं प्राप्यते। व.सं.-पर्वभिन्नस्य सूर्येन्दुग्रहणस्योल्लेखः फलं च न वर्णितम्। क.सं.- पूर्वोक्तं संपूर्णं

वर्णनं कृतमस्ति। वसिष्ठसंहितायां विषयविवेचनं विस्तृतं वर्तते। कश्यपसंहितायां नाधिकं न स्तोकं किन्त्वावश्यकं वर्णनं स्वल्पशब्दैः सरलभाषाशैल्या कृतम्।

**अध्यायः-३**

व.सं.-मेषादिराशिस्थितस्य चन्द्रस्य हतशृङ्गवशात् फलादेशः कृतः। क.सं.-मेषादिराशिस्थितस्य चन्द्रस्य हतशृङ्गवशात् फलादेशो न कृतः। व.सं.-व्रीहियवाकारचन्द्रशृङ्गवशाद् वृष्टिर्महदर्घता फलं निर्दिष्टं, पिपीलिकासदृशे पूर्वफलनाशो (शुभफलनाशो) भवेत्। व.सं.-यवाकारचन्द्रशृङ्गवशाद् वृद्धिः, पिपीलिकासदृशे हानिः फलं निर्दिष्टम्।

भौमादिग्रहाणां चन्द्रशृङ्गवेधफलम्- १)मङ्गलः- क.सं.-हन्ति प्रत्यन्तभूमिपान्। व.सं.-क्षुच्छस्त्रभीतिरतुला भवेत्। २)बुधः- क.सं.-दुर्भिक्षवृष्टिभयकृद्भवेत्। व.सं.-समानं वर्णनं वर्तते। ३)गुरुः- क.सं.-श्रेष्ठनृपतिनाशो भवेत्। व.सं.- समानं वर्णनं वर्तते। ४)शुक्रः-क.सं.-अल्पनृपानां नाशो भवेत्। व.सं.-सर्वे नृपवर्गा नियतकार्यरता भवन्ति। ५)शनिः- क.सं.-अस्त्रभयदो भवेत्। व.सं.-किरातानां हानिर्भवति। क.सं.-समस्तधिष्ण्यानां याम्यगो चन्द्रः शुभदो भवेत्। व.सं.-समस्तधिष्ण्यानां याम्यगश्चन्द्रोऽशुभदो भवेत्।

क.सं.-समस्तधिष्ण्यानां सौम्यगचन्द्रवर्णनं न वर्तते। व.सं.-समस्तधिष्ण्यानां सौम्यगश्चन्द्रः शुभदो भवेत्। व.सं.- चन्द्रस्य नक्षत्रचारवशाद् रत्न-जीव-धातु-मूल-ऊर्ण-कर्पूर-इत्यादिवस्तूनां महदर्घत्वसमर्घत्वयोर्वर्णनं वर्तते। क.सं.- चन्द्रस्य नक्षत्रचारवशाद् रत्न-जीव-धातु-मूल-ऊर्ण-कर्पूर-इत्यादिवस्तूनां महदर्घत्व-समर्घत्वयोर्वर्णनं न वर्तते।

**अध्यायः-४**

क.सं.- भौमस्य ७-८-९ नक्षत्रे वक्रित्वे, तद् वक्रमुष्णसंज्ञं कथितम्। तस्य फलम् -आमयाग्निभयप्रदत्वं भवति। व.सं.-भौमस्य ७-८-९ नक्षत्रे वक्रित्वे, तद् वक्रं मुख्याह्वयमेव कथितम्। तस्य फलं वह्निव्याधिभयप्रदत्वं भवति।

**अध्यायः-५**

क.सं.-बुधोदयविषये कथितं यत्- सौम्यो विनोत्पातेन सर्वदोदयं न व्रजेत्। व.सं.- बुधोदयविषये कथितं यत्- कदाचित् विनोत्पातेन बुध उदयं व्रजेत्। क.सं.- बुधस्य बिम्बवर्णने विविधानि विशेषणानि वर्ण्यन्ते - यथा- वज्रमौक्तिककुन्देन्दुकुमुदस्फटिकोपमः। व.सं.-वसिष्ठसंहितायामधिकानि विशेषणानि प्रयुज्यन्ते। तानि यथा- माणिक्यशङ्खकनकामलपुष्परागकुन्देन्दुसन्मरकतोपम- शुद्धकान्तिः।

**अध्यायः-६**

व.सं-प्रभवादिसंवत्सराणां वर्णनं फलं च गुरुचाराध्याये कथितम्। क.सं-प्रभवादिसंवत्सराणां वर्णनं फलं चाब्दलक्षणस्य स्वतन्त्राध्याये कथितम्। शेषं प्रायेण समानं प्राप्यते।

**अध्यायः-७**

व.सं.-शुक्रेण रोहिणी-मघानक्षत्रयोर्भेदनं, तत् फलं च विवृतम्। क.सं.-शुक्रेण रोहिणी-मघानक्षत्रयोर्भेदनं तत् फलं न विवृतम्। व.सं.-शुक्रस्य बिम्बकान्तिवर्णनवशात् फलं निरूपितम्। क.सं.-एतत् फलं न विवृतम्।

**अध्यायः-८**

व.सं.- अश्विन्यादिविविधनक्षत्रेषु शनैश्चरचारस्य काश्मीरादिदेशभेदेन विविधफलं प्रदत्तम्। क.सं.- अश्विन्यादिविविधनक्षत्रेषु शनैश्चरचारस्य

काश्मीरादिदेशभेदेन विविधफलं न प्राप्यते। व.सं.– मेषादिविविधराशिषु शनैश्चरचारस्य विविधफलं प्रदत्तम्। क.सं.– मेषादिविविधराशिषु शनैश्चरचारस्य विविधफलं न प्राप्यते।

**अध्यायः–९**

व.सं.–राहुग्रहस्योत्पत्तिविषये पौराणिकं विस्तृतं रोचकं वर्णनं प्राप्यते। क.सं.–आवश्यकमेव वर्णनं प्राप्यते। अधिकविस्तारो नास्ति। व.सं.–सूर्यचन्द्रोपरागानन्तरं पुनस्तस्मिन्नेव समये तयोर्ग्रहणं भवेत्तदा संपूर्णराष्ट्रस्य नाशो जायते। क.सं.– एतद् वर्णनं न प्राप्यते। व.सं.–भौम–बुध–गुरु–शुक्र–शनैश्चर–ग्रहाणां ग्रहणं, तत् फलं च वर्णितम्– इति वैशिष्ट्यम्। क.सं.– एतद् विवरणं न प्राप्यते।

**अध्यायः–१०**

व.सं.–गणितज्ञानेन केतूनामुदयास्तमयज्ञानं न शक्यं भवति। क.सं.– एतद् विषये न लिखितम्। व.सं.– केतुचाराध्याय उल्का–परिवेश–इन्द्रधनुः–गन्धर्वनगरादीनामुत्पातानां वर्णनं फलसहितं कथितम्। क.सं.– केवलं केतुविषयकं विवरणं प्राप्यते। व.सं.–अश्विन्यादिनक्षत्रेषूदितानां केतूनां वर्णनं, तत् फलं च कथितम्। क.सं.–एतन्न प्राप्यते।

**पञ्चाङ्गविषयकं विविधसंहितानां विवेचनम्–**

**१.तिथिः**

**कश्यपसंहिता अध्यायः–१२**

**बृहत्संहिता अध्यायः–९९**

बृ.सं.– तिथिसंज्ञाविषये तृतीयासंज्ञा विजया लिखिता। क.सं.– तिथिसंज्ञाविषये तृतीयासंज्ञा जया लिखिता। प्रायेण सर्वत्र जयेत्येव प्रसिद्धम्। बृ.सं.–यत् कार्यं यन्नक्षत्रे

विहितं तत् तद्दैवत्यासु तिथिषु कर्तव्यम्-इति कथितम्। क.सं.-विविधतिथिषु कर्तव्याकर्तव्यकर्मणां सविस्तरं स्वतन्त्रं केवलतिथीनां सम्बन्धे कथितम्। क.सं.-रन्ध्रतिथीनां ज्ञानपूर्वकं त्याज्यात्याज्यविवेकः स्पष्टीकृतः। बृ.सं.- एतद् वर्णनं न प्राप्यते। क.सं.- तिथ्यादिषु कर्तव्याकर्तव्यस्य विधिनिषेधस्तथा तत्र विविधकर्मणां-दन्तधावन- स्त्रीसेवन- क्षुरक्रिया- तैलाभ्यङ्ग- आमलकस्नान-इत्यादीनां शुभाशुभफलं निरूपितम्। बृ.सं.- एतद् वर्णनं न प्राप्यते।

क.सं.-अमावास्याभेदः १)सिनीवाली-चन्द्रवती २)कुहू-नष्टचन्द्रा -इति प्रदर्शितः। बृ.सं.- एतद् वर्णनं तिथ्यध्याये न प्राप्यते। क.सं.- मन्वादितिथयस्तथा कृतादिचतुर्युगाणां प्रारम्भतिथयः, तासां महत्त्वं च विवर्णितम्। बृ.सं.-एतद् वर्णनं तिथ्यध्याये न प्राप्यते। क.सं.-गजच्छायामुहूर्तस्य विवेचनं प्रदत्तम्। बृ.सं.-गजच्छायामुहूर्तस्य विवेचनं तिथ्यध्याये न प्राप्यते। क.सं.-एकस्यां तिथौ द्वौ करणौ भवतः, अथवा तिथ्यर्धं करणं स्मृतम्। बृ.सं.-एतद् वर्णनं न प्राप्यते।

**कश्यपसंहिता अध्यायः-१२**

**नारदसंहिता अध्यायः-४**

क.सं.-लोहास्मवृक्षशय्यादिकं,चित्तप्रेष्यासवादिकर्म तथा रणोपकरणं क्षेत्रं प्रतिपदि कर्तव्यमुक्तम्। ना.सं.-भिन्नरूपेण - चित्रलेख्यासवक्षेत्रतैलशय्यादिकं, वृक्षच्छेदो गृहाश्मकर्म प्रतिपदि विहितम्। क.सं.-पक्षरन्ध्रातिथिषु न्यूनं दशनाडिकाः शुभकर्मणि त्याज्याः। ना.सं.- पक्षरन्ध्रातिथिषु क्रमेण- ४-१४-७-९-५नाड्यः शुभकर्मणि त्याज्याः। क.सं.- गजच्छायामुहूर्ते मासस्य उल्लेखो न कृतः। ना.सं.-गजच्छायामुहूर्ते भाद्रपदमासस्य उल्लेखो कृतः।

**कश्यपसंहिता अध्यायः-१२**

**वसिष्ठसंहिता अध्यायः–१२**

क.सं.–पक्षरन्ध्रातिथिषु न्यूनं दशनाडिकाः शुभकर्मणि त्याज्याः। व.सं.–पक्षरन्ध्रातिथिषु क्रमेण– ५–१४–८–१५नाड्यः शुभकर्मणि त्याज्याः। व.सं.–विविधमासेषु तिथ्यनुसारेण प्रचलितानां विविधव्रतोत्सवानां विस्तृतं विवरणं प्राप्यते। क.सं.– एतद्विषये संक्षेपेण विवरणं कृतम्।

**२.वारः**

**कश्यपसंहिता अध्यायः–१३**

**बृहत्संहितायां वारविषयकं विवेचनं न दृश्यते।**

**कश्यपसंहिता अध्यायः–१३**

**नारदसंहिता अध्यायः–४**

क.सं.– तिथेर्वारो बलाधिकः –इति वारस्य प्राधान्यं प्रतिपादितम्। ना.सं.–एतद् वर्णनं न प्राप्यते। क.सं.–वारविषयेऽभ्यङ्गस्य रविवारादिक्रमेण यथा– क्लेश–कान्ति–मद–लक्ष्मी–धन–हानि–सौभाग्यताफलं विवर्णितम्। ना.सं.– वारविषयेऽभ्यङ्गस्य रविवारादिक्रमेण यथा– क्लेश–कान्ति–व्याधि–सौभाग्य–नैःस्व–हानि–सर्वसमृद्धिफलं विवर्णितम्।

**कश्यपसंहिता अध्यायः–१३**

**वसिष्ठसंहिता अध्यायः–१३**

क.सं.– तिथेर्वारो बलाधिकः –इति वारस्य प्राधान्यं प्रतिपादितम्। व.सं.–एतत् वर्णनं न प्राप्यते। व.सं.–चन्द्रवासरे रविवारोक्तं चन्द्रवारोक्तं च कर्म कर्तव्यमिति निर्दिष्टम्। क.सं.–केवलं चन्द्रवारोक्तं कर्म कर्तव्यमिति निर्दिष्टम्।

क.सं.–वारविषयेऽभ्यङ्गस्य रविवारादिक्रमेण यथा– क्लेश–कान्ति–मद–लक्ष्मी–धन–हानि–सौभाग्यताफलं विवर्णितम्। व.सं.–वारविषयेऽभ्यङ्गस्य रविवारादिक्रमेण यथा–दु:ख–कान्ति–निधन–श्रीकीर्ति–शत्रुवृद्धि–रोग–भोगारोग्यादिफलं विवर्णितम्। व.सं.–ग्रहणं विनानुक्तवारादिष्वमायां–विष्टि–पातयोरौषधेन युतं तैलं न दुष्यति। क.सं.–अयं परिहारो न प्राप्यते। व.सं.– ग्रहस्य वर्णविषये कथितं यद् बुधस्य वर्ण: पीत:। क.सं.–बुधस्य वर्णविषये दूर्वाछविर्बुध: –इति वर्णितम्। व.सं.–सूर्यादिवारभेदेन वस्त्रधारणे फलं विवृतम्। क.सं.–एतद्विषयकं वर्णनं वस्त्रलक्षणाध्याये लिखितम्। व.सं.–कालहोरावर्णनं प्राप्यते। क.सं.–कुलिक–यमघण्ट–अर्धयाम–कालहोरादिकं गणितागतं सफलं विवेचनं प्राप्यते।

**३.नक्षत्राणि–**

**कश्यपसंहिता अध्याय:–१४**

**बृहत्संहिता अध्याय:–१०१**

बृ.सं.–अश्विन्यादिविविधनक्षत्रजातानां फलनिरूपणं प्राप्यते। क.सं.–अश्विन्यादिविविधनक्षत्रजातानां फलनिरूपणं मिश्रकाध्याये प्राप्यते। क.सं.–नक्षत्रवशतो विविधकर्माणि कर्तव्याकर्तव्यानि समुहूर्तं कथितानि। बृ.सं.–एतद्वर्णनं न प्राप्यते। क.सं.– नक्षत्राणां विविधा: संज्ञा:– तिर्यङ्गमुख–अधोमुख–ऊर्ध्वमुख–चर–स्थिर–मिश्र–मृदु–क्षिप्रादिकास्तद्वशात्कर्माणि च विवर्णितानि सन्ति। बृ.सं.–एतद्विषयकं विवेचनं दृश्यते। क.सं.– त्रिपुष्करयोगविवेचनं प्राप्यते। बृ.सं.– त्रिपुष्करयोगविषयकं विवेचनं न दृश्यते। क.सं.–नक्षत्राणां विशेषवृक्षास्तद्वृक्षपूजनम्, अरिवृक्षपीडनं च विवर्णिनम्। बृ.सं.–नक्षत्राणां विशेषवृक्षास्तद्वृक्षपूजनम्, अरिवृक्षपीडनादिविषयकं

विवेचनं न प्राप्यते। क.सं.–नक्षत्राणां स्वामिनो देवताः कथिताः। बृ.सं.– नक्षत्राणां स्वामिनो देवतानां वर्णनं न प्राप्यते।

**कश्यपसंहिता अध्यायः–१४**

**नारदसंहिता अध्यायः–६**

ना.सं.–नक्षत्राणां तारकाणां संख्याल्लेखः प्राप्यते। क.सं.– नक्षत्राणां तारकाणां संख्याल्लेखो न प्राप्यते। ना.सं.–अश्वानां सर्वकर्म शुक्रस्य वासरे कर्तव्यम्। क.सं.– अश्वानां सर्वकर्म सूर्यस्य वासरे कर्तव्यम्।

**कश्यपसंहिता अध्यायः–१४**

**वसिष्ठसंहिता अध्यायः–१४**

व.सं.–अध्यायेऽस्मिन् नक्षत्रविषयकाः विविधमुहूर्ताः यथा– वस्त्रधारणं, विद्यारम्भः, अन्नप्राशनं, धननाशकनक्षत्राणि, सर्पदंशे मरणदायकानि नक्षत्राणि, विविधनक्षत्रेषूत्पन्नरोगस्य फलविवेचनं, रोगमुक्तिविचारः, रोगशान्त्यर्थं शिवपूजनविधिश्च कथितः। अन्यविषयाः– यात्रा, गवां क्रयविक्रयः, राजदर्शननक्षत्राणि, क्षौरकर्मविवेचनं, भौमादिभिर्विद्धनक्षत्रचिन्तनं, उत्पातदूषितनक्षत्रं, आभूषणधारणे नक्षत्रम्, इत्यादिकं मुहूर्तविवेचनं विस्तारेण विवर्णितं दृश्यते। क.सं.– एतद् विवेचनमस्मिन्नध्याये न प्राप्तम्। व.सं.–अतीव विस्तृतं वर्णनमस्मिन्नध्याये। क.सं.– न संक्षेपेन नाधिकेन, किन्तु विषयवस्तुमुद्दिश्य वर्णनं सरलभाषया सुन्दरशैल्या निर्दिष्टम्।

**४.योगः**

**कश्यपसंहिता अध्यायः–१५**

**बृहत्संहितायामयमध्यायो न प्राप्यते।**

**कश्यपसंहिता अध्यायः–१५**

**नारदसंहिता अध्यायः–७**

क.सं.–योगानां स्वामिनां वर्णने विविधमतान्तराणि दृश्यन्ते–

| क्र. कश्यपसंहितोक्ताः | नारदसंहितोक्ताः |
|---|---|
| १) कालः | यमः |
| २) विष्णुः | विष्णुः |
| ३) चन्द्रः | चन्द्रः |
| ४) पितामहः | ब्रह्मा |
| ५) जीवः | बृहस्पतिः |
| ६) राक्षसः | चन्द्रमाः |
| ७) देवेन्द्रः | इन्द्रः |
| ८) कालः | जलम् |
| ९) अग्निः | सर्पः |
| १०. अर्कः | अग्निः |
| ११. भूमिः | सूर्यः |
| १२. मरुत् | भूमिः |
| १३. गजः | वायुः |
| १४. जलाधीशः | शिवः |
| १५. गणेशः | वरुणः |
| १६. शिवः | गणेशः |
| १७. धराधिपः | रुद्रः |

| | |
|---|---|
| १८. त्वष्टा | कुबेरः |
| १९. मित्रः | त्वष्टा |
| २०. अश्विनीकुमारः | मित्रः |
| २१. मित्रः | कार्त्तिकेयः |
| २२.कमला | सावित्री |
| २३. द्विजाः | लक्ष्मीः |
| २४. देवता | गौरी |
| २५. राक्षसः | अश्विनीकुमारः |
| २६. पितरः | पितरः |
| २७. विधिः | अदितिः |

**कश्यपसंहिता अध्यायः–१५**

**वसिष्ठसंहिता अध्यायः–१५**

व.सं.–योगानां नामानि कथितानि सन्ति। क.सं.–योगानां नामानि न प्राप्यन्ते। व.सं.–योगः स्वनामसदृशं फलं ददाति। क.सं.–एतद्वर्णनं न प्राप्यते। व.सं.–विरुद्धयोगस्य प्रथमं पादं त्याज्यम्। क.सं.–एतद्वर्णनं न प्राप्यते।

व.सं.–समस्तयोगानामतीव विस्तारेण विवेचनं प्राप्यते।क.सं.–समस्तयोगानामावश्यकमेव विवेचनं प्राप्यते। व.सं.–व्यतीपातयोगे दानफलं लक्षगुणं, भ्रमणे कोटिगुणं, उत्तिष्ठे सप्तकोटिगुणं, निपाते चाक्षयफलं वर्णितम्। क.सं.–एतद्वर्णनं न प्राप्यते।

व.सं.–व्यतीपातयोगस्य शरीराकृतिः कल्पिता। क.सं.– न प्राप्यते। व.सं.– सूर्यचन्द्रमसोर्योगान्नक्षत्रमुत्पन्नं भवति, अतो नक्षत्रस्वामिन एव योगानां स्वामिनो ज्ञेयाः। क.सं.–योगानां स्वामिनामानि वर्णितानि।

**५.करणम्**

**कश्यपसंहिता अध्यायः–१६**

**वसिष्ठसंहिता अध्यायः–१००**

बृ.सं.–क्रमतः सम्पूर्णकरणानां नामानि कथितानि। क.सं.–बवादीनि, विष्टिः, नागचतुष्पदौ इत्यादिकं कथितं किन्तु सम्पूर्णकरणानां नामानि न कथितानि। बृ.सं.– करणानां स्वामिविषये केवलमेको भेदो दृश्यते, चतुष्पादस्य स्वामी वृषो निर्दिष्टः। क.सं.–करणानां स्वामिविषये केवलमेको भेदो दृश्यते, चतुष्पादस्य स्वामी रक्षो निर्दिष्टम्। बृ.सं.–बवादि– एकादशकरणेषु कर्तव्यकर्माणि वर्णितानि। क.सं.– न प्राप्यते। बृ.सं.– कर्णवेधविषयको मुहूर्तविचारस्तथा च विवाहपटलविषयकं विवेचनं करणाध्याये कथं कृतमिति विचारणीयम्। क.सं.– करणाध्याय एतद्विवेचनं न प्राप्यते। कर्णवेधविचारो न कृतः। विवाहाध्याये विवाहमुहूर्तविवेचनं प्राप्यते। क.सं.– भद्रा(विष्टि)करणस्य शरीराङ्गकल्पना तस्य शरीराङ्गेषु नाडीनां स्थापनम्, तच्छुभाशुभफलवर्णनं प्राप्यते। बृ.सं.– एतद्वर्णनं न प्राप्यते।

**कश्यपसंहिता अध्यायः–१६**

**नारदसंहिता अध्यायः–९**

क.सं.–भद्रा(विष्टि)करणस्य शरीराङ्गकल्पना तस्य शरीराङ्गेषु कट्यामुन्मत्तता फलं कथितम्। क.सं.–भद्रा(विष्टि)करणस्य शरीराङ्गकल्पना तस्य शरीराङ्गेषु कट्यामुद्गमनं फलं कथितम्।

**कश्यपसंहिता अध्यायः–१६**

**वसिष्ठसंहिता अध्यायः–१६**

व.सं.–क्रमतः सम्पूर्णकरणानां नामानि लिखितानि। क.सं.–बवादीनि, विष्टिः, नागचतुष्पदौ इत्यादिकं कथितं किन्तु सम्पूर्णकरणानां नामानि न प्राप्यन्ते। व.सं.– बवादि– समस्तैकादशकरणेषु कर्तव्यकर्माणि वर्णितानि। क.सं.– न प्राप्यते। व.सं.– भद्राजन्मविषये पौराणिकी कथा निरूपिता। देवदानवसंग्रामे देवानां पराजयो भवति, तदा शिवक्रोधात् तृतीयशिवनेत्राद् विष्टिकरणोद्भवः। तया दैत्यानां वधः। अत एव करणानां मध्ये तस्यै स्थानं प्रदत्तम्। शिवक्रोधात्तृतीयनेत्राद्भद्रा जाता। अतो माङ्गलिककर्मणि तस्या विवर्जनम्। क.सं.– न प्राप्यते।

**संस्काराः**

**कश्यपसंहिता अध्यायाः–२३ तः ३५**

**बृहत्संहिता अध्यायाः–९८,१००,१०३,५०**

क.सं.–आधानकालस्य(गर्भाधानसमयस्य) मुहूर्तो विशदीकृतः। तत्र पुत्र–पुत्री–षण्ढस्य समुत्पन्नस्य कारणं, तथा पुत्र–कन्याप्राप्तिमुहूर्तो विवेचितः। बृ.सं.– न प्राप्यते। क.सं.–गर्भाधान–पुंसवन–सीमन्त–जातकर्म–नामकर्म–चौल–उपनयन–अन्त्येष्टि–श्राद्ध–संस्काराणां मुहूर्तस्य विशदं वर्णनं प्राप्यते। बृ.सं.– केवलेन श्लोकेनैकेन समस्तसंस्काराणां साधारणमत्यन्तस्थूलमानेन मुहूर्तविवरणं प्राप्यते। बृ.सं.– कर्णवेध–विवाह–सामान्यक्षौरकर्मविषये विवेचनं संक्षिप्तं दृश्यते। क.सं.–कर्णवेधं विहाय विवाहादिसमस्तसंस्काराणां विभिन्नाध्यायेषु पर्याप्तं विवेचनं दृश्यते। क.सं.– छुरिकाबन्धनाध्याये छुरिकाधारणकालमुहूर्तविषये चिन्तनं विवर्णितम्। बृ.सं.–

खड्गाध्याये खड्गविषयकं चिन्तनं प्राप्यते किन्तु छुरिकाधारणकालमुहूर्तविषये चिन्तनं न विवर्णितम्।

**कश्यपसंहिता अध्यायाः–२३ तः ३५**

**नारदसंहिता अध्यायाः–१५ तः २९, ५५**

क.सं.–आधानकाले पर्वतिथिः, मूल–आश्लेषा–मघानक्षत्राणि वर्जितानि। ना.सं.–एतद् वर्णनं न प्राप्यते। क.सं.–आधानमासाधिपाः शुक्र–मङ्गल–गुरु–सूर्य–चन्द्र–शनि–बुध–आधानलग्नेश–चन्द्र–अर्का विवर्णिताः सन्ति। ना.सं.–एतद् वर्णनं न प्राप्यते। क.सं.–व्यक्तगर्भे पुंसवनं कुर्यात्। ना.सं.– प्रसिद्धगर्भे विषममासे तृतीये वा पुंसवनं कुर्यात्। क.सं.–नामकर्म जन्मतो सूतकान्ते द्वादशाहे सुमुहूर्ते वा स्वस्तिवाचनपूर्वकं कथितम्। ना.सं.–सूतकान्ते सुमुहूर्ते वा नामकरणं कार्यम्। क.सं.–सुश्रीयुतं तिङतं सुसमाक्षरैर्नामपूर्वकं नामकरणं शुभप्रदम्। ना.सं.–एतद्वर्णनं न प्राप्यते। क.सं.–दिनस्य पूर्वाह्णे मङ्गलघोषपूर्वकं नामकरणं कार्यम्। ना.सं.–एतद्वर्णनं न प्राप्यते।

क.सं.– ६–८–१० मासे शिशोर्नवान्नप्राशनं कार्यम्। ना.सं.–६–८मासे पुत्रस्य तथा ५–७ मासे पुत्र्या नवान्नप्राशनं शुभम्। क.सं.–अन्नप्राशन आभ्युदायिकं (नान्दीश्राद्धं) कर्म कृत्वा स्वस्तिवाचनपूर्वकं शुक्लस्रग्वस्त्रगन्धाद्यैः शिशुर्दैवज्ञमर्चयेत्। अन्नप्राशनस्य विधिस्तथा सूर्यादिग्रहाणामन्नप्राशनलग्नस्थानां विशेषतः फलादेशो विवर्णितः। ना.सं.–एतादृशं वर्णनं न प्राप्यते।

क.सं.–उपनयनसंस्कारस्य महत्त्वं प्रतिपाद्य प्रयोजनं वर्णितम्। तद्यथा–द्विजत्वकारणं श्रौतस्मार्तकर्मप्रसाधनम्। ना.सं.–एतादृशं वर्णनं न प्राप्यते। क.सं.–उपनयनलग्ने यदा शाखेशो गुरुः शुक्रश्च नीचस्थस्तदंशगो वा तदोपनीतः स

शिशुर्वेदशास्त्रविवर्जितः। ना.सं.– उपनयनलग्ने यदा शाखेशो गुरुः शुक्रश्च नीचस्थस्तदंशगो वा तदोपनीतः स शिशुः कुलशीलविवर्जितः। क.सं.–उपनयनलग्ने शाखेशो वा गुरुशुक्रौ रिपुराश्यंशगौ तत्रोपनीतशिशुः कलाखिलविवर्जितः। ना.सं.– उपनयनलग्ने शाखेशो वा गुरुशुक्रौ रिपुराश्यंशगौ तत्रोपनीतशिशुः महाघातककृद्भवेत्।

**उपनयनलग्नात् केन्द्रगताः पापग्रहोद्भवा विशिष्टपापयोगाः–**

| क्र. कश्यपसंहिता | नारदसंहिता |
|---|---|
| १) स्फूजितः– कुलनाशकः | फूर्जितः–वंशनाशनः |
| २) कुपितः–शिष्याचार्यविनाशनः | कूजितः– शिष्याचार्यविनाशनः |
| ३) रुधिरः–महदापदः | रुदितः–अतुला गदा |
| ४) रन्ध्रः–शिशोर्मातृविनाशकः | रन्ध्रः–मातृविनाशकः |
| ५) उग्रः–विद्यावित्तविनाशनः | उग्रः–तातवित्तविनाशनः |

क.सं.–अनेकदोषनाशका विशिष्टा विविधयोगा विवर्णिताः।ना.सं.– एतद्वर्णनं न प्राप्यते। क.सं.– चैत्रमासं विवर्ज्य माघादिषु पञ्चसु मासेषु समावर्तनं विवर्णितम्। ना.सं.–अत्र मासानां कथनं न विद्यते। क.सं.– समावर्तनसंस्कारेऽष्टमीतिथेस्त्यागः कथितः। ना.सं.– समावर्तनसंस्कारे सप्तमीतिथेस्त्यागः कथितः। क.सं.– अत्राङ्कुरार्पणं विस्तारेण वर्णितम्। सर्वेषु मङ्गलेष्वेवमङ्कुरार्पणमिष्यते। ना.सं.–स्वतन्त्राध्यायेऽङ्कुरार्पणं वर्णितम्। तत् संक्षेपतश्चतुर्भिः श्लोकैस्त्रयोविंशतितमेऽध्याये वर्णनं कृतम्।

**छुरिकाया अङ्गुलादिमानेनैकादशभागफलम्–**

**क्र. कश्यपसंहितोक्तं** **नारदसंहितोक्तं**

| | |
|---|---|
| १) मृत्युः | पुत्रलाभः |
| २) आपत्तिः | शत्रुवृद्धिः |
| ३) पुत्रहानिः | स्त्रीलाभः |
| ४) स्त्रीलाभः | गमनम् |
| ५) गमनम् | शुभम् |
| ६) यशः | द्रव्यहानिः |
| ७) अर्थहानिः | द्रव्यवृद्धिः |
| ८) धनम् | प्रीतिः |
| ९) शत्रुक्षयः | सिद्धिः |
| १०)सन्धिः | विजयः |
| ११)कीर्तिः | स्तुतिः |

क.सं.–छुरिकाया अग्रभागे यदा व्रणो दृश्यते तदा तत्फलम्– १)अग्रभागे व्रणः–जयप्रदः २)मध्यभागे व्रणः–हानिदः ३)अन्त्यभागे व्रणः– निधनप्रदः। ना.सं.– एतादृशं वर्णनं न वर्तते। क.सं.–विवाहसंस्कार ऋणत्रयच्छेदकारी धर्मकामार्थसिद्धिदः –इति वर्णनं कृतम्। ना.सं.–विवाहसंस्कारस्य महत्त्वं वर्णितं किन्तु ऋणत्रयच्छेदकारी धर्मकामार्थसिद्धिदः –इति वर्णनं न कृतम्। क.सं.–कन्यालाभप्रश्ने– वृषभ–कुम्भ–कर्कलग्ने शुक्र–चन्द्रौ संबन्धयुक्तौ(युतिः–दृष्टिः), तदा कन्यालाभो भवति। ना.सं.–कन्यालाभप्रश्ने– वृषभ–तुला–कर्कलग्ने शुक्र–चन्द्रौ संबन्धयुक्तौ(युतिः–दृष्टिः), तदा कन्यालाभो भवति। क.सं.–कन्याप्रदानेन– सम्यक् कन्याप्रदानात् पुत्रप्रौत्रप्रवर्धनम्(वंशाभिवृद्धिः) –इति कन्याप्रदानफलं लिखितम्। ना.सं.–एतादृशं वर्णनं न लिखितम्।

क.सं.–कन्यावरणमुहूर्ते– कन्यावरणं कुजवर्जितवासरे, मासाद्यदिवसं (प्रतिपद्)– रिक्तां(४–९–१४ तिथि:), अष्टमीं नवमीं च तिथिं त्यक्त्वा, पञ्चाङ्गशुद्धिदिवसे कुर्यात्। ना.सं.–एतादृशं मुहूर्तवर्णनं न प्राप्यते। क.सं.–कन्यावरणे –सह वृद्धगणैर्वरयेत्कन्यकां सतीम्। वरणोक्तवासरे कन्यापिता तस्या: कन्याया: स्वस्तिवाचनपूर्वकं विधिं कारयेत्। ना.सं.–कन्याप्रदानं तस्या: पिता प्रीतिपूर्वकं कुर्यात्। अन्यविवरणं न प्राप्यते। क.सं.–कन्यावरणाध्याय इन्द्राणीप्रार्थनामन्त्रे– देवेन्द्रप्रियभामिनि –इति पाठ:। ना.सं.–कन्यावरणाध्याय इन्द्राणीप्रार्थनामन्त्रे– देवेन्द्रप्रियभाषिणि –इति पाठ:।

क.सं.–सूर्यराशिचार(सौरमास)वशात् विवाहमुहूर्त: प्रदत्त:। ना.सं.–चान्द्रमासवशात् विवाहमुहूर्त: प्रदत्त:। क.सं.–उत्तरायणगे सूर्ये मीनराशिचारे चैत्रमासे विवाहं परिवर्जयेत्। ना.सं.–एतादृशं मुहूर्तविवेचनं न प्राप्यते। क.सं.–विवाहोक्तमासनामानि वैदिकनामैर्वर्णितानि वर्तते। तथा–शुक्ले, तपस्ये, तपसि, माधवे करग्रह: प्रशस्त:, सहोर्जमासयोर्मध्यम: ज्ञेय:। ना.सं.–एतादृशाणि वैदिकमासनामानि न प्राप्यन्ते। किन्तु सामान्यानि मासनामानि कथितानि सन्ति। क.सं.–चापराशि(धनुराशि)गते सूर्ये विवाहं नैव कारयेत्। ना.सं.–एतादृशं मुहूर्तविधानं न प्राप्यते। क.सं.–वृद्धश्चन्द्र: स्त्रियं हन्ति, अस्तंगतश्चन्द्रस्तत्पतिं हन्ति। ना.सं.–एतादृशं विधानं न प्राप्यते।

क.सं.–विवाहोक्तविविधानां एकोनविंशतिदोषाणां निरूपणं स्वतन्त्रध्याये प्राप्यते। ना.सं.–विवाहोक्तविविधानामेकोनविंशतिदोषाणां निरूपणं न स्वतन्त्राध्याये, किन्तु विवाहाध्याय एव प्राप्यते। क.सं.–ज्येष्ठे मासे कन्यावरस्यैकस्य ज्येष्ठत्वे विवाह: शुभद:(त्रिज्येष्ठे दोष:, न द्विज्येष्ठे)। ना.सं.–एतादृशं विधानं न प्राप्यते।

क.सं.–एकोनविंशतिदोषनिरूपणेऽत्यन्तमहत्त्वपूर्णविविधसुभाषितानां प्रयोगः प्राप्यते। ना.सं.– एकोनविंशतिदोषनिरूपणे सुभाषितानां प्रयोगो न प्राप्यते। क.सं.–सौराष्ट्रे साह्यदेशे च लोहिताभं, वङ्गदेशे चण्डीशचण्डायुधं विवर्जयेत्। ना.सं.– सौराष्ट्रे शाल्वदेशे च लत्तितं, कलिङ्गे वङ्गदेशे च पातितं भमुपग्रहं च वर्जयेत्। क.सं.–वाह्लिके कुरुदेशे चोपग्रहदोषं विवर्जयेत्। ना.सं.–वाह्लिके कुरुदेशे च यस्मिन्देशे न दूषणम् – इति कथितम्।

क.सं.–कलिङ्गदेशे दग्धलग्नानि वर्ज्यानि। ना.सं.– कलिङ्गे वङ्गदेशे च पातितं भमुपग्रहं वर्ज्यम्। क.सं.–विवाहकुण्डलीगतसूर्यादिग्रहाणां द्वादशस्थानवशात् शुभाशुभफलानि विवर्णितानि। ना.सं.–एतादृशं विवाहकुण्डलीगतसूर्यादिग्रहाणां द्वादशस्थानवशात् शुभाशुभफलं न प्राप्यते। क.सं.–आर्याणां मागधानां च गोधूलिकं मुख्यं मतम्। ना.सं.– प्राच्यानां च कलिङ्गानां गोधूलिकं मुख्यं मतम्। क.सं.–ब्राह्म–प्राजापत्य–दैव–आर्षेत्यादीनां विवाहानां लक्षणं विवर्णितम्। ना.सं.–एतादृशं लक्षणं न प्राप्यते।

क.सं.–नववधूप्रवेशो विवाहात् ६–८–९–१०दिने शुभप्रदः। ना.सं.– नववधूप्रवेशो विवाहात् समदिने तथा दशमे दिने कर्तव्यः। क.सं.–अन्येष्टिक्रियायां शवदाहे शुक्र–रविवारौ वर्जनीयौ। ना.सं.– अन्येष्टिक्रियायां शवदाहे शुक्र–मङ्गलवारौ वर्जनीयौ। क.सं.–द्वितीयातिथावश्विनीनक्षत्रं स्यात्तदा श्राद्धे श्रीवत्सो नाम योगो भवति। स इहलोके सम्पत्प्रदः, कर्ता पुत्रप्रौत्रसमन्वितो भवेत्। ना.सं.–एतादृशं योग–फलं न प्राप्यते। क.सं.–तृतीयातिथौ भरणीनक्षत्रे श्राद्धे नन्दावर्ताह्वयो योगो भवति। तत्र पितृभ्यो दत्तमक्षय्यं भवति। ना.सं.– योगनाम एवं फलं न प्राप्यते। क.सं.–चतुर्थी भोगदा तत्र याम्यधिष्ण्यं भवेद्यदि। ना.सं.– चतुर्थी श्रीपदा पितृकर्मणि। क.सं.–पञ्चमी–भरणीनक्षत्रे

स्वस्तिकयोगो भवति। सः पुत्रदायकः। ना.सं.– पञ्चमी–भरणीनक्षत्र आनन्दयोगो भवति। सः पुत्रपौत्रधनदायकः। क.सं.–त्रयोदशीश्राद्धं पुत्रकलत्रयोः सर्वदा धनदं भवति। ना.सं.–त्रयोदश्यां हानिर्धनकलत्रयोर्भवति।

**कश्यपसंहिता अध्यायाः–२३ तः ३५**

**वसिष्ठसंहिता अध्यायाः–२४ तः ३२**

**गर्भाधानविषये प्रथमार्तवे वारफलम्–**

| क्र. | वारः | कश्यपसंहिता | वसिष्ठसंहिता |
|---|---|---|---|
| १) | भौमः | दुःखिता | वन्ध्या |
| २) | बुधः | सौभाग्ययुता | संततियुता |
| ३) | गुरुः | श्रीयुता | |
| | अधिकधनयुता | | |
| ४) | शुक्रः | पतिभक्ता | |
| | आनन्ददायिनी | | |
| ५) | शनिः | मलिना | कुलटा |

क.सं.–आधाने दशमरात्रिवर्जनं न प्राप्यते। व.सं.– आधाने दशमरात्रिवर्जनं कथितम्। क.सं.–पुंसवन–सीमन्तविषयेऽस्तागा नीचगाः शत्रुक्षेत्रस्था ग्रहा न फलप्रदाः, उदिता उच्चराशिगता मित्रराशिगता ग्रहाः सुफलप्रदाः भवन्ति। व.सं.– एतादृशं वर्णनं न प्राप्यते।

व.सं.–गर्भरक्षार्थं पौराणिकदृष्ट्या रोहिणीनक्षत्रे श्रवणनक्षत्रे वा शुक्लपक्षस्य द्वादशीतिथौ सप्तमीतिथौ वा दिनस्य मध्याह्ने पूर्वाह्णे वा विष्णुपूजनं सविस्तारं सविधि वर्णितम्। क.सं.– एतादृशं वर्णनं न प्राप्यते।

क.सं.–नामकरणसंस्कारे– नामकर्म द्वादशाहे वा सूतकान्ते स्वस्तिवाचनपूर्वकं कार्यम्। व.सं.–एतादृशं वर्णनं न प्राप्यते। क.सं.–नामकरणसंस्कारे– नामकमं सुश्रीयुतं तिङतं सुसमाक्षरैः करणीयम्। व.सं.– एतादृशं वर्णनं न प्राप्यते। क.सं.–नामकरणसंस्कारो दिनस्य पूर्वाह्णे कार्यः। व.सं.– एतादृशं वर्णनं न प्राप्यते। क.सं.–नामकरणसंस्कारे– नाम मङ्गलघोषैश्च सरहस्यं शिशोर्दक्षिणश्रुतौ कथयेत्। व.सं.–एतादृशं वर्णनं न प्राप्यते। क.सं.–अन्नप्राशने शनैश्चर–भौम–सूर्यवारांस्त्यक्त्वान्यवासरे दिवसे कार्यम्। व.सं.–एतादृशं विवेचनं न प्राप्यते। क.सं.–अन्नप्राशन आभ्युदयिकं (नान्दीश्राद्धं) कर्म कृत्वा स्वस्तिवाचनपूर्वकं शुक्लस्त्रगवस्त्रगन्धाद्यैः शिशुर्दैवज्ञमर्चयेत्। व.सं.–एतादृशं विवेचनं न प्राप्यते।

क.सं.–अन्नप्राशने बालकं प्राङ्मुखं कृत्वा विधानतः प्राशयेत्। व.सं.–एतादृशं विवेचनं न च प्राप्यते। क.सं.–अन्नप्राशने बालकं सुवर्णद्रव्या रौप्यद्रव्या वा प्राशयेत्। व.सं.–एतादृशं विवेचनं न प्राप्यते। क.सं.–अन्नप्राशनलग्नस्थो यदा राहुः केतुर्वा भवेत्तदा सदालसं कदशनं बालकं करोति। व.सं.–अन्नप्राशनविलग्नगो यदा राहुः केतुर्वा भवेत्तदा शिशुमन्नविवर्जितं करोति। क.सं.–यदान्नप्राशनलग्नस्थो भौमो भवेत्तदा प्राशनकर्ता शिशू रिपुणा हन्यते। व.सं.–अन्नप्राशनविलग्नगो यदा भौमो भवेत्तदा प्राशनकर्ता शिशुः पित्तरोगेण पीडितो भवति। क.सं.–यदान्नप्राशनलग्नस्थौ द्वौ शुभौ ग्रहौ स्यातां तदा भोक्ता शिशुः सत्रदो भवेत्। व.सं.–एतादृशं विवेचनं न प्राप्यते। क.सं.–गर्भिणीपतिधर्मा न विवर्णिताः। व.सं.–गर्भिणीपतिधर्मा विवर्णिताः।

क.सं.–सर्वेषां जनानां सामान्यक्षौरकर्ममुहूर्तो विवर्णितः। व.सं.– सर्वेषां जनानां सामान्यक्षौरकर्ममुहूर्तो न विवर्णितः। क.सं.– पञ्चमे–पञ्चमे दिने सामान्यक्षौरं शुभदम्। व.सं.–एतादृशं विवरणं न लिखितम्। क.सं.–आत्महितैषिणां क्षौरनिषेधः–

स्नात्वा–भुक्त्वा–युद्धे–याने–भूषिते–निशायां–सन्ध्यायां–नवमे नवमे दिने न क्षौरं कार्यम्। व.सं.–एतादृशं विवरणं न लिखितम्। क.सं.–विप्रभूपाज्ञयोद्वाहे सूतके–बन्धमोक्षणे–यज्ञाधाने समस्तनक्षत्रवारेषु क्षौरकर्म इष्टसिद्धिदम्। व.सं.–एतादृशं विवरणं न लिखितम्।

क.सं.–उपनयनसंस्कारमहत्त्वं– अनेन संस्कारेणैव द्विजत्वं प्राप्नोति। अनेन संस्कारेणैव श्रौतस्मार्तकर्म साध्यते। सर्वाश्रमाणामाद्यसंस्कारः। अयं देहसंस्कारः। अनेन संस्कारेणैव पूर्वदेहिनः संस्कृता भवन्ति। व.सं.–श्रुतिस्मृतीनां पदमुत्तमं द्विजस्तस्योत्तमत्वं व्रतबन्धः। क.सं.–उपनयनसंस्कारलग्ने यदा भौमः स्यात्तदा शिष्याचार्यविनाशो भवेत्। व.सं.– उपनयनसंस्कारलग्ने यदा भौमः स्यात्तदा स वर्षमध्ये कुमारं हन्ति।

क.सं.–उपनयनसंस्कारलग्ने यदा राहुः स्यात्तदा शिशोर्मातृनाशो भवेत्। व.सं.–उपनयनसंस्कारलग्ने यदा राहुः स्यात्तदा शिशोर्मातृनाशोऽर्थविनाशो वा जायते। क.सं.–उपनयनसंस्कारलग्नकुण्डल्यां विविधभाव–ग्रहोद्भवानामावश्यकशुभाशुभयोगानां शुभाशुभफलं विवर्णितम्। व.सं.– उपनयनसंस्कारलग्नकुण्डल्यां द्वादशभाव–ग्रहोद्भवानां फलं विस्तारेण वर्णितम्। क.सं.–चैत्रमासं विवर्ज्य माघादिषु पञ्चमासेषु समावर्तनसंस्कारमुहूर्तो विवर्णितः। व.सं.– समावर्तनसंस्कारमुहूर्तविषये मासानां कथनं न प्राप्यते। क.सं.– समावर्तनसंस्कारोक्तवारः १)बुधः२)गुरुः३)शुक्रः विवर्णितः। व.सं.– समावर्तनसंस्कारोक्तवारः १) गुरुः २) शुक्रः विवर्णितः।

क.सं.–समावर्तनसंस्कारेऽपि सर्वेषु मङ्गलेष्वेवमङ्कुरार्पणमिष्यते। इति कथयित्वाङ्कुरार्पणं सविधि विवर्णितम्। व.सं.– समावर्तनसंस्कारेऽङ्कुरार्पणविधिर्न वर्णितः। क.सं.–आवश्यकं सम्पूर्णं वर्णनमस्मिन्नध्याये प्राप्यते। व.सं.–अस्मिन्नध्याये

केवलं श्लोकत्रयं प्राप्यते। तेन स्वल्पं वर्णनं प्राप्यते। क.सं.–विवाहप्रश्नविषये वरस्य कन्यायाश्च जन्मनक्षत्रं राशिं च दैवज्ञाय निवेदयेत्। व.सं.–एतादृशं विवरणं न लिखितम्। क.सं.– कन्या–वर प्राप्तिप्रश्ने निमित्त–शकुनादिभिर्लाभालाभविचारः कृतः। व.सं.–एतादृशं विवरणं न लिखितम्।

क.सं.–कन्यावरणं विवाहस्याङ्गं वर्तते तेनात्र पूर्णतया कन्यावरणस्य स्वतन्त्राध्याये (कन्याप्रदानाध्याये) वर्णनं कृतम्। व.सं.–एतद्विषये विवरणं न लिखितम्। क.सं.–कन्याप्रदानाध्याये –गन्ध–वस्त्र–ताम्बूलादिभिः कन्यां पूजयित्वा शुक्लवस्त्रविभूषणं दत्त्वा मङ्गलघोषैर्विप्राशीर्वचनैः सह शची (देवेन्द्राणी) पूजनादौ कन्यावरणविधिः प्रदर्शितः। व.सं.–एतादृशं किमपि वर्णनं न प्राप्यते।

क.सं.–विवाहविषये स्त्रीणां युग्माब्दे, पुरुषाणामयुग्माब्दे विवाहः पुत्रपौत्रदः। तस्य विपरीते तु मृत्युदो भवेत्। व.सं.–विवाहविषये स्त्रीणां युग्माब्दे, पुरुषाणामयुग्माब्दे विवाहः शुभदः कथितः। तस्य विपर्यये तु दुःखगदप्रदः। क.सं.–वृद्धशुक्रः स्त्रियं हन्ति वृद्धजीवस्तु तत्पतिं हन्ति –इति कथितम्। व.सं.–एतादृशं किमपि वर्णनं न प्राप्यते। क.सं.–ज्येष्ठमासे कन्या वा वरैकस्य जेष्ठत्वं शुभदं स्मृतम्। (अत्र त्रिज्येष्ठत्वं विवर्जनीयं न द्विज्येष्ठत्वं) व.सं.–एतादृशं किमपि वर्णनं न प्राप्यते। क.सं.–तिथिरेकगुणः, वारो द्विगुणो, ततः तारकः(नक्षत्रम्), तस्मात्तु बलवान्योगः, करणं बलवांस्ततो लग्नं बलाधिकम्, होरा बलवती लग्नाद्, देक्काणो बलवांस्ततः, ततो नवांशो बलवान्, द्वादशांशस्ततो बली, सर्वेभ्यो बलवान् त्रिंशांशः। व.सं.–अध्यायेऽस्मिन् एतत् तिथ्यादिबलाबलत्वं न चिन्तितम्।

क.सं.–ग्रन्थकारः केवलं स्वमतमेव प्रस्थापितं करोति। व.सं.– ग्रन्थकारः पितामहादीनां मतानां स्वसंहितायां समुल्लेखं करोति।

क.सं.–विवाहे संग्रहदोष(चन्द्रयुतग्रहोद्भवदोष)विषये फलम्–राहुग्रहोद्भवः संग्रहदोषः कलहप्रदः, केतूद्भवः संग्रहदोषोऽतुलं दुःखप्रदो भवेत्। व.सं.– राहुग्रहोद्भवः संग्रहदोषो न वर्णितः। क.सं.–विवाहे संग्रहदोषे(चन्द्रयुतग्रहोद्भवदोषे)पापद्वयेन युतश्चन्द्रो दम्पत्योर्निधनप्रदः। व.सं.– एतस्य योगस्य वर्णनं न प्राप्यते। व.सं.–वेध–गण्ड–लिङ्ग–जाति–पक्षि–आय–गोत्र–योगिन्यादिविविधान्यष्टादश कूटानि लिखितानि। क.सं.– अत्रावश्यकाष्टकूटानां वर्णनं प्राप्यते, किन्तु अन्यकूटानां वर्णनं न प्राप्यते। क.सं.– नववधूप्रवेशः ६–८–९–१० दिने शुभप्रदः। व.सं.– नववधूप्रवेशः ६–८–१० दिने शुभप्रदः। क.सं.–अन्त्येष्टिसंस्कारस्य, श्राद्धविषयकस्य स्वतन्त्राध्याये विशिष्टं सफलं योगादिसहितं विस्तृतं वर्णनं प्राप्यते। व.सं.– अन्त्येष्टिसंस्कारस्य श्राद्धविषयकं विवेचनं न प्राप्यते।

**वास्तु –**

**कश्यपसंहिता अध्यायाः–३७ तः ३९**

**बृहत्संहिता अध्यायः–५३**

बृ.सं.–वास्तुपुरुषस्य पौराणिकरीत्योत्पत्तिवर्णनं विवर्णितम्। क.सं.–वास्तुपुरुषस्य पौराणिकरीत्योत्पत्तिवर्णनं न प्राप्यते। क.सं.–गृहप्रवेशविषयके स्वतन्त्राध्याये गृहप्रवेशमुहूर्तस्य विस्तृतं विवरणं प्राप्यते। तस्य मुहूर्तः–पञ्चाङ्गशुद्धिसंयुक्ते, गृहे दिवा–रात्रिप्रवेशः, तत्फलं, गृहप्रवेशकुण्डलिगतग्रह–योगानयसारतः शुभाशुभफलं, वामार्कादिविवर्णनपूर्वकं भृङ्गारादिसहितं गृहप्रवेशो विशदीकृतः। अकपाटमनाच्छन्ने वास्तुबलिपूजनहीने गृहप्रवेशे विपत्तिरशुभफलं विवर्णितम्। बृ.सं.–केवलैकेन श्लोकेन गृहप्रवेशवर्णनं कृतम्। तत्र वेदमन्त्रध्वनिपूर्वकं भृङ्गारसहितं गृहप्रवेशो लिखितः। ग्रन्थकारो गृहप्रवेशमुहूर्तादिविषये वर्णनं न करोति।

क.सं.–भूमेर्विप्रादिवर्णानां क्रमतो गन्धः– १)विप्रः–मधु २)क्षत्रियः–पुष्पम् ३)वैश्यः–सुरा ४)शूद्रः–मांसम्। बृ.सं.–भूमेर्विप्रादिवर्णानां क्रमतो गन्धः– १)विप्रः–घृतगन्धा २)क्षत्रियः–रक्तगन्धा ३)वैश्यः–अन्नगन्धा ४)शूद्रः–मद्यगन्धा

क.सं.–क्षेत्रस्वीकरणार्थं तस्मिन् भूमौ दिग्ज्ञानार्थं द्वादशाङ्गुलशङ्कुस्थापनं, तेन पूर्वापराह्णयोश्छायया पूर्व–पश्चिमदिक्शोधनं, ततश्चाप–त्रिकोणमितिगणितेनोत्तर–दक्षिणदिग्ज्ञानं विशदीकृतम्। बृ.सं.–दिग्ज्ञानार्थं कापि पद्धतिरध्यायेऽस्मिन्न दत्तास्ति।

**प्राच्यदिशायां गृहद्वारफलानि–**

| **क्र. कश्यपसंहिता** | **बृहत्संहिता** |
|---|---|
| १)क्रोधः | अग्निभयम् |
| २)भीतिः | कन्याजन्म |
| ३)धनप्राप्तिः | बहुधनम् |
| ४)नृपपूजा | नरेन्द्रप्रीतिः |
| ५)महद्भयम् | क्रोधपरता |
| ६)चौरभयम् | असत्यभाषणम् |
| ७)विपुत्रता | क्रूरता |
| ८)हानिः | तस्करता |

**दक्षिणदिशायां गृहद्वारफलानि–**

| **क्र. कश्यपसंहिता** | **बृहत्संहिता** |
|---|---|
| १)बन्धनम् | अल्पपुत्रता |
| २)निधनम् | दासत्वम् |
| ३)प्रीतिः | नीचत्वम् |

| | |
|---|---|
| ४)अर्थप्राप्तिः | भक्ष्यपानवस्तुपुत्रवृद्धिः |
| ५)धनागमत्वम् | रौद्रम् |
| ६)अरुजत्वम् | कृतघ्नता |
| ७)व्याधिभयम् | निर्धनता |
| ८)अधनत्वम् | पुत्रबलहानिः |

**पश्चिमदिशायां गृहद्वारफलानि-**

| **क्र. कश्यपसंहिता** | **बृहत्संहिता** |
|---|---|
| १)पुत्रहानिः | पुत्रपीडा |
| २)शत्रुवृद्धिः | शत्रुवृद्धिः |
| ३)लक्ष्मीप्राप्तिः | धनलाभः |
| ४)अर्थप्राप्तिः | सुतसम्पत्तिप्राप्तिः |
| ५)धान्यप्राप्तिः | सम्पत्तिः |
| ६)सौभाग्यम् | राजभयम् |
| ७)दुःखम् | धननाशः |
| ८)शोकः | रोगः |

**उत्तरदिशायां गृहद्वारफलानि-**

| **क्र. कश्यपसंहिता** | **बृहत्संहिता** |
|---|---|
| १)हानिः | मृत्युर्बन्धनम् |
| २)स्त्रीदूषणम् | शत्रुवृद्धिः |
| ३)निःस्वम् | पुत्रधनलाभः |
| ४)बहुधान्यम् | समस्तगुणसम्पत् |

| | |
|---|---|
| ५)धनागमः | पुत्रधनाप्तिः |
| ६)सम्पद्वृद्धिः | वैरम् |
| ७)महाभीतिः | सुतदोषः |
| ८)व्याधिः | नैःस्वम् |

क.सं.–द्वारस्यायाम–दैर्घ्यविषये– विस्ताराद्विगुणोत्सेधं द्वारमेवं गृहादिषु। बृ.सं.–राजा–सेनापति–विप्रादिवर्णानां भिन्न–भिन्नप्रमाणानि प्रदत्तानि। क.सं.– यदा पितृद्वयान्त्यमूलार्कानि, भौमेन सहितानि तदा गृहारम्भस्तद्गृहमग्निना दह्यते। बृ.सं.–एतादृशं विवरणं न प्राप्यते। क.सं.–चन्द्रेऽर्के वाग्निनक्षत्रे संस्थे गृहनिर्माणे सति तद्गृहमग्निना दह्यते। बृ.सं.–एतादृशं विवरणं न प्राप्यते। क.सं.–शनिसंयुक्तेषु, मैत्रेन्द्रनिलयाम्यनक्षत्रेषु गृहनिर्माणे सति तद्गृहं यक्षराक्षसैर्गृह्यते। बृ.सं.–एतादृशं विवरणं न प्राप्यते।

क.सं.–अध्यायेऽस्मिन् विस्तारेण विविधयोगाः –अन्यहस्तगतगृहं, निःस्वगृहं, श्रीयुतगृहं, सुखप्रदगृहम्, इष्टार्थसिद्धिप्रदगृहं, धनधान्यसुखप्रदगृहं, भूरिधान्यप्रदगृहं, भूरिलाभप्रदगृहं, पुत्रपौत्रप्रवर्धनगृहम्, इत्यादीनि विविधशुभाशुभफलयुतानि गृहाणि वर्णितानि। बृ.सं.–एतादृशं विवरणं न प्राप्यते। क.सं.–गृहारम्भः स्थिरराशिगते रवौ वा चरराशिगते कार्यः, किन्तु द्विस्वभावराशिगते रवौ न कारयेत्। बृ.सं.–एतादृशं विवरणं न प्राप्यते। क.सं.–गृहारम्भे मासाः–माघ–फाल्गुन–वैशाख–ज्येष्ठ–श्रावण–कार्त्तिक–मार्गशीर्षमासाः शुभप्रदाः। बृ.सं.– गृहारम्भे मासानां विवरणं न प्राप्यते। क.सं.–गृहास्याय–व्ययप्रमाणेन गृहनिर्माणं तत्फलं च प्रथितम्। बृ.सं.– एतादृशं गृहास्याय–व्ययविषयकं विवरणं न प्राप्यते।

क.सं.- गृहारम्भे सूर्य-भौमवारांशा भयप्रदाः। शेषग्रहाणां वारांशाः कर्तुरिष्टार्थसिद्धिप्रदाः। बृ.सं.- एतादृशं गृहारम्भे सूर्य-भौमवारांशविषयकं विवरणं न प्राप्यते। क.सं.- चरवास्तूल्लेखो गृहद्वारस्थापनविषये कृतः। बृ.सं.- एतादृशं चरवास्तुविषयकं विवरणं न प्राप्यते।

क.सं.- गृहराशिगृहस्वामिराशिसम्बन्धवशात् षडाष्टक-नवमपञ्चम-द्विर्द्वादशमित्यादिकं विविधसम्बधप्रकारेणैव शुभाशुभफलं विवर्णितम्। बृ.सं.-एतादृशं गृहराशि-गृहस्वामिराशिसम्बन्धवशात् शुभाशुभं फलविवरणं न प्राप्यते।

**क.सं.-षोडशविधगृहस्य नामानि विवर्णितानि**-

(१) ध्रुवं, ( २)धन्यं, (३)जयं, (४)नन्दं, (५)खरं, (६)कान्तं, (७)मनोरमं, (८)सुमुखं, (९)दुर्मुखं (१०)क्रूरं, (११)शत्रुं, (१२) स्वर्णप्रदं, (१३)क्षयम्, (१४)आक्रन्दं, (१५)विपुलाख्यं, (१६)विजयम्। -एते गृहाः पुण्यवंशास्तेषां वर्णनं कृतम्। बृ.सं.- एतादृशां पुण्यप्रदानां षोडशविधगृहाणां नामविषयकं विवरणं न प्राप्यते।

क.सं.- सर्वतोभद्रादिप्रसिद्धवास्तुसहितस्य त्रैलोक्यविश्रुतस्य जयनाम्नो गृहस्य वर्णनं प्राप्यते। बृ.सं.- एतादृशो जयनाम्नो गृहस्य विवरणं न प्राप्यते।

क.सं.- गृहाभ्यन्तरे विविधव्यवस्थाः- (१)इन्द्राग्न्योः- वर्धनं गेहम्, (२)यमाग्न्योः- घृतमन्दिरम्। (३) राक्षसकालयोर्मध्ये- पुरीषत्यागसदनम्, (४)जलाधीशनिर्ऋत्योर्मध्ये- विद्यागृहम्, (५)जलाधीशसमीरयोः- रोदनं सदनम्, (६)वायुकुबेरयोर्मध्ये- कामोपभोगसदनम्, (७)कुबेरेश्वरयोर्मध्ये- नवरत्नालयम्। (८)ईशेन्द्रयोर्मध्ये-धान्यगृहम्। बृ.सं.- एतादृशं गृहाभ्यन्तरे विविधव्यवस्थाविवरणं न प्राप्यते।

क.सं.– जलस्रावे विविधानि मानानि– १)पाञ्चालं, २)विदेहं, ३)आवन्तिकं, ४)मागधं ५)कौरवं, ६)शूरसेनं, ७)विजयं, ८)गान्धरम् –इत्यष्टौ मानानि कथितानि सन्ति। बृ.सं.– एतादृशानि जलस्रावे विविधानि मानानि नामानि च न प्राप्यन्ते।

क.सं.–वास्तोः शिलान्यासे ब्रह्मस्थानं निधनप्रदम्, मण्डलपरितः पिशाचांशाः दुःखशोकभयप्रदाः। शेषांशाः पुत्रपौत्रप्रदाः। बृ.सं.– पूर्वोत्तरकोणे पूजापूर्वकं वास्तोः शिलान्यासं कुर्यात्। क.सं.– गृहसमीपे बदिरं खदिरं विना सर्वे कण्टका निन्दिताः सन्ति। बृ.सं.– गृहसमीपे सर्वे कण्टका निन्दिताः, शत्रुभयप्रदाः सन्ति। क.सं.– गृहाङ्गणे गृहसमीपे च विविधशुभाशुभवृक्षाणां विस्तारेण विवरणं प्राप्यते। बृ.सं.– गृहाङ्गणे गृहसमीपे च विविधशुभाशुभवृक्षाणां संक्षेपतो विवरणं प्राप्यते।

क.सं.–गृहारम्भकालीनकुण्डल्यनुसारेण गृहस्य विविधशुभाशुभफलानि कथितानि सन्ति। बृ.सं.–एतादृशं गृहारम्भकालीनकुण्डल्यनुसारेण शुभाशुभफलानि न प्राप्यन्ते। क.सं.–विप्रादीनां नृपादीनाञ्च गृहं ध्वजादि –आयानुसारतः कार्यम्। बृ.सं.– सविस्तरं विविधहस्तप्रमाणतो विप्रादीनां नृपादीनाञ्च गृहं कार्यम्। क.सं.– वर्णसङ्करप्रजानां किमपि गृहप्रमाणं प्रकारश्च न प्राप्यते। बृ.सं.– पराशवादिचतुर्विधवर्णसङ्करप्रजानां गृहप्रमाणं वर्णितम्। क.सं.– वास्तुमण्डले वास्तुदेवतास्थापने गणाधीशनाम प्राप्यते, किन्तु दितेर्नाम न प्राप्यते।

बृ.सं.–वास्तुमण्डले वास्तुदेवता स्थापने दितेर्नाम प्राप्यते, किन्तु गणाधीशस्य नाम न प्राप्यते। क.सं.–वास्तुपूजनाध्याये वास्तुदेवतास्थापनपूर्वकं सविस्तारेण मण्डलदेवतासहितं वास्तुपूजनं सविधि विवर्णितम्। अत्र वास्तुपूजनफलं– सम्यग्वास्तुपूजां प्रयत्नपूर्वकं यः कुरुते स नर आरोग्यायुःपुत्रपौत्रधनादीनि लभेत्।

वास्तुपूजाहीने फलम्–वास्तुपूजारहितं यः प्रविशेन्नवमन्दिरं रोगान्नानाविधान्क्लेशान्नश्नुते सर्वसङ्कटान्। बृ.सं.–एतादृशं वास्तुपूजादिकं विवरणं न प्राप्यते।

**कश्यपसंहिता अध्यायाः–३७ तः ३९**

**नारदसंहिता अध्यायः–३१–३२**

क.सं.–गृहप्रवेशमुहूर्तविषयकं सविस्तारं विशदं वर्णनं स्वतन्त्राध्याये कृतम्। ना.सं.–गृहप्रवेशमुहूर्तविषयकं वर्णनं प्राप्यते।

**वास्तुभूमेर्गन्धः–**

| **क्र.** | **विप्रादिवर्णः** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|---|
| १) | विप्रः | मधु | मधु |
| २) | क्षत्रियः | पुष्पम् | पुष्पम् |
| ३) | वैश्यः | सुरा | आम्लम् |
| ४) | शूद्रः | मांसम् | मांसम् |

**वास्तुभूमेर्वर्णः–**

| **क्र.** | **विप्रादिवर्णः** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|---|
| १) | विप्रः | सितः | सितः |
| २) | क्षत्रियः | रक्तः | रक्तः |
| ३) | वैश्यः | हरिद्रः(पीतः) | हरितः |
| ४) | शूद्रः | कृष्णः | कृष्णः |

**विप्रादीनां वर्णक्रमेण भूमिरसः(स्वादः)–**

| **क्र.** | **विप्रादिवर्णः** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|---|
| १) | विप्रः | मधुरः | मधुरः |

| | | | |
|---|---|---|---|
| २) | क्षत्रिय: | कटु: | कटु: |
| ३) | वैश्य: | कषाय: | तिक्त: |
| ४) | शूद्र: | तिक्त: | कषाय: |

**जलस्त्रावे अष्टविधदेशप्रमाणम्-**

| **क्र.** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|
| १) | पाञ्चालमानम् | पाञ्चालमानम् |
| २) | वैदेहमानम् | वैदेहमानम् |
| ३) | कौरवमानम् | कौरवमानम् |
| ४) | विजयमानम् | कन्यकामानम्(कान्यकुब्जमानम्) |
| ५) | मागधमानम् | मागधमानम् |
| ६) | शूरसेनमानम् | शूरसेनमानम् |
| ७) | गान्धरमानम् | वङ्गमानम् |
| ८) | आवन्तिकम् | आवन्तिकम् |

क.सं.- वास्तुपूजनप्रकरणे वास्तुपूजा न करणेऽशुभफलं चोक्तम्- रोगान्नानाविधान्क्लेशानश्नुते सर्वसङ्कटान्। ना.सं.- एतादृशं वास्तुपूजनाध्याये वास्तुपूजा न करणे किमपि फलवर्णनं न प्राप्यते।

**द्वारस्यायामष्टभागानुसारत: फलम्-**

**(१)पूर्वद्वारम्-**

| **क्र.** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|
| १) | क्रोध: | हानि: |
| २) | भीति: | नैस्वं |

| | | |
|---|---|---|
| ३) | धनप्राप्तिः | धनप्राप्तिः |
| ४) | नृपपूजा | नृपपूजा |
| ५) | महद्धनम् | महद्भयम् |
| ६) | चौर्यम् | चौरभयम् |
| ७) | विपुत्रता | अतिक्रोधः |
| ८) | हानिः | भीतिः |

**(२)दक्षिणद्वारम्–**

| **क्र.** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|
| १) | बन्धनं | निधनं |
| २) | निधनं | बन्धनं |
| ३) | प्रीतिः | भीतिः |
| ४) | अर्थप्राप्तिः | अर्थप्राप्तिः |
| ५) | धनागमः | धनवर्धनम् |
| ६) | अरुजत्वं | अनातङ्कः |
| ७) | व्याधिभयं | व्याधिभयम् |
| ८) | निर्धनता | निःस्वत्वम् |

**(३)पश्चिमद्वारम्–**

| **क्र.** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|
| १) | पुत्रहानिः | पुत्रहानिः |
| २) | शत्रुवृद्धिः | शत्रुवृद्धिः |
| ३) | लक्ष्मीप्राप्तिः | लक्ष्मीप्राप्तिः |

| | | |
|---|---|---|
| ४) | धनागमः | धनागमः |
| ५) | धान्यप्राप्तिः | सौभाग्यता |
| ६) | सौभाग्यता | अतिदौर्भाग्यता |
| ७) | दुःखं | दुःखं |
| ८) | शोकः | शोकः |

**(४)उत्तरद्वारम्–**

| **क्र.** | **कश्यपसंहिता** | **नारदसंहिता** |
|---|---|---|
| १) | हानिः | कलत्रहानिः |
| २) | स्त्रीदूषणं | निःस्वत्वम् |
| ३) | निःस्वता | हानिः |
| ४) | बहुधान्यं | धान्यम् |
| ५) | धनागमः | धनागमः |
| ६) | सम्पद्वृद्धिः | सम्पद्वृद्धिः |
| ७) | महाभयम् | महाभीतिः |
| ८) | व्याधिः | रोगः |

क.सं.–वास्तुपूजायां गन्धदूर्वाक्षतादिभिः –इति कथनं प्राप्यते। ना.सं.–वास्तुपूजायां दूर्वादध्यक्षतादिभिः –इति कथनं प्राप्यते। क.सं.–वास्तुपूजायां वास्तुनैवेद्यविषये –अपूपैर्भूरिनैवेद्यं समर्पयेत् –इति कथनं प्राप्यते। ना.सं.–वास्तुपूजायां नैवेद्यविषये केवलं भूरिनैवेद्यं समर्पयेत् –इति कथनं प्राप्यते।

**कश्यपसंहिता अध्यायाः–३७ तः ३९**

**वसिष्ठसंहिता अध्यायः–३८–३९**

क.सं.–गृहप्रवेशविषये दिवाप्रवेशः सम्पत्तिप्रदः, निशिप्रवेशो मङ्गलप्रदः। व.सं.–दिवाप्रवेशः शुभदः सुपुत्रपौत्राभिवृद्धिदः, रात्रौ शुभदः। क.सं.–माघादिमासानां गृहप्रवेशफलं विस्तरेण न प्राप्यते। व.सं.–माघादिमासानां गृहप्रवेशफलं सविस्तरेण भिन्नं भिन्नं प्राप्यते। क.सं.–गृहप्रवेशे जन्मलग्नात् द्वादशाष्ट(१२–८)भावगतश्चन्द्रस्त्याज्यः, जन्मभे जन्मलग्ने, लग्नादुपचयभाव(३–६–१०–११)गते प्रवेशः शुभप्रदः। अन्यथा दुःखनिःस्वता प्राप्नुयात्। व.सं.–कर्ता विलग्नाद् जन्मराशेर्द्वादशभावस्थितित्वे सविस्तारेण वर्णनं कृतमस्ति। क.सं.–स्वमतोक्तं स्वरचितमेवं वास्तुशास्त्रज्ञानं प्रवक्ष्यति। व.सं.– ब्रह्मणा पूर्वोक्तं वास्तुज्ञानं प्रवक्ष्यति।

**वास्तुभूमेर्गन्धः–**

| **क्र.** | **विप्रादिवर्णः** | **कश्यपसंहिता** | **वसिष्ठसंहिता** |
|---|---|---|---|
| १) | विप्रः | मधु | मधुरः |
| २) | क्षत्रियः | पुष्पम् | पुष्पम् |
| ३) | वैश्यः | सुरा | आम्लम् |
| ४) | शूद्रः | मांसम् | मांसम् |

**विप्रादीनां वर्णक्रमेण भूमिरसः(स्वादः)–**

| **क्र.** | **विप्रादिवर्णः** | **कश्यपसंहिता** | **वसिष्ठसंहिता** |
|---|---|---|---|
| १) | विप्रः | मधुरः | मधुरः |
| २) | क्षत्रियः | कटुः | कटुः |
| ३) | वैश्यः | कषायः | आम्लः |
| ४) | शूद्रः | तिक्तः | तिक्तः |

**पूर्वादिदिशायां द्वारस्यायामष्टभागानुसारतः फलम्–**

**(१)पूर्वद्वारम्-**

| **क्र.** | **कश्यपसंहिता** | **वसिष्ठसंहिता** |
|---|---|---|
| १) | क्रोधः | दुःखम् |
| २) | भीतिः | शोकः |
| ३) | धनप्राप्तिः | धनप्राप्तिः |
| ४) | नृपपूजा | नृपपूजा |
| ५) | महद्धनम् | महद्धनम् |
| ६) | चौर्यम् | स्त्रीजन्म |
| ७) | विपुत्रता | पुत्रता |
| ८) | हानिः | हानिः |

**(२)दक्षिणद्वारम्-**

| **क्र.** | **कश्यपसंहिता** | **वसिष्ठसंहिता** |
|---|---|---|
| १) | बन्धनं | निधनं |
| २) | निधनं | बन्धनं |
| ३) | प्रीतिः | भीतिः |
| ४) | अर्थप्राप्तिः | पुत्रवाप्तिः |
| ५) | धनागमः | धनागमः |
| ६) | अरुजत्वं | यशोलाभः |
| ७) | व्याधिभयं | चौरभयम् |
| ८) | निर्धनता | रोगभयम् |

**(३)पश्चिमद्वारम्-**

| क्र. | कश्यपसंहिता | वसिष्ठसंहिता |
|---|---|---|
| १) | पुत्रहानिः | शत्रुवृद्धिः |
| २) | शत्रुवृद्धिः | पुत्रहानिः |
| ३) | लक्ष्मीप्राप्तिः | लक्ष्मीप्राप्तिः |
| ४) | धनागमः | धनागमः |
| ५) | धान्यप्राप्तिः | सौभाग्यता |
| ६) | सौभाग्यता | धनलाभः |
| ७) | दुःखं | दुःखम् |
| ८) | शोकः | शोकः |

**(४)उत्तरद्वारम्-**

| क्र. | कश्यपसंहिता | वसिष्ठसंहिता |
|---|---|---|
| १) | हानिः | निःस्वं |
| २) | स्त्रीदूषणं | स्त्रीदूषणं |
| ३) | निःस्वता | हानिः |
| ४) | बहुधान्यं | सम्पत्प्राप्तिः |
| ५) | धनागमः | सुखागमः |
| ६) | सम्पद्वृद्धिः | दुःखागमः |
| ७) | महाभयं | शत्रुता |
| ८) | व्याधिः | बाधा |

**क.सं.-गृहनिर्माणे मासाः-** माघ-फाल्गुन-वैशाख-ज्येष्ठ-श्रावण-कार्त्तिक-मार्गशीर्षाः। **व.सं.-गृहनिर्माणे मासाः-** तपो(माघ)-तपस्य (फाल्गुन)-माधव

(वैशाख)–इष (आश्विन) – नभस् (श्रावण) – ऊर्जाः (कार्त्तिकाः)। **क.सं.- वास्तुकुक्षिभागे ब्राह्मणादीनामङ्गुलात्मकं शङ्कुमानम्**- १)विप्राणां–२२, २)क्षत्रियाणां–२३, ३)वैश्याणां–१६, ४)शूद्राणां–१२ व.सं.–सर्वेषां वर्णानां केवलमेकप्रकारमेवं वितस्तिमात्रः शङ्कुः कथितः।

**क.सं.-षोडशगृहनामानि**-

(१)ध्रुवं, (२)धन्यं, (३)जयं, (४)नन्दं, (५)खरं, (६)कान्तं, (७)मनोरमं, (८)सुमुखं, (९)दुर्मुखं (१०)क्रूरं, (११)शत्रुं, (१२) स्वर्णप्रदं, (१३)क्षयं, (१४)आक्रन्दं, (१५)विपुलाख्यं, (१६)विजयम्।

**व.सं.-षोडशगृहनामानि**-

(१) ध्रुवं, (२)धान्यं, (३)जयं, (४)नन्दं, (५)खरं, (६)कान्तिं, (७)मनोरमं, (८)सुवक्त्रं, (९)दुर्मुखं (१०)क्रूरं, (११)विपक्षं, (१२) धनदं, (१३)क्षयं, (१४)आक्रन्दं, (१५)विपुलं, (१६)विजयम्।

**जलस्त्रावे अष्टविधदेशप्रमाणम्**-

| **क्र.** | **कश्यपसंहिता** | **वसिष्ठसंहिता** |
|---|---|---|
| १) | पाञ्चालमानम् | पाञ्चालमानम् |
| २) | वैदेहमानम् | वैदेहमानम् |
| ३) | कौरवमानम् | कौरवमानम् |
| ४) | विजयमानम् | कन्यकामानम्(कान्यकुब्जमानम्) |
| ५) | मागधमानम् | मागधमानम् |
| ६) | शूरसेनमानम् | शूरसेनमानम् |
| ७) | गान्धरमानम् | गान्धरमानम् |

८)		आवन्तिकम्		आवन्तिकम्

क.सं.– वास्तुपूजनप्रकरणेऽन्तिमश्कोलद्वयं प्रायेण समानरूपेण प्राप्यते।

**यात्रा**

**कश्यपसंहिता अध्यायः–३५**

**बृहत्संहिता अध्यायाः–८६ तः ९० तथा ९६**

क.सं.– स्वमतोक्तं नृपादीनां यात्राविषयकं रोचकं वर्णनं प्राप्यते। बृ.सं.– विविधर्षिमतानि दृष्ट्वा यात्रा–शकुनानि लिखितानि सन्ति। क.सं.–यात्रामुहूर्तस्य सम्पूर्णं विवेचनं प्राप्यते। बृ.सं.–यात्रामुहूर्तस्य शकुनविषयकं विवरणं प्राप्यते। क.सं.–द्वादशी–षष्ठी–रिक्ता(४–९–१४)–पूर्णिमा–मासादि(शुक्लप्रतिपद्)तिथिषु यात्रा मृत्युकरा निर्धनत्वकारिणी च। बृ.सं.–एतादृशं यात्रावर्णनं न प्राप्यते। क.सं.–नक्षत्रवशतो यात्राफलम्– हस्त–मृगशीर्ष–पुनर्वसु–अश्विनी–श्रवण–अनुराधा–रेवती–पुष्यनक्षत्रेषु यात्राभीष्टफलदा भवेत्। बृ.सं.–नक्षत्रवशतो यात्राफलविवेचनं न प्राप्यते।

क.सं.– मन्द(शनि)–इन्दु(सोम)दिनयोः(वारयोः) प्राच्यां गमनं वर्जयेत्। गुरोर्वारे दक्षिणदिशं त्यजेत्। शुक्र–अर्कवारे प्रतीचीं(पश्चिमां) दिशं न गच्छेत्। बुध–भौमवारयोरुत्तरदिशं वर्जयेत्। बृ.सं.–एतादृशं वारवशाद् यात्राफलं नोक्तम्।

क.सं.–ज्येष्ठा–पू.भा.–रोहिणी–उ.फा.–नक्षत्राणि पूर्वादिक्रमाद् दिशायां शूलरूपा भवन्ति। किन्तु अनुराधा–अश्विनी–पुष्य–हस्तनक्षत्राणि सर्वासु दिक्षु शुभदानि स्मृतानि। बृ.सं.–एतादृशं यात्राफलविवेचनं नोक्तम्। क.सं.– युद्धयात्रायां चन्द्रो यायी सूर्यो स्थायी वर्तते। एतद् वशाद् राजा जय–पराजयमाप्नोति। बृ.सं.–एतादृशं यायि–स्थायियात्राफलविवेचनं नोक्तम्। क.सं.–विविधशकुन–ग्रह–योग–नक्षत्र–राशि–लग्न–

वार–तिथ्यादिकं समाश्रित्य यात्रावर्णनं कृतम्। बृ.सं.–केवलं पशुपक्ष्यादिनिमित्तशकुनादिभ्यो यात्राविवेचनं कृतम्।

**कश्यपसंहिता अध्यायः–३५**

**नारदसंहिता अध्यायः–३३**

क.सं.–हस्त–मृगशीर्ष–पुनर्वसु–अश्विनी–श्रवण–अनुराधा–रेवती–पुष्यनक्षत्रेषु यात्राभीष्टफलदा भवेत्। ना.सं.–कृत्तिका–धनिष्ठा–हस्त–मृगशीर्ष–अश्विनी–श्रवण–अनुराधा–रेवतीपुष्यनक्षत्रेषु यात्राभीष्टफलदा भवेत्। ना.सं.–विप्रक्षोभे राजक्षोभे प्रतिशुक्रदोषो न विद्यते। क.सं.– प्रतिशुक्रदोषविषय एतादृशं वर्णनं न प्राप्यते। क.सं.–ज्येष्ठा–पू.भा.–रोहिणी–उ.फा.–नक्षत्राणि पूर्वादिक्रमाद् दिशायां शूलरूपकाणि भवन्ति। किन्तु अनुराधा–अश्विनी–पुष्य–हस्तनक्षत्राणि सर्वासु दिक्षु शुभदानि स्मृतानि। ना.सं.–एतादृशं वर्णनं न प्राप्यते। क.सं.–यात्रानिषेधकालः– उपनयन–उत्सव–विवाह–प्रतिष्ठा–सूतक(मरण–जननसूतकं)समाप्तिपर्यन्तं यात्रा जिजीविषुर्न कुर्यात्। ना.सं.–ग्रहण–उपनयन–उत्सव–विवाह–शवसूतकेषु यात्रा बुद्धिमान्नरो न कारयेत्।

क.सं.– यात्रायां प्रतिकूलतावशाद् यदा नृपतिः स्वयं प्रयाणेऽशक्तस्तदा छत्र–ध्वज–अश्व–वस्त्र–अक्षतादिभिः स्वस्थानात् निर्गममुहूर्ते शतद्वयं वा शतं वा दश दण्डानां प्रस्थानं यात्रा–प्रस्थानं कथ्यते। ना.सं.– यात्रायां प्रतिकूलतावशाद् यदा नृपतिः स्वयं प्रयाणेऽशक्तस्तदा छत्र–ध्वज–अश्व–वस्त्र–अक्षतादिभिः स्वस्थानात् निर्गममुहूर्ते शतद्वयं वा शतं वा दश धनुषाणां वा ४० धनुषाणां वा १२ धनुषणां वा स्वगृहादन्यगृहं प्रस्थानमेवं यात्रा–प्रस्थानं कथ्यते।

क.सं.– यात्रायां विरुद्धशकुनपरिहारार्थं प्राणायामप्रयोगः प्रदत्तः। यदा यात्रासमये यायी विरुद्धशकुनं पश्यति, तदावश्यकयात्रायां प्राणायामत्रयं कुर्यात्। तदापि

पुनर्विरुद्धशकुने षट् प्राणायामाः कर्तव्याः। तथाप्यशुभमेव शकुनं दृश्यते तदा पुनः प्राणायामाः, शान्त्या यायाद् दिनान्तरे वा पुनरागम्यान्यदिने यात्रा कर्तव्या। ना.सं.- एतादृशं यात्रायां विरुद्धशकुनपरिहारार्थं प्राणायामप्रयोगवर्णनं न प्राप्यते।

**कश्यपसंहिता अध्यायाः-३५**

**वसिष्ठसंहिता अध्यायः-३७**

क.सं. - अष्टमी - द्वादशी - षष्ठी - रिक्ता (४-९-१४)- पूर्णिमा- मासादि (शुक्लप्रतिपद्)- तिथिषु यात्रा मृत्युकरा निर्धनत्वं च करोति। व.सं.- षष्ठी-रिक्ता (४-९-१४) तिथिषु यात्रा कलहप्रदा वा मृत्युप्रदा भवेत्। अष्टमी शोकदायकी भवेत्। क.सं.- हस्त - मृगशीर्ष - पुनर्वसु - अश्विनी - श्रवण - अनुराधा -रेवती- पुष्यनक्षत्रेषु यात्राभीष्टफलदा भवेत्। व.सं.- धनिष्ठा-हस्त-मृगशीर्ष-पुनर्वसु-अश्विनी- श्रवण-अनुराधा-रेवती-पुष्यनक्षत्रेषु यात्राभीष्टफलदा भवेत्। अत्र धनिष्ठानक्षत्रं विशेषतो दृश्यते।

क.सं.- अष्टममुहूर्ते(मध्याह्ने) योऽभिजित्स्यात्, तत्र यातणां याम्यदिग्गमनं वर्जयित्वान्यत्राभीष्टफलसिद्धिर्भवेत्। व.सं.- अष्टममुहूर्ते(मध्याह्ने) योऽभिजित्स्यात्, तत्र याम्यदिग्गमनसहितं यातणां गमनेऽभीष्टफलसिद्धिर्भवेत्। क.सं.- सन्मुखे शुक्रे यात्रानिषेध एव कृतः। व.सं.-सन्मुखे शुक्र आवश्यकयात्रायां सन्मुखशुक्रशान्तिः कर्तव्या। क.सं.- यात्रायां प्रतिकूलतावशान्नृपतेः स्वस्थानान्निर्गममुहूर्ते शतद्वयं वा शतं वा दश दण्डानां प्रस्थानं यात्रा-प्रस्थानं कथ्यते। व.सं.- यात्रायां प्रतिकूलतावशाद् नृपतेः स्वस्थानान्निर्गममुहूर्ते पञ्चशतं धनुषाणां वा धनुषशतद्वयं वा दश धनुषाणां स्वगृहादन्यन्यगृहं प्रस्थानमेवं यात्रा-प्रस्थानं कथ्यते। क.सं.-आवश्यकयोगसहितं यात्राकुण्डलीविषयकं ग्रह-राशि-नक्षत्र-वार-तिथ्यादिरूपं विवेचनं प्राप्यते। व.सं.-

आवश्यकयोगसहितमतीवविस्तारेण यात्राकुण्डलीविषयकं ग्रह–राशि–नक्षत्र–वार–तिथ्यादीनां विवेचनं प्राप्यते। कश्यप–वसिष्ठोक्ता दशदिक्पालानां स्वरूपवर्णनमन्त्राः प्रायेण पूर्णतया वा समाना दृश्यन्ते।

**उत्पातः–**

**कश्यपसंहिता अध्यायाः–४५ तः४८**

**बृहत्संहिता अध्यायाः–४६ एवं ३१तः३९**

क.सं.–केवलं स्वमतेन विविधोत्पातानां विवरणं कृतम्। बृ.सं.– गर्गोक्तं मतमाश्रित्य तत्र विविधोत्पातानां संक्षेपतो वर्णनं कृतम्। क.सं.–काकसंयोगोत्पातस्तस्य शान्तिविधिश्च सविस्तारेण विवर्णितः। बृ.सं.–काकसंयोगोत्पातस्तस्य शान्तिविधेश्च विवरणं न प्राप्यते।

क.सं.–कपोत–मधुवल्मीकदोषस्तस्य शान्तिविधिश्च सविस्तरेण विवर्णितः। बृ.सं.– कपोत–मधुवल्मीकदोषस्तस्य शान्तिविधेश्च विवरणं न प्राप्यते। क.सं.–शिथिलीजननदोषस्तस्य शान्तिविधिश्च सविस्तरेण विवर्णितः। बृ.सं.–शिथिलीजननदोषस्तस्य शान्तिविधेश्च विवरणं न प्राप्यते। क.सं.–शरीरोपदोषाः–(दन्तच्छेदः–काकपातः–सरटीपतनादिदोषः) तेषां विवरणं शान्तिविधिसहितं च प्राप्यते। बृ.सं.–शरीरोपदोषाः–(दन्तच्छेदः–काकपातः–सरटीपतनादिदोषः) तेषां शान्तिविधेश्च विवरणं न प्राप्यते। क.सं.–शिथिलीजननदोषस्तस्य शान्तिविधिश्च सविस्तरेण विवर्णितः। बृ.सं.–शिथिलीजननदोषस्तस्य शान्तिविधेश्च विवरणं न प्राप्यते। देवतामूर्तिविकृतिः, वृक्षविकृतिः, सस्यविकृतिः, वृष्टिविकृतिः, छायाविकृतिः, जलविकृतिः, प्रसवविकृतिः, वायव्यवैकृतम्, पशु–पक्षिवैकृतम्, इन्द्रध्वजादिवैकृतम् –

इत्यादीनामुत्पातानां लक्षणं तत्फलं च गर्गोक्तमतामाश्रित्यात्यन्तसंक्षेपतः शान्तिविधिः प्रदर्शितः। कश्यसंहितोक्तमेवं बृहत्संहितोक्तमुल्कालक्षणं प्रायेण समानं वर्तते।

क.सं.–मयूरपत्रसङ्काशो परिवेषो वातवृष्टिकारको भवेत्। बृ.सं.–एतादृशं वर्णनं न प्राप्यते, किन्तु मयूरकण्ठसङ्काशो परिवेषोऽतिवृष्टकारको भवति। क.सं.– अहर्निशं प्रतिदिनमरुणौ चन्द्रार्कौ यदा भवेतां तदा परिवेषो नृपवधं कुरुते। क.सं.–परिवेषो यदा द्विमण्डलात्मको दृश्यते तदा चमूनाथं नाशयति। त्रिमण्डलात्मको दृश्यते तदा नृपनाशो भवति। क.सं.–प्रतिपदादिषु तिथिषूत्पन्नपरिवेषस्य फलं विवर्णितम्। बृ.सं.–प्रतिपदादिषु तिथिषूत्पन्नपरिवेषस्य फलविवरणं न प्राप्यते।

क.सं.–नृक्षयं व्योम्निजं चापं भूमिजं सस्यहानिदम्–इत्युक्तम्। बृ.सं.–भूमिजं शुभदम् –इत्युक्तम्। व्योम्निजचापस्य वर्णनं न प्राप्यते। क.सं.–गन्धर्वनगरविषये– रात्रौ यदा गन्धर्वनगरं दृश्यते तदा धराधीशविनाशकं भवेत्। बृ.सं.– रात्रौ गन्धर्वनगरस्य किमपि वर्णनं न प्राप्यते। क.सं.– सूर्यस्योपरि दृश्यमाणः प्रतिसूर्यो नृपनाशको भवेत्। सूर्यस्याधोभागे दृश्यमाणः प्रतिसूर्यो जनानां नाशको भवेत्। यदा तीक्ष्णांशोर्वा शीतद्युतः प्रतिसूर्यो दृश्यते, तदा सम्पूर्णस्य जगतो विनाशो भवेत्। बृ.सं.– एतादृशं प्रतिसूर्यस्य किमपि वर्णनं न प्राप्यते।

क.सं.–निर्घातविषये– यदा निर्घातो रात्रौ तृतीयप्रहरे भवति तदा लिपिलेखकान् पीडां करोति। चतुर्थयाम इतरान् जनान् हन्ति। बृ.सं.– निर्घातविषये –यदा निर्घातो रात्रौ तृतीयप्रहरे भवति तदा तुरग–हस्तिनोः पीडां करोति। चतुर्थयामे पथिकान् हन्ति। क.सं.–यदा निर्घातस्य भीमगम्भीरशब्दः स्यात् तदा तदीश्वरस्य नाशं करोति। बृ.सं.– यदा भैरवजर्जरशब्द आयाति तदा तत्र दिग्हननं करोति। क.सं.–दिग्दाहविषये–यदा पञ्च

दिग्दाहदिवसास्तदा ते राष्ट्रविद्रावणप्रदा भवन्ति। बृ.सं.– पञ्चदिग्दाहविषयं किमपि वर्णनं न प्राप्यते।

क.सं.–रजोलक्षणविषये–सितेनाच्छादितग्राम–पर्वतादीनां विवरणं प्राप्यते। बृ.सं.– रजोलक्षणविषये–सितेनाच्छादितग्राम–पर्वतादीनां विवरणं न प्राप्यते। क.सं.– रजोलक्षणविषये–रात्रिचतुष्टयपर्यन्तं रजो भवति तदा ईतिदुर्भिक्षमतुलं भवेत्। बृ.सं.– रजोलक्षणविषये– रात्रिचतुष्टयपर्यन्तं रजो भवति तदान्न–रसा विनाशं यान्ति। क.सं.– भूकम्पविषये भूमेर्कम्पनस्य कारणविषये केवलं स्वमतं लिखितम्। बृ.सं.– भूकम्पविषये भूमेः कम्पनस्य कारणविषये विविधर्षीणामाचार्याणां मत–मतान्तरसङ्ग्रहः कृतः। क.सं.–प्रायेण निखिलोत्पाताः क्षितीशानामनिष्टदा भवन्ति। बृ.सं.–एतादृशमन्वेषणात्मकं वर्णनमध्यायेऽस्मिन्न विद्यते।

**कश्यपसंहिता अध्यायाः–४५ तः ४८**

**नारदसंहिता अध्यायाः–३७ तः ५१**

क.सं.–काकमैथुनशान्त्यां विशेषः– ब्राह्मणान् षोडश वाष्टौ वा चत्वारो वेदपारगान् स्वस्तिवाचनपूर्वकं वरयेत्। तेषां मध्ये विशिष्टविद्वद्वरमाचार्यत्वेन नियोजयेत्। ततो गाणपत्यं, सावित्रं(सूर्यं), पञ्चदुर्गाजपं, रुद्रसूक्तं, श्रीसूक्तं द्विजो जपेत्। कुण्डे स्वगृह्योक्तविधानेनाग्निं स्थापयेत्। मखान्ते(ग्रहमखान्ते–ग्रहहोमान्ते प्रधानहोमे)समिधाज्येनान्नैरष्टोत्तरसंख्यया(१०८) (१)यत इन्द्र० (२)स्वस्तिदा० (३)त्र्यम्बकं० मन्त्रैः क्रमतो जुहुयात्। तिलव्रीहिभिर्जपसंख्यानुसारतो व्याहृतिहोमं कृत्वा पूर्णाहुतिं जुहुयात्। –इति विवरणं प्राप्यते। ना.सं.– काकमैथुनशान्त्यामेतादृशं वर्णनं भिन्नं प्राप्यते। किन्तु, मखान्ते(ग्रहमखान्ते–ग्रहहोमान्ते प्रधानहोमे)समिधाज्यान्नैरष्टोत्तरसंख्यया (१०८) त्र्यम्बकं० मन्त्रैर्वा मृत्युञ्जयमन्त्रेण

जुहुयात्। तिलव्रीहिभिः व्याहृतिहोमं कृत्वालङ्कृतस्त्रुच्या पूर्णाहुतिं जुहुयात्। -इति विवरणं प्राप्यते। क.सं.-काकमैथुनशान्त्यां ततो ब्राह्मणान्भोजयित्वा शान्तिवाचनपूर्वकमेतच्छान्तिविधिं भक्त्या कुर्यात्। तेन दोषात् प्रमुच्यते। ना.सं.-काकमैथुनशान्त्यां ततो ब्राह्मणान्भोजयित्वा स्वस्तिवाचनपूर्वकमेतच्छान्तिविधिं भक्त्या कुर्यात्। तेन दोषात् प्रमुच्यते। क.सं.- शिथिलीजननस्य शुभाशुभफलविवेचनं शान्तिश्च विशदीकृतः।

**विविधस्थाने शिथिलीजननस्य फलम्-**

(१)मन्दिरस्य मध्ये-अशुभफलप्राप्तिः। नगरजनानां सप्ताहाभ्यन्तरे व्याधिपीडा भवेत्।

(२)मन्दिरस्य प्राच्यां- अष्टदिनाल्लाभः पश्चाद् व्याधिस्तु तत्परे।

(३) मन्दिरस्याग्नेय्यां- त्रिदिनाल्लाभः पश्चादर्धं तस्कराह्वयम्।

(४)मन्दिरस्य याम्ये-अष्टाहादिष्टसिद्धिस्ततः पत्नीविनाशनम्।

(५)मन्दिरस्य पश्चिमे-सप्ताहाद् धान्यलाभस्ततो नृपतिभयम्।

(६)मन्दिरस्य वायव्ये- प्रीतिरष्टाहात्परतः पशुनाशनम्।

(७)मन्दिरस्योत्तरे- त्रिरात्रतः शत्रुहानिः पश्चाद्धनक्षयः।

(८)मन्दिरस्येशाने-पञ्चाहात्प्रीतिः परतः पशुनाशनम्।

(९)मन्दिरस्य द्वारे- विनाशः स्त्रीहानिः पश्चात्तत्पशुनाशनम्।

(१०)शयनस्थाने- प्रीतिस्त्रिरात्रात्पत्नीविनाशनम्।

(११)पशुस्थाने -शिथिलीजनने पशुहानिः।

(१२)अम्बुभाण्डके-दासीनाशः।

(१३)सौवीरभाण्डे-स्त्रीनाशः।

(१४)अन्नभाण्डे- सुहृन्मृतिः।

(१५) तैलाज्यमध्वादीनां घटेषु- कुटुम्बहानिः।

ना.सं.-एतादृशं किमपि शिथिलीजननस्य शुभाशुभफलविवेचनं शान्तिवर्णनं च न कृतम्।

क.सं.- उल्कालक्षणविषये-इन्द्रचापनिभोल्का राज्यं, खेलनोल्का जलनाशदा भवति। यो नरो विद्युद्भावं(उल्काज्ञानं) वेत्ति स एव ज्योतिषो भुवि। ना.सं.- उल्कालक्षणविषये -इन्द्रचापनिभा -इत्यादिकं वर्णनं न प्राप्यते। क.सं.-परिवेषविषये-मयूरपत्रसदृशो पीताभः परिवेषो वातवृष्टिकृद्भवेत्। ना.सं.-परिवेषविषये-मयूरपत्रसदृशो पीताभः परिवेषो न वर्णितः। क.सं.-पञ्चदिग्दाहदिवसा राष्ट्रविद्रावणप्रदा भवन्ति। ना.सं.-एतादृशं किमपि दिग्दाहविषये विवेचनं न प्राप्यते।

संहिताभ्यां (क.सं.-ना.सं.) परिवेष-इन्द्रचाप-प्रतिसूर्य-निर्घात-रजोलक्षण-दिग्दाह-भूकम्पादिविषयकाध्यायेषु -श्लोकाः श्लोकसङ्ख्या शब्दार्थादीनां प्रयोगश्च प्रायेण समानरूपो दृश्यते।

**कश्यपसंहिता अध्यायाः-४५ तः ४८**

**वसिष्ठसंहिता अध्यायः-४५**

क.सं.-दिव्य-भौम-अन्तरिक्षात्मकानां त्रिविधोत्पातानां विवरणं तच्छान्ति-विधिश्च विवर्णितः। व.सं.- भौमोत्पाताः शान्तिविधिना शान्तिं यान्ति। अन्तरिक्षात्मका उत्पाताः शान्तिविधिना मन्दा भवन्ति। किन्तु, दिव्योत्पाता होमान्नगोभूमि-दानैस्तत्कोटिहोमतः शमं यान्ति।

क.सं.-काकमैथुनशान्तिः- ब्राह्मणान् षोडश वाष्टौ वा चत्वारो वेदपारगान् स्वस्तिवाचनपूर्वकं वरयेत्। तेषां मध्ये विशिष्टविद्वद्वरमाचार्यत्वे नियोजयेत्। ततो गाणपत्यं, सावित्रं(सूर्यं), पञ्चदुर्गाजपं, रुद्रसूक्तं, श्रीसूक्तं च द्विजोत्तमा जपेयुः। कुण्डे

स्वगृह्योक्तविधानेनाग्निं स्थापयेत्। मखान्ते(ग्रहमखान्ते-ग्रहहोमान्ते प्रधानहोमे) समिधाज्येनान्नैरष्टोत्तरसंख्यया(१०८) (१)यत इन्द्र० (२)स्वस्तिदा० (३)त्र्यम्बकं० मन्त्रैः क्रमतो जुहुयात्। तिलव्रीहिभिर्जपसंख्यानुसारतो व्याहृतिहोमं कृत्वा पूर्णाहुतिं जुहुयात्। व.सं.- काकमैथुनशान्तिः-अपमृत्युमपक्षुधसमपि० मन्त्रद्वयेनोपचारान्कुर्यात्। मखान्ते(ग्रहमखान्ते-ग्रहहोमान्ते प्रधानहोमे)समिधाज्येनान्नैः ८०० वा २८ (१)मृत्यु० (२)वारुण० (३)ग्रहमन्त्रैः० क्रमतो जुहुयात्।

क.सं.-विविधोत्पातानि -उल्का - परिवेष - इन्द्रचाप - गन्धर्वनगर -प्रतिसूर्य -निर्घात-दिग्दाह-रजोलक्षण-भूकम्पलक्षणादीनामावश्यकं लक्षणं विवरणसहितं तत्तच्छान्तिविधिः पूर्णतया विशदीकृतः। व.सं.-विविधोत्पातानि-उल्का-परिवेष-इन्द्रचाप-गन्धर्वनगर-प्रतिसूर्य-निर्घात-दिग्दाह-रजोलक्षण-भूकम्पलक्षणादीनामत्य-न्तस्वल्पं विवरणं प्राप्यते, किन्तु तदुत्पातानां लक्षण-फलविवेचनमावश्यकमपि न प्राप्यते। उक्तविविधोत्पातशान्तिविधिरतीव विस्तारेण विशदीकृतः। उत्पातानामध्ययन इयं संहिता न पूर्णरूपो ग्रन्थः।

**प्रतिष्ठा-**

**कश्यपसंहिता अध्यायः-४१**

**बृहत्संहिता अध्यायः-४५**

क.सं.-सुरप्रतिष्ठाकालः- अस्त-बाल-वृद्धत्वरहिते गुरौ, माघ-फाल्गुन-वैशाख-ज्येष्ठमासे, शुक्लपक्षतः कृष्णपक्षार्ध-कृष्णाष्टमीतिथिपर्यन्तं, देवानां स्थापनं(प्राणप्रतिष्ठा) शुभा। बृ.सं.-एतादृशं गुर्वस्तमौढ्यविचारः, प्रतिष्ठामासविषयकं, प्रतिष्ठातिथिविषयकं, विवरणं न प्राप्यते। क.सं.- या तिथिर्यस्य देवस्य (यथा-चतुर्थीस्वामी गणेशः -इत्यादिकं ज्ञायेत्), सा तिथिस्तस्य(तिथिस्वामि)देवतानां

प्रतिष्ठापने शुभदा स्मृता। वर्ज्यम्–शुक्लप्रतिपदां, रिक्ताम् (४–९–१४), अमावास्यां, दिनक्षयं स्थापने परिवर्जयेत्। बृ.सं.–एतादृशं प्रतिष्ठापनतिथिविषयकं विवरणं न प्राप्यते।

**क.सं.- सुरप्रतिष्ठाकाले नक्षत्राणि-** मूल–ज्येष्ठा–आश्लेषा–पू.षा.–पू.भा.–पू.फा.–कृत्तिका–विशाखा–मघा–भरणी -इत्येतानि त्यक्त्वान्यनक्षत्रेषु सुराणां स्थापनं शुभम्। बृ.सं.– सुरप्रतिष्ठाकाले नक्षत्राणि– उत्तरात्रय–रोहिणी–मृगशीर्ष–रेवती–चित्रा–अनुराधा–श्रवण–पुष्य–स्वातीनक्षत्रेषु सुराणां स्थापनं शुभम्। क.सं.– कर्ता सूर्य–चन्द्रताराबलान्विते, पञ्चाङ्गशुद्धिसंयुक्ते, दिनस्य पूर्वाह्णे, स्वजन्मराशेरष्ट–मोदयरहिते, पञ्चेष्टिकयुतलग्ने, अष्टमलग्नशुद्धियुक्ते, लग्नं शुभग्रहेक्षितयुक्ते, लग्नं न पापैरीक्षितयुते देवतास्थापनं शुभं भवेत्। बृ.सं.–एतादृशं वर्णनं न प्राप्यते, किन्तु चन्द्र–गुरुषड्वर्गे स्थिरलग्ने स्थिरनवमांशे देवतास्थापनं शुभं भवेत्।

क.सं.– प्रतिष्ठासमयकुण्डल्यां द्वादशभाव–ग्रहस्थित्यनुसारतः सविस्तरं शुभाशुभं सूक्ष्मफलकथनं च प्रदत्तम्। बृ.सं.–एतादृशं वर्णनं न प्राप्यते। क.सं.–दक्षिणाहीनं देवताप्रतिष्ठाकर्तारं हन्ति, मन्त्रहीनं त्वर्त्विजं हन्ति, लक्षणहीनं तु श्रियं हन्ति। अतो विवेकहीनानां प्रतिष्ठासदृशो कोऽपि रिपुर्नास्ति। बृ.सं.–एतादृशं वर्णनं न प्राप्यते। बृ.सं.–विविधमूर्तीनां सलक्षणात्मकं विवरणं अध्यायक्र.–५८ प्रतिमालक्षणाध्याये प्राप्यते। प्रतिमाविकारास्तेभ्य उत्पन्नविविधशुभाशुभफलानि–देवताप्रतिष्ठापनविधिः संक्षेपतो विवर्णितः। क.सं.–एतादृशं वर्णनं न प्राप्यते।

**कश्यपसंहिता अध्यायः–४१**

**नारदसंहिता अध्यायः–३०**

क.सं.–सुरप्रतिष्ठाकाले नक्षत्राणि– मूल–ज्येष्ठा–आश्लेषा–पू.षा.–पू.भा.–पू.फा.–कृत्तिका–विशाखा–मघा–भरणी –इत्येतानि नक्षत्राणि त्यक्त्वान्यनक्षत्रेषु सुराणां स्थापनं शुभम्। ना.सं.–सुरप्रतिष्ठाकाले नक्षत्राणि– अश्विनी–उत्तरात्रय–पुनर्वसु–रेवती–हस्त–पुष्य–रोहिणी–शतभिषा–श्रवण–अनुराधा–धनिष्ठानक्षत्रेषु सुराणां स्थापनं शुभम्।

**कश्यपसंहिता अध्यायः–४१**

**वसिष्ठसंहिता अध्यायः–४०**

क.सं.–सुरप्रतिष्ठाकाले नक्षत्राणि– मूल–ज्येष्ठा–आश्लेषा–पू.षा.–पू.भा.–पू.फा.–कृत्तिका–विशाखा–मघा–भरणी –इत्येतानि नक्षत्राणि त्यक्त्वान्यनक्षत्रेषु सुराणां स्थापनं शुभम्। व.सं.–सुरप्रतिष्ठाकाले नक्षत्राणि–हस्त–चित्रा–स्वाती–अनुराधा–ज्येष्ठा–मूल–श्रवण–धनिष्ठा–शतभिषा–अश्विनी–रेवती–पुनर्वसु–पुष्य–त्रिरुत्तरा–रोहिणी–मृगशीर्षनक्षत्रेषु सुराणां स्थापनं विवर्णितम्।

क.सं.–दक्षिणाहीनं देवताप्रतिष्ठाकर्तारं हन्ति, मन्त्रहीनं त्वर्त्विजं हन्ति, लक्षणहीनं तु श्रियं हन्ति। अतो विवेकहीनानां प्रतिष्ठासदृशः कोऽपि रिपुर्नास्ति। व.सं.– दक्षिणाहीनं देवताप्रतिष्ठाकर्तारं हन्ति, मन्त्रहीनं त्वर्त्विजं हन्ति, लक्षणहीनं तु कर्तृभार्यानाशं करोति।

**वस्त्रलक्षणम्–**

**कश्यपसंहिता अध्यायः–४२**

**बृहत्संहिता अध्यायः–४०**

**क.सं.–अश्विन्यादिनक्षत्रानुसारेण प्रतिनक्षत्रस्य नूतनवस्त्रधारणे फलम्–**

(१)अश्विनी–वस्त्रलाभः। (२)भरणी–अर्थहानिः। (३)कृत्तिका–वह्निदाहः।

(४)रोहिणी– धनागमः। (५)मृगशीर्षम्–आखुभीतिः। (६)आर्द्रा–मृत्युः।

(७)पुनर्वसुः–लक्ष्मीः। (८)पुष्यः– अर्थलाभः। (९)आश्लेषा– महागदः।

(१०)मघा–मृत्युः। (११)पूर्वाफाल्गुनी– नृपभयम्।

(१२)उत्तराफाल्गुनी–सम्पल्लाभः। (१३)हस्तः– कर्मसिद्धिः।

(१४)चित्रा– अरिक्षयः। (१५)स्वाती– सुभोजनलाभः। (१६)विशाखा– राजपूजा।

(१७)अनुराधा– मित्रप्राप्तिः। (१८)ज्येष्ठा–युवतीयुतिः।

(१९)मूलम्–जलप्लुतिः (जलभयम्)। (२०)पूर्वाषाढा–रोगभीतिः।

(२१)उत्तराषाढा– मिष्टान्नलाभः। (२२) श्रवणम्–नयनामयः (नयनरोगः)

(२३)धनिष्ठा–धान्यलाभः। (२४)शतभिषा (शततारका)– विषभयम्।

(२५)पूर्वाभाद्रपदा–सर्वसम्पत्प्राप्तिः। (२६)उत्तराभाद्रपदा–धनलाभः।

(२७)रेवती– जलागमः।

**बृ.सं.-अश्विन्यादिनक्षत्रानुसारेण प्रतिधिष्ण्यस्य नूतनवस्त्रधारणे फलम्-**

(१)अश्विनी–प्रभूतवस्त्रलाभः। (२)भरणी–वस्त्रहानिः। (३)कृत्तिका–वह्निदाहः।

(४)रोहिणी– धनागमः। (५)मृगशीर्षम्–आखुभीतिः। (६)आर्द्रा–मृत्युः।

(७)पुनर्वसुः–शुभस्य प्राप्तिः। (८)पुष्यः– धनलाभः। (९)आश्लेषा– वस्त्रनाशः।

(१०)मघा–मृत्युः। (११)पूर्वाफाल्गुनी–नृपभयम्।

(१२)उत्तराफाल्गुनी–धनलाभः। (१३)हस्तः– कर्मसिद्धिः।

(१४)चित्रा– शुभस्य प्राप्तिः। (१५)स्वाती– भोजनलाभः।

(१६)विशाखा– जनप्रियता। (१७)अनुराधा– मित्रसमागमः।

(१८)ज्येष्ठा–वस्त्रक्षयः। (१९)मूलम्– जलप्लुतिः(जलभयम्)।

(२०)पूर्वाषाढा–रोगः। (२१)उत्तराषाढा– मिष्टान्नलाभः।

(२२)श्रवणम्-नयनामयः(नयनरोगः) (२३)धनिष्ठा-अन्नलाभः।

(२४)शतभिषा(शततारका)- विषस्याधिकं भयम्। (२५)पूर्वाभाद्रपदा-जलभयम्।

(२६)उत्तराभाद्रपदा-पुत्रलाभः। (२७)रेवती- रत्नलाभः।

**कश्यपसंहिता अध्यायः-४२**

**नारदसंहिता अध्यायः- न प्राप्यते।**

**कश्यपसंहिता अध्यायः-४२**

**वसिष्ठसंहिता अध्यायः- ४४**

**क.सं.-अश्विन्यादिनक्षत्रानुसारेण प्रतिनक्षत्रस्य नूतनवस्त्रधारणे फलम्-**

(१)अश्विनी-वस्त्रलाभः। (२)भरणी-अर्थहानिः। (३)कृत्तिका-वह्निदाहः।

(४)रोहिणी- धनागमः। (५)मृगशीर्षम्-आखुभीतिः। (६)आर्द्रा-मृत्युः।

(७)पुनर्वसुः-लक्ष्मीः। (८)पुष्यः- अर्थलाभः। (९)आश्लेषा- महागदः।

(१०)मघा-मृत्युः। (११)पूर्वाफाल्गुनी- नृपभयम्।

(१२)उत्तराफाल्गुनी-सम्पल्लाभः। (१३)हस्तः- कर्मसिद्धिः।

(१४)चित्रा- अरिक्षयः। (१५)स्वाती- सुभोजनलाभः।

(१६)विशाखा- राजपूजा। (१७)अनुराधा- मित्रप्राप्तिः। (१८)ज्येष्ठा-युवतीयुतिः।

(१९)मूलम्- जलप्लुतिः(जलभयम्)।

(२०)पूर्वाषाढा-रोगभीतिः। (२१)उत्तराषाढा- मिष्टान्नलाभः।

(२२)श्रवणम्-नयनामयः(नयनरोगः)(२३)धनिष्ठा-धान्यलाभः।

(२४)शतभिषा(शततारका)- विषभयम्। (२५)पूर्वाभाद्रपदा-सर्वसम्पत्प्राप्तिः।

(२६)उत्तराभाद्रपदा-धनलाभः। (२७)रेवती- जलागमः।

**व.सं.-अश्विन्यादिनक्षत्रानुसारेण प्रतिधिष्ण्यतो नूतनवस्त्रधारणे फलम्-**

(१)अश्विनी-निरन्तरं वस्त्रलाभः। (२)भरणी-अधिकक्लेशो धनहानिः।

(३)कृत्तिका-क्षितिपतिपूजानियतः। (४)रोहिणी- स्वमित्रतो विरोधः।

(५)मृगशीर्षम्- स्वमित्रतो हानिः। (६)आर्द्रा- स्थलजलकनकप्राप्तिः।

(७)पुनर्वसुः-अधिकयशः। (८)पुष्यः- सम्पूर्णलोकविरोधः।

(९)आश्लेषा- अग्निभयम्। (१०)मघा-पुत्रहानिः।

(११)पूर्वाफाल्गुनी- विरोधः। (१२)उत्तराफाल्गुनी-स्वबन्धुजनपूजा।

(१३)हस्तः-सर्वपालनम्। (१४)चित्रा-लाभः। (१५)स्वाती- पशु-आभूषणलाभः।

(१६)विशाखा- धनधान्यस्याधिकहानिः। (१७)अनुराधा- स्वजनानां विरोधः।

(१८)ज्येष्ठा-पत्नीकलहः। (१९)मूलम्- देवतापूजा। (२०)पूर्वाषाढा-हानिः।

(२१)उत्तराषाढा- नानाविधरोगाणि। (२२)श्रवणम्-सम्पूर्णगुणलाभः।

(२३)धनिष्ठा-कदन्नाशनलाभः। (२४)शतभिषा(शततारका)- सततं विदेशगमनम्।

(२५)पूर्वाभाद्रपदा-शत्रुभयम्। (२६)उत्तराभाद्रपदा-पतिताजनलाभः।

(२७)रेवती- प्रभूतमणीकनकवस्तुलाभः।

**व.सं.-सूर्यादिवारवशाद विशेषतः फलकथनं प्राप्यते। क.सं.-सूर्यादिवारवशात् फलकथनं न प्राप्यते।**

**निष्कर्षः-**

उपर्युक्ततौलनिकाध्ययनेनेदं स्फुटं भवति। यत्-

१) **बृहत्संहिताग्रन्थो वराहमिहिरेण लिखितः** संहितानेकसिद्धान्तसमावेशकस्तथा विस्तृतो वर्तते, तथापि संस्कारादिकाः केचन विषयाः, पञ्चाङ्गस्य केचनविषयास्तेन न विवर्णिताः। तथाप्यन्यविषयाणां समावेशः संहितायां कृतः। कश्यपस्य मतसमुल्लेखोऽपि तेन विहितः।

२) **नारदसंहितायाः** कश्यपसंहितया साकमतिसाम्यं दरिदृश्यते। अनेके विषयाः श्लोकाश्च समानाः। तथाप्यनेकविषयेषु कश्यपस्य नारदस्य च पूर्वचर्चिताः सूक्ष्मभेदाः स्फुटा भवन्ति।

३) **वसिष्ठसंहितायां नैके विषयाः कश्यपेन समाना** दरिदृश्यन्ते, तथापि वसिष्ठस्य विवरणमतिविस्तृतं दृश्यते। संस्कार-पञ्चाङ्ग-वास्त्वादिविषयेषु साम्यं दृश्यते। स्थाने स्थाने तयोर्मध्ये स्थूलमानेन सूक्ष्ममानेन वा भेदाः सन्ति। तेषां विश्लेषणं चर्चा च पूर्वमेव कृता।

४) **जैनसम्प्रदायप्रभावितस्य भद्रबाहुसंहिताग्रन्थस्य** प्रायेण भिन्नत्वं सर्वथा दृष्टिगोचरं भवति। संस्कार-पञ्चाङ्ग-वास्तु-उत्पातशान्त्यादि-विविधविषयाणामभावः, जैनमूर्ति-विषयकं विवेचनं -इत्यादिभिः कश्यपसंहितायाः साकं तस्या विषयवैरूप्यं निश्चप्रचं सिद्ध्यति।

कश्यपसंहिताया महत्त्वं वैशिष्ट्यं चान्यसंहिताभ्यः साम्यभेदावित्यादिक-मुपर्युक्तविश्लेषणेन सिद्धं भवति -इत्यस्य प्रकरणस्य फलितम्।

# प्रथमो विभागः

## षष्ठं प्रकरणम्

## उपसंहारः

**ज्योतिषशास्त्रस्य महत्त्वम्-**

ज्योतिःशास्त्रम्- ज्योतिषां सूर्यादीनां गत्यादिज्ञापकं शास्त्रम् (वाचस्पत्यम्, खं.४, पृ.३१६३)। ज्योतिषमागमं शास्त्रम् (वाचस्पत्यम्, खं.४, पृ.३१६३)। सूर्यादिग्रहगत्यादिबोधके कालज्ञाने वेदाङ्गे शास्त्रभेदे (वाचस्पत्यम्, खं.४, पृ.३१६३)। अपरिमिते गगनमण्डले यानि हि तेजोमयानि बिम्बानि दृश्यन्ते, तानि सर्वाणि समष्ट्या ज्योतिःशब्देनोच्यन्ते। अपरिमिते गगनमण्डले परिभ्रमणमाणानां प्रतिदिनं भिन्न-भिन्ननक्षत्रग्रहतारादिज्योतिःपिण्डानां स्थितिगतिप्रभावादिवर्णनपरं शास्त्रं ज्योतिषशास्त्रपदेनाभिधीयते।

**ज्योतिषस्य वेदाङ्गत्वम्-**

**कश्यपवचनम्-**

सम्बन्धस्तस्य शास्त्रस्य वेदाङ्गमिति धातृतः।

(कश्यपसंहिता अ.१श्लो.१८)

**तत्र भास्कराचार्यः-**

शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ।

यातुशिक्षाऽस्य वेदस्य सा नासिका पादद्वयं छन्द आद्यैर्बुधैः।।

(-सिद्धान्तशिरोमणिः, गणिताध्यायः, श्लो.१०)

**नारदोऽपि-**

वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम्।

अस्य शास्त्रस्य सम्बन्धो वेदाङ्गमिति कथ्यते।।

(-नारदसंहिता अ.१ श्लो.४-५)

**ज्योतिःशास्त्रस्य प्रयोजनम्-**

**कश्यपः-**

शुभाशुभस्य जगतामभिधेयं निरूपणम्।

ग्रहग्रहणसङ्क्रान्तिर्यज्ञाध्ययनकर्मणाम्।।

प्रयोजनं ततोद्वाहक्रियाणां कालनिर्णयः।

एतद्विना न सिद्ध्यन्ति श्रौतस्मार्ताखिलक्रियाः।।

(कश्यपसंहिता अ.१श्लो.१९-२०)

**आचार्यभास्करोऽपि-**

वेदास्तावद्यज्ञकर्मप्रवृत्ता

यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।

शास्त्रादस्मात् कालबोधो मतः स्याद्

वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्।।

(सि.शि. गणिताध्याये, श्लो.९)

योग्यायोग्यकालबोधो ज्योतिषशास्त्रेणैव भवति। समस्तशुभाशुभकर्मणां कालनिर्धारणं विना कृतं कर्म विनश्यति। अकाले कृतं कर्म विनश्यति। ज्योतिषं शुभाशुभकालबोधकं शास्त्रं विद्यते। ग्रहाणामुदयास्त-स्थित्यादिस्तस्य फलकथनं, सूर्य-चन्द्रग्रहणकालनिर्णयः, संक्रान्तिनिर्णयः, यज्ञारम्भकालनिर्णयः, विवाहमुहूर्तनिर्णयः,

षोडशसंस्कारस्य कालनिर्णय: – इत्थं श्रौतस्मार्तादिसमस्तकर्माण्यनुकूलसमये फलदानि, अकाले निष्फलानि भवन्ति। अत: ज्योतिषशास्त्रस्यावश्यक्ता।

सिद्धान्त–संहिता–होरात्मकं त्रिविधं ज्योतिषशास्त्रं षड्वेदाङ्गानामेकतमम्।

**उक्तं च कश्यपेन**–

स्कन्धत्रयात्मकं शास्त्रमाद्यं सिद्धान्तसंज्ञकम्।

द्वितीयं जातकस्कन्धं तृतीयं संहिताह्वयम्।।

(कश्यपसंहिता अ.१श्लो.४)

**नारदोऽप्याह**–

सिद्धान्तसंहिता होरा स्कन्धत्रयात्मकम्।

(नारदसंहिता अ.१ श्लो.४)

संसारस्य शुभाशुभाविषयाणि केवलं नयनेन दृश्यन्ते, तथैव वेदविहितशुभाशुभकर्मणामुपादानमेवं त्याग:– अर्थात् कानि कर्माणि कदा कार्याणि एवं कदा न कार्याणि इत्यादि नेत्रस्य कार्यं ज्योतिषशास्त्रेणैव भवेत्। यथा नेत्रवान् जनो मार्गे स्थितकण्टकादीनि दृष्ट्वा स्वरक्षां कर्तुं शक्त:, तेनैव ज्योतिषशास्त्रज्ञाता सम्पूर्णशुभाशुभकर्मसमयं ज्ञात्वा योग्यकालाचरणात् सुखभोक्ता भवेत्। ज्योतिषशास्त्रस्य ज्ञानेन पुण्यप्रदा–उत्तमगति: प्राप्यते।

**उक्तं कश्यपेन**–

ज्ञातव्यमध्येतव्यं तु पुण्यमायुर्यशस्करम्।

पुण्यकालपरिज्ञानादश्वमेधफलं लभेत्।।

पुण्यकालं च यो वेत्ति स तु वेत्ति पराङ्गतिम्।

कालज्ञानेऽतिकुशलं तं देवा ब्राह्मणं विदु:।।

(कश्यपसंहिता अ.१श्लो.२१–२२)

**ज्योतिषशास्त्रस्य प्रशंसा–**

यथा शिखा मयूराणां नागानां मणयो यथा।

तद्वद् वेदाङ्गशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम्।।

(वेदाङ्गज्योतिषम्–श्लो.४)

**संहिताशास्त्रं कश्यपसंहिता च–**

त्रिस्कन्धात्मकज्योतिषशास्त्रे संहितास्कन्धस्यातीव महत्त्वम्। समस्तभूतानां हितकारकं ज्ञानं यत्र स्थितं सा संहिता शब्देन ज्ञायते। अत्र ज्योतिषविषयेऽपि समस्तप्राणिनां हितकाम्यया विविधविषयस्य सम्यक् संगृहीतं ज्ञानं हि संहिता विद्वज्जना मन्यन्ते।

अयं संहितास्कन्धो भौतिकफलितज्योतिषपदेनाप्यभिधीयते। वस्तुतः सर्वेषामेव स्कन्धानां संक्षेपेण विवेचनाद्धि संहितायाः संहितात्वम्। वराहमिहिरानुसारेण– ज्योतिषशास्त्रमनेकभेदविततं स्कन्धत्रयाधिष्ठितं तत्कात्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता। (बृ.सं.– अ.१) विवेचनाद्धि संहितायाः संहितात्वम्। तेनैवोक्तं– संहितापारगो दैवचिन्तको भवतीति। संहितायां सांवत्सरसूत्रं, ग्रहचारः, ग्रहयुति, वर्षफलं, शृङ्गाटकं, मेघगर्भः, उल्कादिलक्षणं, उत्पाताः, वास्तु, उत्पातशान्तिः, शकुनविचारः, पञ्चाङ्गादिफलं, मुहूर्तविचारः, ग्रहगोचराश्चैवमाद्या विवेचनीया विषया इति महत्प्रयोजनमस्य स्कन्धस्य इति।

**कश्यपः–**

मत्स्यमहापुराणानुसारेण कश्यपो मरीचिऋषेः पुत्रः। कश्यपस्य त्रयोदश भार्याणामुल्लेखः। सर्वेषु वैदिकग्रन्थेषु, पुराणेषु, धर्मशास्त्रेषु, अन्येषु संस्कृतवाङ्मयेषु च कश्यपस्य स्थानं महत्त्वपूर्णं दरीदृश्यते। सप्तर्षिमण्डलेषु कश्यपस्य

अन्यतमस्थानम्। ज्योतिषशास्त्रस्य अष्टादशप्रवर्तकेषु कश्यपस्य नाम वर्तते। कश्यपस्य संहिता कश्यपसंहिता।

**कश्यपस्य नाम्ना नैके ग्रन्था विद्यते-यथा** (१)कश्यपसंहिता वैद्यकविषया, (२)काश्यपोत्तरसंहिता, (३)काश्यपस्मृतिः, (४)काश्यपशिल्पशास्त्रम्, (५)काश्यपसिद्धान्तः, (६)काश्यपव्याकरणम्, (७) काश्यपसंहिता अथवा वृद्धजीवकीयतन्त्रम्(आयुर्वेदः), (८) काश्यपभक्तिसूत्रग्रन्थः (९)काश्यपकृषिशास्त्रम्, (१०)मूलाश्लेषाशान्तिः, (११)ॐकारसर्वस्वम् (१२)सुवर्णतन्त्रम्, (१३)स्त्रीचिकित्सासूत्रम, (१४)काश्यपकल्पः, (१५)काश्यपगीता, (१६)काश्यपजातकम्, (१७)काश्यपतन्त्रम्, (१८)काश्यपसंहिता अथवा काश्यपीयम्(आयुर्वेदस्य ग्रन्थः), (१९)काश्यपसंहिता वैखानसम्, (२०)काश्यपसंहिता- काश्यपपञ्चरात्रम्, (२१)काश्यपाप्री, (२२)काश्यपीयरोगनिदानम्, (२३)काश्यपपटलः, (२४)काश्यपसंहिता।

**कश्यपसंहितायाः प्रथमवारमेव वैज्ञानिकं सम्पादनं समीक्षात्मकं तुलनात्मकमध्ययनं च**

कश्यपस्य संहितायाः सम्पादनपूर्वकमध्ययनस्य महाशोधप्रबन्धस्य मुख्यो विषयः। तदर्थं प्राच्यविद्यामंदिरस्थानां त्रिसणां, पुनानगरस्य एकस्याः, कश्मीरनगरस्यैकस्याः, एवं मिलित्वा पञ्च मातृकाणामाधारेण कश्यपसंहितायाः पाठनिर्धारणं प्रथममेव कृतम्। अन्यज्योतिषशास्त्रीयग्रन्थेषु(बृ.सं.भटोत्पलटीका, मुहूर्तचिन्तामणेः पीयूषधाराटीका, बल्लालसेन- प्रणीतोऽद्भुतसागरः) कश्यपसंहितायाः श्लोका उद्धरणरूपेण प्राप्यन्ते। तेषामपि सङ्ग्रहः पाठनिर्धारणे समुपयोगश्च कृतः। नारदसंहितायां कश्यपस्याष्टादशज्योतिषप्रवर्तकरूपेण निर्देशो दृश्यते। तद्यथा-

ब्रह्माचार्यो वसिष्ठोऽत्रिर्मनुः पौलत्स्यलोमशौ।

मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः।।२।।

च्यवनो यवनो गर्गः कश्यपश्च पराशरः।

अष्टादशैते गम्भीरा ज्योतिःशास्त्रप्रवर्तकाः।।३।।

(नारदसंहिता,अ.१श्लो.२-३)

कश्यपसंहिताग्रन्थे प्रत्येकाध्यायान्ते - इतिश्रीब्रह्मर्षि- कश्यपसंहितायां ............। इति उक्तम्। ज्योतिषसंहिताकारस्य कश्यपस्य समयो वराहमिहिरपूर्वकाले (ख्रि.५०५) शक्यते। उपलब्धसंहितानामनेके श्लोका भटोत्पलकृतायां बृहत्संहिताटीकायामुपलभ्यन्ते। तेन प्रायेण भट्टोत्पलपूर्वकालीनः कश्यपोऽस्तीति (ख्रि.९६६) निश्चयेन वक्तुं शक्यते। अथ कश्यपसंहिता प्राचीनो ग्रन्थः, किन्तु तद्विषयेऽधिकांशजना न जानन्ति तथा चायं ग्रन्थो बहुप्रचलितो नास्ति।

श्रीब्रह्मर्षिकश्यपविरचितां कश्यपसंहितायां विविधज्योतिषशास्त्रीयविषयोपरि एकोनपञ्चाशत्(४९)अध्यायाः सम्मिलिताः सन्ति। तथा च सर्वेष्वध्यायेषु श्लोका एव सन्ति, न गद्यम्। विविधछन्दोबद्धोऽयं ग्रन्थः।

अस्मिन्संहिताग्रन्थे - सिद्धान्तविभागे सूर्यादीनां नवग्रहाणां चारविषये प्रतिपादितम्। पञ्चाङ्गप्रकरणे तिथि-वार-नक्षत्र-योग-करणादीनां व्यवहारे किं महत्त्वम् -इति स्पष्टीकृत्य विस्तृतं विवरणं निर्दिष्टमस्ति। मनुष्याणां जीवने गर्भाधानादारभ्यान्त्येष्टिपर्यन्तं विविधाः संस्कारा वर्तन्ते। अत्र षोडशसंस्काणां महत्त्वं प्रदर्श्य विस्तृतरूपेण मुहूर्तविचारः प्रतिपादितः। कश्यपसंहितान्तर्गते वास्त्वध्याये गृहनिर्माणं ग्रामादीनां सविस्तरं विवेचनं कृतम्।

कश्यपसंहितान्तर्गते विवाहाध्यायेऽष्टविधविवाहानां सफलमत्यन्तं विशदं सविस्तरं विवेचनं कृतम्। कश्यपसंहितान्तर्गते सर्वलग्नाध्याये प्रत्येककार्याणां सिद्ध्यर्थं द्वादशलग्नवशाद्–ग्रहयोगवशाद् विविधकार्याणां सिद्धिविषये विशिष्टं सविस्तरं विवेचनं कृतम्। तथा चान्ये महत्त्वपूर्णा विषया यथा यात्राध्यायः, श्राद्धाध्यायः, (विवाहे)एकविंशतिदोषनिरूपणाध्यायः, उत्पाताध्यायः, राजाभिषेकाध्यायस्तथा विविधशान्त्यादीनां विवेचनं शान्त्यध्याये कृतमस्ति। कश्यपसंहितायाः सम्पूर्णं श्लोकसंख्या १,५५४ वर्तते।

अस्मिन् महाप्रबन्धे मया विविधानां प्रकाशिताप्रकाशितानां मूलभूतानां तथा चाधारग्रन्थानां ग्रन्थकाराणां, पुस्तकानां लेखकानां कोशग्रन्थानां च प्रमाणभूतायाः सामग्र्याः सम्यक्तया विवेकबुद्ध्या सुयोग्यस्थानेषु समुपयोगः कृतः, तस्य यथास्थाने सन्दर्भग्रन्थसूच्यां टिप्पण्यां च ऋणनिर्देशः कृतोऽस्ति। तथापि महाप्रबन्धे सर्वं मम प्रतिपादनं, निष्कर्षा निर्णयाश्च सम्पूर्णतया मौलिकाः स्वकीयाश्च सन्ति। एतादृशमध्ययनं न केनाप्यद्यावधि विहितमिति मम संशोधनं नावीन्यपूर्णं ज्ञानवर्धकं चास्तीति सविनयं निवेद्यते।

**महाप्रबन्धोऽयं निम्नलिखितेषु त्रिषु विभागेषु विविधेषु प्रकरणेषु च विभक्तोऽस्ति।**

## प्रथमो विभागः

**प्रथमं प्रकरणम्–**

प्रस्तावना, ज्योतिषशास्त्रस्य व्याख्या, व्याप्तिः, महत्त्वम्, वैविध्यम्, त्रिविधत्वं–सिद्धान्त, संहिता, होरा, यज्ञयागादीनां समयनिर्धारणम्, आधुनिककाले च–योग्यमुहूर्तस्यावश्यकता, फलज्योतिषं जीवन आवश्यकम्, संहिताग्रन्थानां विषयाः, संहिताग्रन्थानां परिचयः, ज्योतिषप्रवर्तकाः, उपसंहारः।

**द्वितीयं प्रकरणम्**

ज्योतिषसंहिताकारेषु कश्यपस्य विवेचनम्, कश्यप–काश्यपशब्दस्य स्पष्टीकरणम्, इतिहासः, कश्यपकाश्यपविषये वेदे साहित्ये धर्मशास्त्रे च सन्दर्भाः, तेषां विश्लेषणं, समयः, स्थानम्, ज्योतिषग्रन्थेषु सन्दर्भाः श्लोकाश्च, बाह्यसाक्ष्यम्, आन्तरिकं साक्ष्यं समयस्य स्थानस्य च निर्धारणम्, उपसंहारः

**तृतीयं प्रकरणम्–**

कश्यपसंहितायाः परिचयः, ग्रन्थकारपरिचयः, तस्य समयः, स्थानम्, विद्वत्ता, हस्तलिखितानां परिचयः, सम्पादनं, सिद्धान्ताः, कति अध्यायाः, प्रत्येकाध्याये कति श्लोकाः।

**चतुर्थं प्रकरणम्**

कश्यपसंहिताया विविधाध्यायेषु समागतानां विषयाणां विवेचनम्, प्रत्येकस्य विषयस्य स्पष्टीकरणम्।

**पञ्चमं प्रकरणम्**

तुलनात्मकमध्ययनम्, कश्यपसिद्धान्तानां वराहमिहिरस्य बृहत्संहितायास्तथा नारद–वसिष्ठ–भद्रबाहुसंहितानां साकं तुलना।

**षष्ठं प्रकरणम्**

उपसंहारः, समग्रस्याभ्यासस्य फलम्, आधुनिककाले फलज्योतिषस्योपयोगिता, अध्ययनस्य महत्त्वम्, प्रथम एव सम्पादनेऽध्ययने च प्रयत्नः, अध्ययनम्, प्रथमवारमेतादृशं तुलनात्मकं सविस्तरं संशोधनपद्धतिपुरःसरं चाध्ययनम्।

# द्वितीयो विभागः

## समग्रकश्यपसंहितायाः सम्पादितपाठः, पाठभेदसहितः।

### कश्यपसंहितायाः सम्पादितपाठः १-४९ अध्यायाः-

## ३.तृतीयो विभागः

**९. नवमं परिशिष्टम्**

संशोधनोपयुक्तानां ग्रन्थानां सूचिः।

**१०. दशमं परिशिष्टम्**

ग्रन्थसम्बद्धविषयप्रदर्शकविविधचित्राणि।

आधुनिककाले निर्णयसागरपञ्चाङ्गे वर्षफलसन्दर्भे निम्नोक्तश्लोकद्वयानामुद्धरणं क्रियते तद्यथा–

**निर्णयसागर-पञ्चाङ्गे (वर्षफलादेशे)-**

( वर्षम्–२००८–२००९ पृष्ठाङ्कः–१८)
वीतरोगाभयाः सर्वे चापस्थे देवपूजिते।
हृदयानन्दिनी धात्री फलशालीक्षुवृष्टिभिः।।
–(कश्यपसंहिता –६/२९क–ड,६/३०अ–ब)
अशत्रवो जना धात्रीपूर्णा सस्यार्घवृष्टिभिः।
वीतरोगाभयाः सर्वे मकरस्थे सुरार्चिते।।

श्लोकावेतौ कश्यपसंहितायां प्राप्यन्ते। एतेन सिद्धं भवति यदाधुनिककालेऽपि वर्षफलसन्दर्भे कश्यपसंहिताया निश्चप्रचमुपयोगित्वं भवति। अहो माहात्म्यं कश्यपमहर्षेः प्रस्तुतसंहितायाः।

# द्वितीयो विभागः

# समग्रकश्यपसंहिता पाठभेदसहिता

## कश्यपसंहिता अनुक्रमणिका

## ।। प्रथमोऽध्यायः ।।

## ।। शास्त्रोपनयनाध्यायः ।।

[१]महेशाय नमस्तस्मै सच्चिदानन्दरूपिणे।

[२]नतामर[३]किरीटौघप्रभाविस्फुरिताङ्घ्रये।।१।।

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।

कश्यपो नारदो गर्गो मरीचिर्मनु[४]रङ्गिराः।।२।।

रोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।

शौनकोऽष्टा[५]दशैवैते ज्योतिःशास्त्रप्रवर्तकाः।।३।।

---

(१)व.१–श्रीगणेशाय नमः।। श्रीसरस्वत्यै नमः।।,

पु.–श्रीगणेशाय नमः।। श्रीसरस्वत्यै नमः।। अविघ्नमस्तु।।,

क.–ॐ श्रीगणेशाय नमः।।, व.२–श्रीगणेशाय नमः।।,

व.३–श्रीगणेशाय नमः।। श्रीरस्तु।। अविघ्नमस्तु।।

(२)व.१–नृपामर, क.–नुतामर।

(३)व.१–किरीटेषु प्रमाविघ्नुरिताङ्घ्रये।।, पु.–(त्रुटितम्)...रकिरीटौ.......।

(४)व.१–राङ्गिराः, व.३–रङ्गिरः। (५)पु.–दिशैवेते।

## ।। शास्त्रोपनयनाध्यायः ।। (अध्यायः१)

[६]स्कन्धत्रयात्मकं शास्त्र[७]माद्यं सिद्धान्त[८]संज्ञकम्।

द्वितीयं जातक[९]स्कन्धं तृतीयं [१०]संहिताह्वयम्।।४।।

ग्रहाणां मध्यमा भुक्तिः स्फुटभुक्ति[११]रनन्तरम्।

दिक्साधनं ततश्छाया [१२]लग्नकालविनिर्णयः।।५।।

चन्द्रार्कग्रहणं सम्यक् [१३]तयोश्च परिलेखनम्।

समागमो युद्धभेदो [१४]ग्रहाणां [१५]युतयस्ततः।।६।।

उदयास्तमयज्ञानं चन्द्र[१६]शृङ्गनतोन्नतिम्।

पातवैधृतयोर्भेदौ [१७]भूगोलं यन्त्रलक्षणम्।।७।।

मानक्रिया मानभेदाश्चाद्यस्कन्धे [१८]प्रकीर्तिताः।

राशिभेदः खेटयोनि[१९]र्वियोनिर्जन्मलक्षणम्।।८।।

---

(६)व.१–स्कन्द। (७)व.१–साद्यं। (८)व.१–संज्ञतम्। (९)व.१–स्कन्दं।
(१०)पु.–संहिताद्वयम्। (११)पु.–रनन्तराम्। (१२)पु.–(लोपः–त्रुटितम्) लग्न।

(१३) पु.–(लोपः–त्रुटितम्) तयोश्च। (१४)व.१–ग्रहाणे।
(१५)व.१–संयुतिस्तथा, व.३–युतयस्तथा।

(१६)पु.,व.१–शृङ्गोन्नतिस्तथा। (१७)व.१–तु गोलं।

(१८)व.१–प्रकीर्तिते, पु.–प्रकीर्तितः। (१९)व.१–वियोने।

## ।। शास्त्रोपनयनाध्यायः ।।            ( अध्यायः१ )

निषेको जननं पुंसामरिष्टं भङ्गलक्षणम्।

[२०]आयुर्दायो दशा [२१]भेदा [२२]भेदाश्चान्तर्दशा[२३]सु च।।९।।

अष्टवर्गः कर्मजीवो राज[२४]योगाश्च [२५]संज्ञकाः।

[२६]चान्द्र[२७]योगा द्विग्रहाद्याः प्रव्रज्यायोगसम्भवाः।।१०।।

राशिशीलं दृष्टिफलं [२८]ग्रहभाव[२९]फलं ततः।

आश्रयाख्याश्च ये योगा [३०]योगाः सङ्कीर्णसम्भवाः।।११।।

स्त्रीजातकं [३१]नेष्टयोगं [३२]निर्वाणं नष्टजातकम्।

द्रेष्काणश्च क्रिया[३३]योगा [३४]द्वितीयस्कन्धसम्भवाः।।१२।।

---

(२०)पु.–आयुर्मान। (२१)पु.–भेदौ। (२२)पु.,व.१–भेदश्।

(२३)व.१–भिधः। (२४)व.१–योगः। (२५)पु.–(लोपः) संज्ञकाः।

(२६)व.१,क.–चन्द्र। (२७)पु.–(लोपः)योगा द्विग्रहाद्याः प्रव्रज्या।

(२८)पु.–स्फुटं, क.,व.१.३–फलं। (२९)व.१–भवं।

(३०)पु.–(लोपः)योगाः सङ्कीर्णसम्भवाः, व.१–योगा सङ्कीर्णा साधुसम्भवाः।

(३१)पु.–नष्ट। (३२)पु.–निर्याणं। (३३)व.१–श्चैते। (३४)व.१–द्वितीयं।

## ।। शास्त्रोपनयनाध्यायः ।।     (अध्यायः१)

आदौ [35]शास्त्रोपनयनं खेटचारोऽब्द[36]लक्षणम्।

तिथिवासरनक्षत्रयोगतिथ्यर्धलक्षणम्।।१३।।

मुहूर्तोप[37]ग्रहः [38]सू[39]र्यसङ्क्रान्तिर्गोचरक्रमः[40]।

चन्द्रताराबलं चैव [41]क्रिया षोडशकर्मणाम्।।१४।।

[42]छुरिकाबन्ध[43]नं यात्रा प्रवेशो [44]वास्तुलक्षणम्।

नृपाभिषेचनं देवप्रतिष्ठा वस्त्रलक्षणम्।।१५।।

अग्न्याधानं मेघ[45]गर्भं निखिलोत्पातलक्षणम्।

[46]तच्छान्तिर्मिश्रिकाध्यायस्तृतीय[47]स्कन्ध[48]सम्भवाः।।१६।।

---

(३५)क.–शास्त्रेषु नयनं, पु.–शास्त्रोपकथनं। (३६)पु.–लक्षणाम्।

(३७)पु.–ग्रहा। (३८)पु.–(लोपः)सू। (३९)व.१.२.–र्यः। (४०)व.१–चरः।

(४१)व.१–त्रिय, क.–क्रियाः। (४२)क.,व..१.२–क्षुरिका।

(४३)व.१–(लोपः–) नं। (४४)व.१.३–सद्म। (४५) व.१–गर्भो।

(४६)पु.–प्रशान्तिर्। (४७)व.१–स्कन्द। (४८)व.१.२.३–सम्भवः।

एवं लक्षणसंयुक्तमुक्तं [४९]स्कन्धद्वयं ततः।

[५०]साम्प्रतं संहिता[५१]स्कन्धमेवं लक्षणसंयुतम्।।१७।।

वक्ष्येऽहं कश्यपब्रह्मा [५२]हितार्थं देहधारिणाम्।

सम्बन्धस्तस्य शास्त्रस्य वेदाङ्गमिति [५३]धातृतः।।१८।।

शुभाशुभस्य जगतामभि[५४]धेयं निरूपणम्।

[५५]ग्रहग्रहणसङ्क्रान्तिर्य[५६]ज्ञाध्य[५७]यनकर्मणाम्।।१९।।

प्रयोजनं ततोद्वाहक्रियाणां कालनिर्णयः।

एतद्विना न [५८]सिद्ध्यन्ति श्रौतस्मार्ता[५९]खिलक्रियाः।।२०।।

---

(४९)व.१-स्कन्द। (५०)पु.-तृतीयं। (५१)व.१-स्कन्द।

(५२)व.२,पु.-हितार्थे। (५३)व.१-तत्त्वतः। (५४)व.१.२-मभिधेय।

(५५)व.१-ग्रहणग्रह। (५६)पु.-(लोपः-त्रुटितम्) .. ज्ञाध्य..।

(५७)व.१.२-यज्ञाध्यायन। (५८)पु.-सिद्धन्ति।

(५९)व.१-षिला (ष꣸ ख), व.३-खिलाः।

## ।। शास्त्रोपनयनाध्यायः ।।                (अध्यायः१)

ज्ञातव्य[६०]मध्येतव्यं [६१]तु पुण्यमायुर्यशस्करम्।

पुण्यकालपरि[६२]ज्ञानादश्वमेधफलं लभेत्।।२१।।

[६३]पुण्यकालं च यो वेत्ति स तु वेत्ति पराङ्गतिम्।

कालज्ञानेऽतिकुशलं तं [६४]देवा ब्राह्मणं विदुः।।२२।।

[६५]इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां शास्त्रोपनयनाध्यायः प्रथमः।।   ।।१।।

---

(६०)पु.–मध्यै। (६१)व.१–तत्पुण्य। (६२)व.१–ज्ञाता। (६३)पु.–एष्य।

(६४) व.३–देव।

(६५)व.१–इति कश्यपब्रह्मर्षिविरचितायां महासंहितायां शास्त्रोपनयनाध्यायः

प्रथमः।।१।।,

पु.–इति शास्त्रोपरोध्यायः प्रथमः।।,

व.२–इति शास्त्रोपनयनाध्यायः।।,

क.,व.३–इति कश्यपब्रह्मर्षिविरचितायां शास्त्रोपनयनाध्यायः प्रथमः।।

## ।। द्वितीयोऽध्यायः ।।

## ।। सूर्यचाराध्यायः ।।

अथातः सम्प्रवक्ष्यामि [१]सूर्यचारमनुत्तमम्।

[२]सूर्यचारवशादेव [३]निखिलः काल[४]निर्णयः।।१।।

सङ्क्रान्तयः [५]स्युर्मेषाद्या[६]श्चैत्रमासादिषु क्रमात्।

[७]नियमो न भवेदत्र त्वधिमासे समा[८]गते।।२।।

यस्मिन्मासेऽर्कसङ्[९]क्रान्तिर्दर्शान्तात्प्राक्[१०]परापरम्।

[११]दर्शमुल्लङ्घ्य भवति स [१२]संसर्पो[१३]धिमासकः।।३।।

---

(१)व.१-रवि। (२)पु.-(लोपः) चारवशादेव। (३)पु.,व.२.३-निखिलं।

(४)पु.,व.२-३-निर्णयम्। (५)व.१-(लोपः) स्यु, पु.-स्युः स्य।

(६)व.१-चैत्रा।

(७)पु.-(त्रुटितम्-लोपः) नियमेन भवेत्तत्र, व.२,क.-नियमेन भवेत्तत्र।

(८)पु.-तः, क.-गमे। (९)पु.-(त्रुटितम्-लोपः)
क्रान्तिर्दर्शान्तात्प्राक्परापरम्।

(१०)व.२-परापरा। (११)पु.-(लोपः-त्रुटितम्) दर्शमुल्लङ्घ्य भवति स।

(१२)व.१-संसप्यों। (१३)पु.-त्यधिमासकः।

# ।। सूर्यचाराध्यायः ।।                (अध्यायः २)

आरभ्य शुक्लप्रतिपत्प्रवेशात्सङ्क्रमद्वयम्।

[१४]आगामिन्दुक्षयश्चान्ता[१५]त्प्राङ्नताख्यस्त्वहर्पतिः।।४।।

[१६]न्यूनमासस्तुलाषट्के [१७]त्वधिमासस्तु सर्वदा।

[१८]स्फुटार्कसङ्क्रमौ द्वौ [१९]चे[२०]त्रयोऽब्दे [२१]सोऽधिमासकः।।५।।

मासौ न्यूनाधिकौ [२२]क्रान्तौ सर्वकर्म[२३]बहिष्कृतौ।

मासप्राधान्यकं कर्म विनापि [२४]क्रतुसूतकम्।।६।।

---

(१४)पु.-(लोपः)आगामीन्दुक्षयस्यातां प्राङ्।

(१५)व.१-चान्द्रग्रताव्यस्त्वहर्प्पतिः।,

व.२-प्राङ्गताख्यस्त्वहर्पति, क.-प्राङ्गताख्यस्त्वहर्पतिः।

(१६)क.-(लोपः )श्लोकः क्र.-५। (१७)व.१-प्यधि।

(१८)व.१-स्फुटाक्त। (१९)पु.-(लोपः-त्रुटितम्) ... चत्।

(२०) व.१.२-त्रयोब्दं। (२१)व.२-त्वोऽधिमासकः।

(२२)व.१-यौ तौ।

(२३)व.१-बहिः कृतौ।

(२४)व.२-स तु।

।। सूर्यचाराध्यायः।। (अध्यायः२)

[२५]दस्रभाद्वितय[२६]स्थेऽर्के [२७]यदि वृष्टिर्भवेत्तदा।
क्षेमं [२८]सुभिक्ष[२९]मतुलमीतिदोषोऽग्निधिष्ण्यगे।।७।।
रोहिणीद्वितयस्थेऽर्के सस्यवृद्धिर्मनोजयः।। ८।।
रौद्रनक्षत्रगे सूर्ये यदि वृष्टिर्भवेत्तदा।
[३०]अनभ्रमल्प[३१]वृष्टिः स्यादीतिदो[३२]षस्त्वनर्घता।।९।।
आर्द्राप्रवेशे [३३]वृष्टिः स्यात्सार्धमासमवर्ष[३४]णम्।
दिवार्द्रा सस्यनाशाय रात्रौ [३५]सस्याभिवृद्धये।। ९।।
[३६]अस्तमानेऽ[३७]र्धरात्रौ चेन्महदर्घः [३८]सुभिक्षकृत्।।१०।।

---

(२५)व.१-दभादादि। (२६)व.१, क.-स्येऽर्के।

(२७)व.१-(लोपः)श्लोकः क्र-७ ब तः श्लोकः क्र.-८ड पर्यन्तम्,

व.२-(लोपः)श्लोकः क्र.-७ ब तः श्लोकः क्र.-८अ पर्यन्तम्।

(२८)पु.-सौभिक्ष। (२९) पु.-मतुलं प्रीति। (३०)व.१-अगर्घ।

(३१)व.१-वृष्टि। (३२)व.१-षा नृपाह्वयम्। (३३)व.१-वृष्टि।

(३४)व.१-(लोपः) णम्। (३५)पु.-स्यादभिवृद्धये, व.१-स्यौभिवृद्धये।
(३६)पु.-असमाने, व.१-अस्तसगि। (३७)व.३-र्द्धरात्रौ।

(३८)व.१-स्तु वृष्टिकृत्।

## ।। सूर्यचाराध्यायः ।।                (अध्यायः २)

[३९]आदित्यादिद्वि[४०]दैवान्तदशर्क्षे संस्थिते रवौ।

सस्यवृद्धिः सुभिक्षं स्याद्विना [४१]सिंह[४२]प्रवेशनम्।।११।।

मित्रभात्रितयस्थेऽर्के यदि वृष्टिर्भवेत्तदा।

नृणां व्याधिभयं स्वल्पं सस्या[४३]नामीतितो भयम्।।१२।।

[४४]पूर्वाषाढा[४५]ङ्गते भानौ जीमूतैः परिवेष्टि[४६]ते।

तुषारा[४७]निल[४८]युक्ते [४९]वा [५०]ऋक्षाखिलदिनेष्वपि।[५१]

क्रमादार्द्रादिके [५२]वृष्टिरवृष्टिस्तैरसंयुतैः[५३]।। १३।।

---

(३९)पु.-अदित्या। (४०)पु.-दैवात्ते, व.१-दैवान्ता। (४१)पु.-त्मिह। (४२)पु.-प्रवेशने। (४३)व.१-सस्यानामानितो। (४४) व.१-पूर्वाषाढाङ्गते।

(४५)पु.-(लोपः) गते भानौ। (४६)पु.-परिवेष्टितौ। (४७)व.३,क.-तुषारानल। (४८)पु.-युक्तो। (४९)क.-षु, व.१-ना।

(५०)क.-ऋक्षादिनेखिलेष्वपि, व.१-रुक्षा च विष्टदिमेष्वपि।

(५१)व.१-पुनर्लेखनम्-श्लोकः क्र-८अ,ब (पूर्वार्धम्) एवं श्लोकः क्र.-१३ पश्चात्(अधिकम्)-रोहिणीद्वितयस्थेऽर्के दास्यवृद्धिं मनोजयः।।

(५२)पु.-(लोपः) वृष्टिरवृष्टिस्तैरसंयुतैः, व.१.२-वृष्टिस्तैरवृष्टि।

(५३)व.१.२-रसंयुते।

[५४]विश्वभादृक्षषड्केऽर्के स्थिते [५५]वृष्टिर्भवेद्यदि।
सुवृष्टिं क्षेममारोग्यं नृपाः स्वस्थाश्च सर्वदा।।१४।।
[५६]रेवतीसंयुते सूर्ये यदि वृष्टिर्भवेत्तदा।
पूर्वा[५७]षाढा[५८]न्तर्गर्भः स्या[५९]दार्द्राद्येषु न [६०]वर्षणम्।।१५।।
गणि[६१]तागतकालात्तु [६२]छायाद्यैः [६३]पूर्वतोऽयनम्।[६४]
भवेद्विपत्तिर्जगतः पश्चाच्चेत्क्षेममुत्तमम्।।१६।।
त्रयस्त्रिंशिद्राहुसुता[६५]स्तामसाख्याः [६६]सकीलकाः।।१७।।

---

(५४)पु.-(लोपः) विश्व, व.१-विश्वष्टा। (५५)व.१-वृष्टिर्भवेद्यति।

(५६)पु.-(लोपः) रेवतीसंयुते। (५७)पु.-(लोपः) षा।

(५८)क.-र्न्तभङ्गः, पु.-न्तशत्रुभङ्गः। (५९)व.३-आर्द्राज्येष्ठाद्येषु।

(६०)पु.-निवर्षणम्। (६१)पु.-(लोपः)तागत कालात्तु छाया।

(६२)व.१-छायाद्याः। (६३)व.१- पूर्वतो यदि।

(६४)व.१-(अधिकम्)-रेवत्यां यदि वृष्टिस्याद्दशर्क्षेषु न वर्षणम्।।

(६५)पु.-(लोपः)तामासाख्याः। (६६)व.१-प्रकीर्तिताः।

तानर्कमण्डले दृष्ट्वा वर्णाकारैः फलं [६७]वदेत्।
सूर्यमण्डलगाः पापाश्चन्द्रमण्डलगाः [६८]शुभाः।।१८।।
चन्द्रे[६९]ऽप्यनिष्टदः खड्ग[७०]कबन्ध[७१]ध्वाङ्क्षसन्निभाः।
[७२]उदये तामसादीनां रजोवृष्टि[७३]र्महानिलः।।१९।।
दिग्दाहस्त्वथ [७४]भूकम्पनीहारा[७५]शनिपातनम्।
एवमाद्या महोत्पाताः [७६]स्युस्ते च स्वफलप्रदाः।।२०।।
निमित्तवस्तुनो यत्तु फलं नैमित्तिकस्य च।
[७७]खड्गाकारे नृप[७८]भयं कबन्धे [७९]व्याधितो भयम्।
ध्वाङ्क्षे [८०]चोरभयं कीलकाकारेऽपि [८१]त्वनर्घता।। २१।।

---

(६७)व.२-भवेत्। (६८)व.१-शुभः।

(६९)क.-पापानिष्टदाः, व.१-प्यनिष्टवः, व.२-प्यनिष्टदां।

(७०)व.१-कवधं।

(७१)व.२-छत्र। (७२)पु.,क.-उद्गमे। (७३)पु.-(लोपः)महानिलः।

(७४)व.१-भूकम्पो। (७५)व.१-नीहारो।

(७६)व.१-स्युस्थे वस्थि, व.२-स्युस्ते वा, व.३-स्युस्ते स्य,
क.-स्यु स्वय।

(७७)व.१-दण्डाकारे। (७८)क.,व.३-वधं। (७९)पु.-(लोपः) व्याधितो भयम्। (८०)पु.-(लोपः)रभयं कील। (८१)व.१-विनर्घता,
व.२-ष्वप्यनर्घता।

## ।। सूर्यचाराध्यायः ।। (अध्यायः २)

[८२]रजोप[८३]करणाकारैश्छत्राद्यैरर्क[८४]मण्डले।

[८५]घनैर्वधोऽन्यराजत्वं स्फुलिङ्गैर्जननाशनम्।।२२।।

[८६]मेघैर्विद्धो नृप[८७]वधं करोति रवि[८८]मण्डले।।२३।।

[८९]सितारक्तौ पीत[९०]कृष्णपाटलैर्विप्रपूर्वकान्।

[९१]चमूपो नाश[९२]मायाति ताम्रै[९३]स्तूर्ध्वमुखैः [९४]करैः।।२४।।

पीतैर्नृपात्मजः [९५]श्वेतैः पुरोधा[९६]श्चित्रितैर्जनः।

[९७]रजोधूमैः पिशङ्गैस्तैर्वृष्टिश्चाधोमुखैस्तथा।।२५।।

---

(८२)व.१,२–राजोप। (८३)पु.–करणाकारे। (८४)व.१–मण्डलः।

(८५)व.१–धनैर्। (८६)व.२–मेघ। (८७)व.१–भयं। (८८)पु.–मण्डलः।

(८९)व.१–श्वेतपीतारक्तकृष्ण। (९०)व.२,३ –कृष्णौ, पु.–कृद्धौ।

(९१)व.१–चमूपे। (९२)पु.–मायान्ति। (९३)व.१.३–रूर्ध्व। (९४)पु.–कलैः।

(९५)व.१–स्वेतैः। (९६)व.१–श्चित्रतैः पुनः। (९७)व.२–राजाधूम्रैः।

[९८]उदयास्तमये स्वस्थं सर्वेषां न तथाविधैः।
शिशिरे ताम्रवर्णोऽर्कः शुभदः कपिलोऽपि वा।।२६।।[९९]
ग्रीष्मे [१००]स्वर्णनिभ[१०१]श्चित्रः प्रावृष्यम्बुजगर्भवत्।
शरद्धेमन्तसमये [१०२]लोहिताभः शुभप्रदः।।२७।।
लोकानां [१०३]भयदो ग्रीष्मे [१०४]लोहितः सूर्य[१०५]मण्डलः।
हेमन्ते रोगदः [१०६]पीतः [१०७]कृष्णः प्रावृष्यवृष्टिकृत्।।२८।।
अखण्डलधनुःखण्डनिभो भूपविरोधकृत्।
न वर्षति द्वादशाब्दं [१०८]बर्हिपत्रनिभो[१०९]पमः।।२९।।

---

(९८)पु.-येस्तमेवास्वास्थ्यं, व.१-उदयास्तमथेख्यात्थ्यं,
व.२-उदयास्तमयो स्वास्थ्यं।

(९९)व.१-(अधिकम्)वसन्ते कुंकुमनिभः शिवाय कपिलोऽपि वा।।

(१००)व.१-वर्ण। (१०१)व.१-श्चित्र। (१०२)व.१-भश्च।

(१०३)पु.-(पुनर्लेखनम्)भयदो। (१०४)पु.-रोहित।

(१०५)व.२.३-मण्डलम्। (१०६)पु.-पीतो।

(१०७)पु.-(लोपः)कृष्णः प्रावृष्य। (१०८)व.१-वह्नि। (१०९)व.१-रविः।

[११०]युद्धाय [१११]शशरक्ताभो राजान्यत्वं [११२]विधूपमः।
श्यामोऽर्कः कीट[११३]भयकृद्भयदो भस्मसन्निभः।।३०।।
छिद्राणि मण्डले भानोर्दृश्यन्ते राजनाशनम्।
[११४]कुम्भरूपः क्षुद्भयदः पुरहा तोरणाकृतिः।।३१।।
देशहा छत्ररूपस्तु नृपहा[११५]खण्डमण्डलः।
उल्कादिपतनं सन्ध्याकाले [११६]राजविनाशनम्।।३२।।
[११७]परिविष्टौ [११८]सदार्के द्वे पक्षं पक्षा[११९]र्द्धमेव वा।
युद्धदौ [१२०]राज्यहन्तारावुपग्रहसमन्वितौ।।३३।।

---

(११०)व.१-युद्ध, पु.-युध्वा। (१११)पु.-शरत्कारभो।

(११२)पु.-वधूयसः। (११३)व.१-भयकृद्भयकृद्भस्मसन्निभः।

(११४)व.२-कुम्भस्थ। (११५)व.३-खण्डमण्डले।

(११६)पु.-राजाधिनाशनम्।

(११७)व.१-परिचिष्टौ। (११८)व.१,क.-सदार्केद्र, पु.-सदोऽर्केद।

(११९)पु.-धर्मववा। (१२०)व.१-राज्यहंतारौ उपग्रहसमन्वितौ।

## ।। सूर्यचाराध्यायः ।।                    ( अध्यायः २ )

[१२१]अस्त्राकारै[१२२]र्घनैश्छन्नस्तूदयास्तमितो विधिः।

युद्धदोष्ट्रखराघस्त्रै[१२३]र्ग्रहरूपै[१२३]र्भयप्रदः ।। ३४।।

सतमस्कं पर्वविना [१२४]सूर्ये[१२५]न्दु[१२६]मण्डलं यदि।

[१२७]आतङ्कपावकभयं करोत्यर्घ[१२८]विनाशनम् ।।३५।।

[१२९]ऋतूक्तै[१३०]र्भूतिकिरणै[१३१]र्मण्डलैर्मङ्गलप्रदः।

सम्यग्ज्ञात्वा सूर्यचारं वदेत् फलनिरूपणम् ।।३६।।

[१३२]इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां सूर्यचाराध्यायो द्वितीयः।।२।।

---

(१२१)पु.–अस्त्र्य। (१२२) व.१–(लोप)र्घनैछन्नस्तू। (१२३)व.१–रुद्ररूपै,

क.–ग्रहरूपै, पु.–तूग्ररूपै। (१२४)पु.–सूर्यो। (१२५)पु.–द्वोर्। (१२६)पु.–मण्डले। (१२७)व.१,२–आन्तकं। (१२८)पु.–बिनाशनम्। (१२९)व.१–रुतूक्त। (१३०)व.१,क.–मूर्ति। (१३१)पु.–र्मण्डलै।

(१३२)व.२–इति कश्यपब्रह्मर्षिविरचितायां महासंहितायां सूर्यचारो द्वितीयः।।,

व.१–इति कश्यपसंहितायां सूर्यचाराध्यायः द्वितीयः।।,

व.३, क.–इति कश्यपब्रह्मर्षिविरचितायां सूर्यचाराध्यायो द्वितीयः।।, पु.–इति कश्यपब्रह्मर्षिविरचितायां महासंहितायां सूर्यचारो द्वितीयः।।२।।

## ।। तृतीयोऽध्यायः ।।

## ।। चन्द्रचाराध्यायः ।।

[१]चतुर्दश्यन्तगश्चन्द्रः सर्वदास्त[२]मयं व्रजेत्।

[३]अमावास्यान्त[४]गौ [५]चन्द्र[६]सूर्यौ राश्या[७]दिभिः [८]समौ।।१।।

अन्ते प्रतिपदः सूर्यान्निर्गतश्चोदयं गतः।

शुभदः सर्वजन्तूनां सौम्यशृङ्गो[९]न्नतोदितः।।२।।

विपरीतोदितस्तेषा[१०]मनिष्टायामृतद्युतिः।

अप्राप्य भुक्ते [११]षड्भानि पौष्णभा[१२]द्विधुरीशभात्।।३।।

---

(१)व.२,क.–चतुर्दश्यां। (२)व.१–मनं। (३)पु.–अमावाश्या। (४)व.१–गश्।

(५)व.१–चन्द्रः। (६)व.१–सूर्य। (७)पु.–दिना। (८)व.१–समः।

(९)पु.–ततोदितः, व.१.३–नतोदितः। (१०)व.१–मनिष्टश्चा, व.२–मनिष्ट्याया।

(११)व.२–षड् गानि। (१२)पु.–द्विकरीशलात्, व.१–विदुरीशभात्।

द्वादर्क्षाणि [१३]मध्यस्थे भुङ्क्ते [१४]तान्य [१५]नवेन्द्रभात्।

[१६]अर्धभान्य[१७]निलेन्द्राहिवरु[१८]णेन्द्रान्तकानि च।।४।।[१९]

[२०]बृहद्भान्यदितीन्द्राग्निध्रुवसंज्ञानि [२१]यानि च।

अन्यानि समधिष्ण्यानि [२२]क्रमादेषूदितो विधुः।।५।।

अनर्घमहदर्घत्वं [२३]समर्घत्वं करोति सः।

[२४]तोयविश्वेन्द्रमूलानां याम्यमार्गगतः शशी।।६।।

---

(१३)व.२-मध्यस्था, व.३-मध्यस्थो। (१४)व.३-तान्य।

(१५)व.३-शानचन्द्रभात्। पु.-नचन्द्रभात्।

(१६)क.-अर्यभान्य, व.२-जघन्यान्य।

(१७)पु.-निलार्द्रा। (१८)व.२,क.-चतुणेशान्तकानि च।

(१९) व.१-(पाठान्तरम्) मध्यस्थौ द्वादशार्क्षाणि अतीत्य नववासरात्।

अध्यर्धभानिलेन्द्राहिवरुणो शान्तिकानि

षट्।।४।।

(२०)व.२-ब्रृहद् जघ्न्युदितीन्द्राग्नि, पु.-बृहत्पुनर्वस्वेन्द्राग्नी।

(२१)व.१.२-षट्भानि च। (२२)व.१-क्रमादिषूदितो।

(२३)पु.-समतो यदि। (२४)पु.-(त्रुटितम्) पूर्वे—-मूलानां।

वह्निप्रदो जलचरोद्यानसर्वविनाशकृत्।
मैत्रद्विदैवयोर्याम्यमार्गवर्ती च पापकृत्।।७।।
धातृपैतृभयो[२५]र्मध्यगतो दुर्भिक्षकृच्छशी।
[२६]शुभदोऽखिलधिष्ण्यानां चन्द्रो [२७]याम्यगतो शुभः।।८।।
वृद्धिः शुक्ले यवाकारे हानिः पिपीलिका[२८]निभः।
अर्घवृद्धिर्विशालेन्द्राववविशालेऽर्घनाशनम्।।९।।
अधोमुखे [२९]राजहानिः [३०]कलहं दण्ड[३१]सन्निभः।
हत[३२] शृङ्गः कुजे[३३]वेन्दुर्हन्ति प्रत्यन्तभूमिपान्।।१०।।

---

(२५)पु.–र्मध्यन्ततो।, व.१–श्चान्तवर्तो।, व.२,क.–मध्येगतो।

(२६)व.१–शुभदानिल, व.२–शुभदाखिल।

(२७)व.२–सौम्ययाम्यगतो।, क.–सौम्ये याम्ये गते।

(२८)व.३–निभे। (२९)व.१–राज्यहानिः। (३०)व.१–कलहो।

(३१)व.१.२,क.–सन्निभे। (३२)व.२–न्त्य, व.१–सृ, व.३–हतः।

(३३)पु.–कुजेन्नेदुः।

## ।। चन्द्रचाराध्यायः ।।                    (अध्यायः ३)

गुरुणा [३४]श्रेष्ठनृपतिं शुक्रे[३५]णाल्पानृपांस्तथा।

दुर्भिक्षवृष्टिभयकृद् हतशृङ्गो बुधेनसः ।।११ ।।

सौरिणा [३६]चास्त्रभयकृत् [३७]कृष्णेऽल्पफलदः [३८]शशी।

[३९]वर्धमाने सिते पक्षे कृष्णे पक्षे क्षयं [४०]गतः ।।१२ ।।

[४१]विप्रभूमिपयोर्वृद्धि[४२]र्हीने हानिः समे समम्।

[४३]प्रालेयकुन्दकुमुदमुक्तस्फटिकसन्निभः।

मण्डलः सर्वजन्तूनां क्षेमा[४४]रोग्यसुभिक्षकृत्।।१३ ।।

[४५]इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां चन्द्रचाराध्यायस्तृतीयः।।३।।

---

(३४)व.२–श्रेष्ट। (३५)व.२–ल्पान्। (३६)पु.–वास्त्र, व.२–शस्त्र।

(३७)व.१–कृष्ण। (३८)व.१.२.३,क.–सिते। (३९)पु.–तनुवृद्धिः।

(४०)व.१.२.३,क.–गते। (४१)व.२, पु.–विप्रभूधिपयो। (४२)पु.–दिने।

(४३)पु.–कुलप्रालेयकुमुद। (४४)व.३–रोग्यं।

(४५)पु.–इति चन्द्रचारस्तृतीयः।।, व.१–इति चन्द्रचारः।।,

व.२–इति चन्द्रचारस्तृतीयः।।, व.३, क.–इति चन्द्रचाराध्यायस्तृतीयः।।

## ।। चतुर्थोऽध्यायः ।।

## ।। भौमचाराध्यायः ।।

अथातः सम्प्रवक्ष्यामि कुजचारमनुत्तमम्।
यतः शुभाशुभं तेन चारेणाखिलदेहिनाम्।।१।।
नवसप्ताष्टमर्क्षेषु स्वोदयाद्वक्रिते कुजे।
तद्वक्रमुष्ण[१]संज्ञं तु तदा[२]मयाग्निभयप्रदम्।।२।।
द्वादशैकादशे धिष्ण्ये दशमे वा प्रतीपगे।
वक्र[३]मश्वमुखं नाम [४]रसवृद्धि[५]विनाशनम्।।३।।
[६]धिष्ण्ये त्रयोदशे भौमे वक्रिते वा चतुर्दशे।
तद्वक्रं व्यालसंज्ञं तदहिभीति[७]मवर्षणम्।।४।।
षोडशे[८]ऽर्क्षेऽथ वा पञ्चदशे [९]तद्रुधिराननम्।
सुभिक्षकृद् व्याधिभयं तद्वक्रं देहधारिणाम्।।५।।

---

(१)व.१-सुक्ष। (२)पु.-तुक्ष। (३)क.-मस्तु, पु.-मश्र्व्यु।
(४)व.१.३,क.-सस्यवृष्टि। (५)पु.-विनाशकृत्। (६)पु.-सक्षे।
(७)व.२.३,क.-दमर्घदम्। (८)पु.-(लोपः)ऽर्क्षेऽथ। (९) पु.-तद्रुविराननम्।

## ।। भौमचाराध्यायः ।।             (अध्यायः४)

धिष्ण्येऽष्टादशे सप्तदशे वक्रं गते च तत्।

[१०]निस्त्रिंशमुसलं नाम दस्युशस्त्रार्घभीतिदम्[११] ।।६।।

[१२]फाल्गुन्यामुदयं कृत्वा [१३]वक्री स्याद्विश्वदैवते।

[१४]भाद्राजापादस्तमित[१५]स्त्रैलोक्यं तत्र पीड्यते।।७।।

श्रवणे ह्युदितो भौमः पुष्ये वक्रं गतो यदि।

मूर्धाभिषिक्तराजानो विनश्येयुः परस्परम्।।८।।

यद्दिगभ्युदितो भौमस्तद्दिग्राज्ञां भयप्रदः।

मघायां विचरेद्भौमस्तस्यामेव प्रतीपगः।।९।।

[१६]शस्त्रानावृष्टिभयदः पाण्ड्यदेशविनाशकृत्।

पितृधातृ[१७]द्विदैवर्क्षयोगतारां भिनत्ति चेत्।।१०।।

---

(१०)पु.-निश्चितं, व.१-निश्रवाम। (११) व.१-दस्युशास्त्रार्थभीतिदम्।

(१२)व.२-फल्गुनो, व.३-फल्गुन्योरुदयं। (१३) क.-वक्रः।

(१४) क.-भाद्रे यजायस्तर्मित। (१५)व.२-त्रैलोक्यस्तत्र।

(१६)पु.-शस्त्रीनावृष्टि।

(१७)पु.-दैवर्क्षा।

## ।। भौमचाराध्यायः ।।            (अध्यायः ४)

तदा करोति भूसूनुर्दुर्भिक्षं कलहागमम्।

नैर्ऋतश्रवणेन्द्रर्क्षरोहिणेषूत्तरासु च।।११।।

चरन्नवृष्टिदो भौमो रोहिणीयाम्यगोऽपि च।

शुभदः सर्वधिष्ण्यानामुदग्यायी धरासुतः।।१२।।

याम्यगोऽनिष्टफलदो भेदे [१८]भेदकरो नृणाम्।

प्रवालकिं[१९]शुकाशो[२०]कतप्तताम्रनिभः कुजः।।१३।।

[२१]विपुलो [२२]विमलः [२३]पद्मरागमूर्तिः शुभप्रदः।।१४।।

[२४]इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां भौमचाराध्यायश्चतुर्थः।।४।।

---

(१८)पु.-भेदोऽनिष्टफलदो। (१९)पु.-शुकाशे (२०)पु.-कतल्लता।

(२१)पु.-विप्रले। (२२)निर्मलं। (२३)पु.-यग्नरागमूर्तिः।

(२४)पु.-इति भौमाचारश्चतुर्थः।।,

क.,व.३-इति भौमचाराध्यायश्चतुर्थः।।,

व.२-भौमचारश्चतुर्थः।।,

व.१-इति भौमचारः।।

## ।। पञ्चमोऽध्यायः ।।

## ।। बुधचाराध्यायः ।।

अथातः सम्प्रवक्ष्यामि [1]बुधचारं [2]समासतः।

उदयं न व्रजेत् सौम्यो विनोत्पातेन सर्वदा।।१।।

आतङ्कावृष्टि[3]सङ्ग्रामदुर्भिक्षानलतो भयम्।

[4]विष्णुभद्वयविश्वेन्दुधातृभेषु [5]चरन्बुधः।

भिनत्ति योगतारां [6]तामवृष्टिव्याधिभीतिकृत्।।२।।

आर्द्रादिपितृभान्तेषु दृश्यते यदि चन्द्रजः।

आमयावृष्टिदुर्भिक्षराजविड्वरभीतिकृत्।।३।।

विचरन्सार्पनक्षत्रा[7]त्षड्ऋक्षेष्विन्दुनन्दनः।

नुणां [8]सुभिक्ष[9]मारोग्यं करोति पशुनाशनम्।।४।।

---

(१)व.१-बुधवारं। (२)क.-मनुत्तमम्। (३)व.१-युद्ध।

(४)व.१.२.३-विष्पु, पु.-विक्षुद्वितय। (५)पु.-चरे द्बुधः। (६)पु.-तान।

(७)व.१-त्स्वमृक्षे, पु.-ह्यड्ऋक्षे। (८)क.-सुभिक्षं। (९)व.२-चारोग्यं।

[१०]सञ्चरन्नर्यमाग्नेय[११]याम्याहिर्बुध्न्यभेषु च।
धातु[१२]क्षोभप्रदः सर्वजन्तूनामिन्दुनन्दनः।।५।।

[१३]रेवतीदस्र[१४]नैर्ऋत्यवारुणर्क्षेषु सञ्चरन्।
भिष[१५]ग्वाणिज्यतुरगवृत्तीनां [१६]ज्ञो शुभप्रदः।।६।।

[१७]चरन्पूर्वात्रये तेषां [१८]योगतारां भिनत्ति चेत्।
[१९]वह्निक्षुच्छस्त्रचौरेभ्यो भयदश्चन्द्रनन्दनः।।७।।

वायव्यधातृ[२०]पुष्याग्निधिष्ण्येषु प्राकृता [२१]गतिः।
पितृ[२२]सार्पाम्बुरौद्रेषु भेषु मिश्रा[२३]ह्वया गतिः।।८।।

---

(१०)पु.-संवत्सरं, व.१-सञ्चरत्रयमाग्नेय। (११)पु.-याम्वा। (१२)व.२-तोभ।

(१३) व.१-रेवतीदुष्ट। (१४)पु.-नैर्ऋत्यां, क.-नैर्ऋत्या।

(१५)व.२-वणिज्य, व.१-तुरङ्गगवात्राणां। (१६)व.१-(लोपः)ज्ञो।

(१७)पु.-चरत्। (१८)पु.-योगतारा।

(१९)पु.-वह्निकृच्छस्त्र, व.१-दुर्भिक्षगेस्त्रयैरभ्यो।

(२०)व.१-यामाग्नि, व.२-याज्या। (२१)पु.-कृतिः।

(२२)व.१-सार्पेन्दु , क.-सार्पाह्वि। (२३)व.१-दया, पु.-र्कया, व.२-रुधो।

[२४]भाग्यार्यमेज्यादितिषु संक्षिप्ता सा [२५]गतिस्तदा।
[२६]अहिर्बुध्न्याजपादेन्द्रदस्त्रभेष्व[२७]तिदारुणा।।९।।
[२८]योगोऽन्तिको गतिः [२९]पौष्णविश्वनैर्ऋत्य[३०]धातृषु।
घोरा [३१]गतिस्त्वाष्ट्रविष्णुवसुदारुणभेषु च।।१०।।
[३२]मित्रेन्द्राग्नि[३३]धनाधीशभेषु [३४]पापाह्वया गतिः।
[३५]प्राकृतायां [३६]गते [३७]सस्यावृद्धिर्वृष्टिश्च रोगकृत्।
[३८]मिश्रसंक्षिप्रयोर्मध्य[३९]स्ततो ज्ञो [४०]स्यात्त्वनिष्टदः।। ११।।

---

(२४)व.१–भाग्यार्यमाजादित्येषु। (२५)व.१–गतिस्तथा।

(२६)व.१–श्रमेष्वतिदारुणा। (२७)पु.–दत्वी, क.–भिभीतीदारुणा।

(२८)व.१–यो गतिः ह्वा गतिः, व.२–या गतिः सा गतिः, व.३–योगोऽतिको गतिः। (२९)पु.–पौष्णा। (३०)व.१.२–वारिषु, पु.–धारिषु।

(३१)पु.–गतिस्त्वष्टृ विष्णु, व.३–ष्ट्रब्दे। (३२)पु.–मित्रेद्वाग्नि।

(३३)व.१–द्विनादीश। (३४) पु.–पापाद्कया, व.१–पभ, व.२–परुपा।

(३५)क.–प्राकृताया। (३६)पु.–गतो, व.३–गतः, क.–गतेः। ।

(३७)व.१.३–सस्य। (३८)व.२–मित्रसंक्षिप्र, व.३–मिश्र संक्षिप्त, व.१–मिश्र सांक्षिप्र।

(३९)व.१.२–ध्ये फलदो त्यासुनिष्टदः। (४०)व.३–स्याद्।

## ।। बुधचाराध्यायः ।।                (अध्यायः५)

आषाढपौषवैशाख[४१]श्रावणेऽभ्युदितो बुधः।

अनिष्टफलदो नुणामितरेषु शुभप्रदः ।।१२।।

[४२]इषोर्जमासयो[४३]र्वह्निशस्त्रदुर्भिक्षकारकः ।।१३।।

वज्रमौक्तिककुन्देन्दुकुमुदस्फटिकोपमः।

[४४]सप्ततारानिभः सौम्यो जन्तूनामभयप्रदः ।।१४।।

[४५]इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

बुधचाराध्यायः पञ्चमः ।।   ।।५।।

---

(४१)व.१–श्रवणे। (४२)व.१–इषोर्ध। (४३)व.१–कृधि।

(४४)व.१–तप्तताम, व.२–समतारा।

(४५)पु.–इति बुधचारः पञ्चमः ।।,

व.१–इति कश्यपसंहितायां बुधचाराध्यायः पञ्चमः ।।,

व.२–इति बुधचारः पञ्चमः ।।,

व.३, क.–इति बुधचाराध्यायः पञ्चमः ।।

## ।। षष्ठोऽध्यायः ।।

## ।। गुरुचाराध्यायः ।।

अथातः सम्प्रवक्ष्यामि गुरुचारमनुत्तमम्।

अनेन गुरुचारेण प्रभवाद्यब्दसम्भवः ।।१।।

स्यादूर्जादिषु मासेषु वह्निभा[१]दिद्वयं द्वयम्।

[२]उपान्त्यपञ्चमासेषु नक्षत्राणां त्रयं त्रयम् ।।२।।

यस्मिन्नभ्युदितो जीवस्तन्नक्ष[३]त्राख्यवत्स[४]रः।

स्यात्पीडा कार्त्तिके वर्षे वह्निगोरथजीवि[५]नाम्।

[६]शस्त्राग्निक्षुद्भयं वृद्धिः [७]पुष्पको [८]शुभजीविनाम् ।।३।।

सौम्यवर्षे [९]त्वनावृष्टिः सस्यहानिरनेकधा।

राजानो युद्ध[१०]निरताश्चा[११]न्योन्यवधकाङ्[१२]क्षिणः ।।४।।

---

(१)व.१,क.–द्वितयं। (२)व.१–उपात्यं पमांसश्रुत।

(३)व.१–त्राख्यं स वत्सरः। (४)व.२–रे। (५)व.१–नम्।

(६)पु.–शस्त्राप्तिर्दुक्त। (७)व.१–पुष्यकौ, व.२–पुष्यको।

(८)व.३–शुम्भ, पु.–शम्भु। (९)व.२–विना।

(१०)व.१–निरत्व। (११)व.१–न्योन्यं। (१२)व.१–क्षणा।

[१३]पौषेऽब्दे सुखिनः सर्वे द्विजाश्चाध्वरतत्पराः।

[१४]निवृत्तवैरा राजानो बहुस[१५]स्यार्घवृष्टयः।।५।।

माघेऽब्दे [१६]जन्तवः सर्वे गुरुपूजनतत्पराः।

क्षेमं सुभिक्षमारोग्यं वृष्टिः कर्ष[१७]णसम्मता[१८]।।६।।

फाल्गुनेऽब्दे [१९]चौर[२०]भीतिः स्त्रीणां [२१]दौर्भाग्यता भृशम्।

[२२]क्वचिद्वृष्टिः क्वचित्सस्यं क्वचि[२३]द्भीति[२४]र्नतः क्वचित्।।७।।

[२५]चैत्रेऽब्दे भूभुजाः स्वस्थाः [२६]स्त्रीणां [२७]चाल्पफलप्रदाः।

सुदुर्लभं चोत्तमान्नं प्रजानां व्याधितो भयम्।।८।।

---

(१३)व.१–पुष्ये तु। (१४)व.१–निकृत्तवैरा।(१५)व.१–स्थार्द्धवृष्टयः।

(१६)व.१–जन्तयः। (१७)क.,व.३–कर्षक। (१८)व.१–सम्मताः।

(१९)पु.–चोर। (२०)व.१–भयं। (२१)पु.–दौर्भाग्य वा।

(२२)क.,व.२.३–क्वचित्सस्यं, व.१–क्वचिद्धान्यं। (२३)व.१–दीति।

(२४)व.१–न तत् क्वचित्। (२५)पु.–चैत्राब्दे तु भुजा।

(२६)व.१.३–क्षोणी।

(२७)पु.–वाल्प।

वैशा[२८]खेऽब्दे तु राजानो धर्ममार्गगता[२९]खिलाः।
[३०]क्षेमं सुभिक्षमारोग्यं द्विजाश्चाध्वरतत्पराः।।९।।
[३१]ज्येष्ठेऽब्दे धर्ममार्गस्थाः [३२]पीडिता[३३]श्च नृपाः परैः।
बहुगुल्मलतावृद्धि[३४]र्भवेत्सस्यविनाशनम्।।१०।।
[३५]आषाढेऽब्दे तु राजानः सर्वदा कलहोत्सुकाः।
[३६]क्वचिदीतिः क्वचि[३७]द्वृद्धिः क्वचिद्वृष्टिर्नतः [३८]क्वचित्।।११।।

---

(२८)पु.-खाब्दे। (२९)व.१-रता। (३०)व.१.३-सुभिक्षं क्षेममारोग्यं।

(३१)पु.-ज्येष्ठाब्दे। (३२)पु.-पीडिताः।

(३३)पु.-सनृपाः परैः, व.१-श्च नृपाः प्रथैः, व.२-सवृथा परैः,
व.३,क.-सकृपा परैः। (३४)व.३-(लोपः)र्भवेत्सस्यविनाशनम्।

(३५)व.२-आषाढाब्दे। (३६)व.१-क्ववित्विति। (३७)व.१-द्धीतिः।

(३८)व.१-ना तत्।

श्रावणेऽब्दे धरा भाति [३९]त्रिदशस्यर्द्धिमानवैः।
[४०]मनसोऽ[४१]भीष्ट[४२]वृद्ध्यर्थं फलपुष्प[४३]लतादिभिः।।१२।।
अब्दे भाद्रपदे वृष्टिः क्षेमारोग्यं क्वचित्क्वचित्।
पूर्वसस्यसमृद्धिः स्यान्नाशं या[४४]त्यपरं फलम्।।१३।।
अब्दे [४५]चाश्वियुजेऽत्यर्थं सुखिनः सर्वजन्तवः।
मध्यमं पूर्व[४६]सस्यं यत्सम्पूर्ण[४७]मपरं फलम्।।१४।।
सौम्य[४८]मार्गगतो [४९]भानां गुरुर्नृणां सुभिक्षकृत्।
अनर्घं याम्यगस्तेषां मध्यवर्ती तु मध्यमः।।१५।।

---

(३९)पु.–त्रिदशम्यर्द्धिमानवे, व.२.३–त्रिदसस्यर्द्धिमानवैः,
व.१–त्रिदसस्वर्धमानवैः।
(४०)पु.–मनसा। (४१)क.,व.३–भीष्टष्ट्य। (४२)व.१–वृद्ध्यर्क।
(४३)क.–करादिभिः, पु.–ध्वरादिभिः।
(४४)व.१–ह्यपरं। (४५)पु.–वाश्वयुजे, व.२–वाश्वयुते, व.१–पश्वियुजे।
(४६)पु.–(लोपः)सस्यं यत्। (४७)पु.,व.३–मध्यमं फलम्,
व.२–मध्यमं भवेत्। (४८)पु.–मार्गतो। (४९)व.३–भानौ।

।। गुरुचाराध्यायः।।                (अध्यायः६)

धूमाग्निश्याम[५०]रुधिरपीताभः क्रमशो गुरुः।
चौराग्न्यामयधात्रीशकलहानर्घभीतिकृत्।।१६।।
[५१]भयकृत्सर्वजन्तूनां [५२]धूसराभः [५३]सुरार्चितः।
हन्ति [५४]राष्ट्रं दिवा[५५]वृष्टिस्त्वथवा तदधी[५६]श्वरम्।।१७।।
[५७]भवेत्संवत्सर[५८]तनु[५९]र्भद्वयं वह्निधिष्ण्यतः।
[६०]आषाढद्वितयं नाभि[६१]र्हृदार्द्राकुसुमं [६२]तथा।।१८।।
शरीरे [६३]क्रूरखेटेन [६४]पीडितोऽग्न्यनिलाद्भयम्।
नाभिदेशे त्वनावृष्टिः [६५]पुष्ये मूलफलक्षयः।
हृदये [६६]सर्वनाशः स्याच्छुभखेटेन शोभनम्।।१९।।

---

(५०)व.३-मधुर। (५१)पु.-सयकृत। (५२)पु.-धूसराभो।

(५३)व.१-ऽमरार्चिताः। (५४)व.२-राज्यं। (५५)व.२-वृष्ट्या, व.१.३-दृष्टस्। (५६)पु.-श्वरः। (५७)पु.-भवे संवत्सर, व.१-भवेत्संवत्सरे। (५८)व.१-तत्तु।

(५९)व.३-र्भाद्वयं। (६०)व.१-आषाढा। (६१)पु.-द्रदार्द्राकसमं।

(६२)व.१-तद्या, व.२-मघा। (६३)व.१-क्रूरपेटेन च।

(६४)व.१-पीडितान्नतो भयम्, क.-पीडितोग्न्यं दुतोभयं,

व.३-पीडितोग्न्यम्बुतोभयम्। (६५)व.१-पुष्पे। (६६)पु.-सस्यनाशस्या।

[६७]मेषस्थिते देव[६८]पूज्ये तदा [६०]मेघविनाशनम्।
[७०]ईतिभीतिश्चोर[७१]भयं तथापि सुखिनो जनाः।।२०।।
[७२]वृषराशिगते जीवे पशुस्त्रीशिशुनाशनम्।
सस्यहानिर्मध्यवृष्टिर्नृपाणां दारुणं [७३]भयम्।।२१।।
[७४]ईतेभीति[७५]र्विप्रपीडा सततं नृप[७६]विग्रहम्।
तथापि मोदते [७७]लोके सुरेज्ये मिथुनस्थिते।।२२।।
कर्किणीज्येऽखिला गावः प्रभूतपयसो जनाः।
[७८]मोदन्ते स्वजनैः सार्धं राजानः स्युर्विवैरिणः।।२३।।

---

(६७)पु.–मेषस्थेर्वे। (६८)पु.–पूज्य। (६९)व.१–मेष।

(७०)व.१–अतिभीति। (७१)पु.–लयं। (७२)पु.–उक्ष, व.१–उत्त।

(७३)पु.–रणम्। (७४)व.१–अति।

(७५)पु.–र्विप्रप्रपीडा। (७६)व.१–विग्रह।

(७७)व.१,क.–लोकः।

(७८)व.१–(लोपः)क,ड (श्लो.क्र.–२३ उत्तरार्ध)।

## ।। गुरुचाराध्यायः।। (अध्यायः६)

जीवे [७९]मृगपतिस्थेस्यु[८०]र्युद्धे भूपा [८१]लयं ययुः।
सुवृष्टिः [८२]व्याधिभीतिश्च [८३]निश्चये [८४]विप्रसज्जनाः।।२४।।
[८५]यदा कन्यागते जीवे [८६]हृष्टाः पुष्टाः धरासुराः।
[८७]अध्वरे निरताः सर्वे[८८] सदा स्वस्थाः क्षितीश्वराः।।२५।।
[८९]तुलामारोहते जीवे तथैवाखिलवस्तुनि।
[९०]तथापि धात्री सम्पूर्णा धनधान्यार्घवृष्टिभिः।।२६।।
[९१]कीटकेज्ये कीटभयं युद्धे जनपदक्षयः।
[९२]क्षामण्डारमातङ्क[९३]मल्पसस्यार्घवृष्टिभिः।।२७।।

---

(७९)व.१-मृगपते। (८०)व.२-युद्ध। (८१)व.२-समक्षयम्।

(८२)पु.-काला, व.२-कालि। (८३)पु.-निस्वाये, व.१-निश्चयं।

(८४)पु.-विप्रजनाः। (८५)व.२-यदा पार्थेनभस्थेज्यो, क.,व.३-यदा पार्थो नभस्थेज्ये। (८६)व.२,क.-पृष्टा वृष्टिधरा नराः, व.३-पृष्टावृष्टिर्धरानराः। (८७)पु.-अध्वरा। (८८)पु.-सर, व.३-सस्वा।

(८९)व.१-आरोहति तुलां, व.३-तुलामारोहिते। (९०)व.१-तथाति। (९१)पु.-काटकेज्ये, व.१-किटस्थेज्ये। (९२)व.१-क्षामण्डामरभीतं सततं। (९३)पु.-मल्पस्यार्घ।

पीडात्युग्रा त्वीतिभीतिर्युद्धे निस्वाः क्षितीश्वराः।
वसुधा मन्दफलदा तौक्षिकस्थे[९४]ऽमरार्चिते।।२८।।
विवैरिणो [९५]धनाधीशा धात्री [९६]पूर्णफलप्रदा।
[९७]वीतरोगभयाः सर्वे [९८]मृगगे [९९]सुरपूजिते।।२९।।
[१००]हृदयानन्दिनी धात्री [१०१]फलशाली सुवृष्टिभिः।
[१०२]अजातशत्रवः सर्वे [१०३]कुम्भगे देवपूजिते।।३०।।
[१०४]बहुरागाकुला धात्री बहुधान्यार्घ[१०५]संयुता।
विवैरिणो [१०६]धराधीशा सुरेज्ये [१०७]मीनराशिगे।।३१।।[१०८]

[१०९]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां
गुरुचाराध्यायः षष्ठः।। ।।६।।

---

(९४)व.१-देवपूजिते। (९५)व.१-धरा। (९६)पु.-पूर्णा।
(९७)व.१-वीतरागभयाः, पु.-वीतरोगभयः। (९८)व.१-चापगे।
(९९)पु.-देवपूजिते। (१००)पु.-हृदयानन्दना। (१०१)पु.-फलीक्ष्मा।
(१०२)पु.-अजातशस्त्रकः। (१०३)व.१-मकरे। (१०४)व.१,क.-
बहुरोगा।
(१०५)व.१-संयुतः।(१०६)व.२-धनाधीशा। (१०७)व.१-कुम्भराशिगे।
(१०८)व.१-(अधिकम्) वर्षमध्ये यदा जीवः स्पृशेद्राशित्रयं यदि।
तस्मिन्वर्षे तु दुर्भिक्षं राज्यभ्रंशो भवद्ध्रुवम्।।
(१०९)पु.,व.२-।। इति गुरुचारः षष्ठः।।,
व.१-।। इति कश्यपसंहितायां गुरुचारः षष्ठः।।,
व.३,क.-।। इति गुरुचाराध्यायः षष्ठः।।

## ।। सप्तमोऽध्यायः ।।

## ।। शुक्रचाराध्यायः ।।

[१]त्रित्रिवीथ्या[२]त्मका [३]मार्गास्त्रयः [४]प्रागग्रगा भृगोः ।

त्रिभिस्त्रिभिर्दस्त्रभाद्यैर्या [५]स्यात्ता नववीथयः ।।१ ।।

[६]नागमैरावतप्र[७]ख्यवृष[८]धेनुनराह्वयाः ।

मृगाजदहनाः सौम्य[९]मार्ग[१०]स्योत्तरपार्श्वतः ।।२ ।।

सौम्यवीथित्रये शुक्रश्चर[११]न्नखिलदेहिनाम् ।

आनन्दकृ[१२]त्समं [१३]सस्यं धनधान्यार्घवृष्टिभिः ।।३ ।।

[१४]मध्यवीथित्रये [१५]शुक्रश्चरन्मध्यफलप्रदः ।

---

(१)व.१–त्रिधा। (२)व.१–त्मको। (३)व.१–मार्गोयत्र। (४)क.–प्राग्रहगा।

(५)व.१–याम्या ता, व.३–याम्यान्ता, क.–याम्यन्त।

(६)पु.,क.–नागेभंरावत। (७)व.३–ख्याश्च। (८)व.२–धेनुजरद्रवाः,
व.३–वृसभगोजरद्गवाः, पु.–वृषभेनजगद्गवाः। (९)पु.–भार्ग।

(१०)पु.–स्योत्तरपूर्वतः, क.–मार्गस्थानरपार्श्वतः। (११)व.१–न्निखिल।
(१२)व.१–(लोपः)समं। (१३)व.३–सस्य।

(१४)व.१–(पुनरोक्तिः)श्लोकः क्र.–४क तः श्लोकः क्र.५ब।

(१५)व.१–पश्चिमे मधूश्चरन्मध्यत्वप्रदः।

याम्यवीथि[१६]त्रयेऽत्यन्तदुर्भिक्षावृष्टियुद्धदः।।४।।

[१७]आर्द्रादिषु[१८] [१९]नवर्क्षेषु चरन्दिगुभयाश्रितः।

[२०]क्षेमं सुभिक्षकृद्भूपाश्चान्योन्यसमरोत्सुकाः।।५।।

[२१]पूर्वे स्वातित्रये [२२]सम्यक् पश्चिमे मघपञ्चके।

भृगुः कुर्यादनावृष्टिं विपरीते प्रवर्षणम्।।६।।

ज्येष्ठादिषु नवर्क्षेषु [२३]सुभिक्षारोग्यवृष्टिकृत्।

[२४]दुर्भिक्षदो [२५]याम्ययायी सौम्ययायी सुभिक्षदः।।७।।

बुधः शुक्रसमीपस्थः कुर्यादेका[२६]र्णवां महीम्।

तयोर्मध्यगतो भानुः समुद्रमपि शोषयेत्।।८।।

---

(१६)क.–ष्टये। (१७)व.१–अश्वीदिषुनवर्क्षेषुयस्यांदिशि भृगोः सुतः।

(१८)पु.–आवधिषु। (१९)व.२–चवर्क्षेषु।

(२०)व.१–क्षेमदः शुभकृद्भूपाश्चा, क.–क्षेम। (२१)व.१–पूर्व।

(२२)व.१–शुक्रः।

(२३)क.–सुवृष्टया। (२४)व.१.३,क.–दुर्भिक्षदा। (२५)व.२–यायीयायी।

(२६)व.३–र्णवी।

कृष्णाष्टम्यां [२७]चतुर्दश्याममायामथवा सितः।
उदयास्तमयं याति तदा वारि[२८]मयी क्षितिः।।९।।
प्रा[२९]क्पश्चिमस्थौ [३०]शुक्रज्यावन्योन्य[३१]समसप्तगौ।
दुर्भिक्षा[३२]वृष्टिदौ स्यातां पशुनामतिभीतिदौ।।१०।।
[३३]शुक्रस्याग्रे[३४] सरे [३५]खेटे भवन्ति बहवो यदि।
दुर्भिक्षा[३६]वृष्टिपवन[३७]वह्निभूपाहवप्रदाः।।११।।
एकराशिगताः खेटाश्चत्वारः पञ्च वा यदि।
बलाबलवशात्तेऽपि भूपानामाहवप्रदाः।।१२।।
[३८]सममेको वक्रगतो [३९]वक्रितौ [४०]द्वावनर्थकौ।।१३।।

---

(२७)व.१–अमायां वा चतुर्थ्यां भृगोनन्दनः।

(२८)व.२.३–मतिः क्षितीः, क.–मणिवृतः। (२९)पु.–पश्चिमस्थे।

(३०)व.१–शुक्राज्यापरस्परं। (३१)व.१–सदामगौ।
(३२)व.१.२.३,क.–भयदौ। (३३)शुक्रस्याग्र। (३४)व.१.२.३–
शराः,क.–सदाखेटा।

(३५)व.१.२,क.–खेटाः। (३६)पु.–वृष्टिपव। (३७)व.१–वृद्धि।
(३८)व.२–समेमेको। (३९)व.१–वक्रतो। (४०)व.१.२–द्वावनर्थदौ।

त्रयो नृपाहवकराश्चत्वारो हन्ति भूमिपान्।

पञ्चग्रहा [४१]वक्रगास्ते [४२]राजाराष्ट्र[४३]विनाशकाः ।। १४ ।।

[४४]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

शुक्रचाराध्यायः सप्तमः ।।७।।

---

(४१)व.१–वक्रगताः। (४२)व.२–राज्यष्ट्र। (४३)पु.–विनाशदाः।

(४४)व.२, क.–शुक्रचारः सप्तमः ।।,

व.१–इति कश्यपसंहितायं शुक्रचाराः सप्तमः ।।,

व.३–इति शुक्रचाराध्यायस्सप्तमः ।।

## ।। अष्टमोऽध्यायः ।।

## ।। शनिचाराध्यायः ।।

अथातः सम्प्रवक्ष्यामि [१]शनिचा[२]रं तथैव च ।।१ ।।[३]

भाग्यश्रवणहस्तार्द्राभरणीवायुभेषु च।

[४]चरन् [५]शनैश्चरो नृणां सुभिक्षारोग्यवृष्टिकृत् ।।२ ।।[६]

[७]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

शनिचाराध्यायोऽष्टमः ।।८ ।।

---

(१)व.२-शनिवारं। (२)व.३-रांस्तथैव च।

(३)व.१-(लोपः)श्लोकः क्र.१-अ,ब।

(४) क.,व.३-शनैश्चरश्चरन्नृणां, पु.-(लोपः) चरन्।

(५)व.२-शनैश्चरे। (६)व.१-(अधिकः)

अनर्घवृष्टिकृत्सौरिः पौष्णमित्रेन्द्रभेषु च।

मूलाहिर्बुध्न्ययोर्मध्ये भूपानामाहवप्रदः ।।३ ।।

अपरेषु च धिष्ण्येषु मध्यसस्यार्घवृष्टयः।

(७) क.,व.१.३-इति शनिचारोऽष्टमः ।।, व.२-शनिवारोऽष्टमः ।।,

पु.-शनिचारोऽष्टमः ।।

## ।। नवमोऽध्यायः।।

## ।। राहुचाराध्यायः।।

[१]छिन्नोऽपि विष्णुचक्रेण सुधामयशिरस्तमः।

केशवस्य वरेणासौ तथाऽपि ग्रहतां गतः।।१।।

धातुर्वरेण्य[२]सूर्येन्दू तुदते सर्वपर्वणि।

[३]तयोर्दूरं गतो [४]राहुर्विक्षेपा[५]वनतेर्वशात्।।२।।

रवीन्द्वोर्ग्रहणं सम्यक् [६]षष्ठमासेऽपि शोधयेत्।

कल्पादितः क्रमाज्ज्ञेयाः [७]पर्वेशाः सप्त देवताः।।३।।

[८]द्विगुणी[९]कृतकल्पाब्दाः [१०]सप्त भक्ताश्च शेषतः।[११]

[१२]धातुश्चन्द्रेन्द्रयक्षेश[१३]कलाधीशानलान्तकाः।।४।।

---

(१)व.१–छिन्नोहि। (२)व.१–सूर्येंद्वोरुद्यति। (३)व.१–तयोर्दुर। (४)पु.–राहुवि।

(५)क.–च नतेर्। (६)व.१–षण्मासेऽपि विशोधयेत्। (७)व.२–पर्वशो।

(८)पु.–द्विगुणा। (९)व.१–कृत्या। (१०)व.१–तप्ताप्तास्तत्र।

(११)व.१–(अधिकः) श्लोकः क्र. ४ब पश्चात्–

तद्वदेव फलं चान्द्रे बुधपीडा च पर्वणि।

(१२)क.,व.१–धातृचन्द्रपक्षे, व.२–धातृचन्द्रे। (१३)व.१.२.३–जलाधी।

[१४]द्विजगोपशु[१५]सस्यानां वृद्धिः स्याद्धा[१६]तृपर्वणि।

[१७]भूपाहवं सस्यहानिः प्रजापीडेन्द्रपर्वणि।।५।।

कौबेरे धान्यवृद्धिः स्याद् धनीनां धननाशनम्।

वारुणे सर्वजन्तूनां [१८]क्षेम[१९]राज्ञामशोभनम्।।६।।

प्रजाक्षेमं सस्यवृद्धिर्वृष्टि[२०]हौंताशपर्वणि।

[२१]याम्यपर्वण्यनावृष्टिर्दुर्भिक्षकलहागमः।।७।।

वेलाहीने गर्भभयमतिवेला[२२]र्घनाशनम्।

एकमासेन्दु[२३]तिग्मांशोरुपरागद्वयं यदि।।८।।

[२४]राजाहवमनर्घत्वमवृष्टिव्याधितो भयम्।

ग्रस्त[२५]दुदितास्तमितौ नृपधान्यविनाशदौ।।९।।

---

(१४)पु.-द्विगजोपशु। (१५)व.२-शस्यानां। (१६)व.१-त्रिपर्वणि।

(१७)व.१-भूपाहवः। (१८)व.३-क्षेमं। (१९)पु.-राज्ञां न शोभनम्।

(२०)पु.-हैंतारम्यपर्वणि। (२१)पु.-याम्यवर्षेऽप्यनावृष्टि।

(२२)व.२-र्दनाशनम्। (२३)व.२-तिग्माश, पु.-श्चोरु, व.१-श्चोरु।

(२४)पु.-राजाहत, क.-राजा हरति सर्वस्व। (२५)पु.-दुरिता।

[२६]सर्वग्रस्तौ चन्द्रसूयौ दु[२७]र्व्याधीतिभयप्रदौ।

[२८]सौम्यायने मित्र[२९]भूपान्हन्त्यन्यान्दक्षिणायने।।१०।।

उदगादि[३०]दृष्टौ राहुर्द्विजादीन्हन्ति च क्रमात्।

ग्रास[३१]भेदा दशविधा मोक्षभेदा[३२]स्तथा दश।

[३३]न शक्ता [३४]लक्षितुं देवाः किं पुनः [३५]प्राकृता जनाः।।११।।

---

(२६)व.१-(लोपः)श्लोकः क्र.१०-अ (सूर्यौ) तः

श्लोकः क्र.११-अ (उदगादिदृष्टौ)।

(२७)पु.-(लोपः)र्व्या। (२८)पु.-याम्यायने। (२९)व.२.३,क.-भूपान्हन्त्यन्या।

(३०)पु.-दृष्टये, व.३-दष्टो, क.-दृष्टोराहुर्द्वि। (३१)क.-भेदे।

(३२)व.१-तथैव च। (३३)पु.-अशक्ता। (३४)व.१-रक्षितुं।

(३५)पु.-प्रकृतो जनः।

## ।। राहुचाराध्यायः।।            (अध्यायः९)

खेटानानीय सिद्धान्ते [३६]तेषां [३७]चारान्विचिन्तयेत्।

शुभा[३८]शुभाप्तेः कालस्य ग्रहचारो हि कारणम्।।१२।।[३९]

[४०]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां राहुचाराध्यायो नवमः ।।९।।

---

(३६)पु.-तेषा। (३७)पु.-चारं। (३८)व.१-शुभदः।

(३९)व.१-(अधिकम्)अन्वेषणीयं तत्तस्मात्कालज्ञानाय सर्वदा।

(४०) पु.-इति ब्रह्मविरचितायां राहुचारन्नमिनमः।।,

व.१-इति कश्यपसंहितायां राहुचाराध्यायो नवमः।।,

व.२-इति ब्रह्मर्षिविरचितायां राहुचारं नवमः।।,

क.-इति कश्यपब्रह्मर्षिविरचितायां राहुचारं नाम नवमः।।,

व.३-इति ब्रह्मर्षिविरचितायां राहुचारो नवमः।।

## ।। दशमोऽध्यायः ।।

## ।। केतुचाराध्यायः ।।

उत्पात एव केतूनामुद[1]यास्तमया [2]भुवि।
[3]दिव्यान्तरिक्षभौमाः स्युर्ज्ञातव्या रूपभेदतः ।।१ ।।

[4]शस्त्रास्त्रध्वज[5]वृक्षेभरथ[6]मण्डपसन्नि[7]भाः।
माला[8]स्तम्भ[9]शिखाकारा [10]अन्तरिक्षाः [11]प्रकीर्तिताः ।।२ ।।

नक्षत्रसम्भवा दिव्या [12]भौमास्ते भूमि[13]सन्निभाः।
एकोऽपि बहुरूपेण जन्तूनामशुभ[14]प्रदः ।।३ ।।

एकद्वित्रिचतुःपञ्चदिवसादिषु सन्ततम्।
दृश्यते फलदः केतुर्मासैस्तद्दिनसम्मितैः ।।४ ।।

---

(१)व.२-याक्ष। (२)व.१-विभु। (३)व.१-वेदिव्यान्तरिक्षभेदाः।

(४)व.२.३,क.-शस्त्राश्व। (५)व.१-वृक्षेश्व। (६)व.१-मन्दिर।

(७)व.१-भैः, व.२-भम्। (८)व.२-श्रमना। (९)व.१-शिवा।

(१०)पु.-आन्तरिक्षाः। (११)व.१-(लोपः)प्रकिर्तिताः।

(१२)व.२,क.-भौमासा। (१३)व.१.३-सम्भवाः। (१४)पु.-प्रदम्।

[१५]ती[१६]व्राल्पं याथफलदा दिव्यभौमान्तरिक्षजाः।

श्वेतकेतुः सुप्रसन्नो ह्रस्वः [१७]स्निग्धः सुभिक्षकृत्।।५।।

दीर्घकेतुर्वृष्टिकरः [१८]क्षिप्रमस्तमयं गतः।

सुभिक्ष[१९]क्षेमदाः श्वेतकेतवः सोमसूनवः।।६।।[२०]

उदिताः केतवः[२१] [२२]पूर्वापरयोर्नृप[२३]हन्तकः।

शुकतुण्डाग्नि[२४]बन्धूकबिल्वक्षतजसन्निभाः।।७।।

[२५]केतवोऽग्निः[२६]सुता[२७]श्चाग्नि[२८]भयदाः शस्त्रभीतिदाः।

ये कृष्णकेतवो [२९]रक्ता व्याधिदा मृत्युसूनवः।।८।।

---

(१५)व.१–सा विप्रायाम्यफलदं। (१६)व.३–व्याप्य, व.२–जाप्य, क.–व्याष्य। (१७)व.३–तिग्मां। (१८)पु.–क्षिप्रा। (१९)व.१–(लोपः)क्षेम।
(२०)व.१–(अधिकम्)　अनिष्टदो भूमकेतुः शक्रचापनिभोऽग्निजः।

द्वित्रिचतुः शूलरूपा क्षितीशानां विनाशकृत्।।

सुवर्णमणिहाराभा दीप्तमन्तोऽर्कसूनवः।

(२१)व.१–(अधिकम्)तनय। (२२)व.१–पूर्वपरस्तोभ्य। (२३)व.२–हन्तकाः। (२४)पु.–वेधू। (२५)पु.–केतवे। (२६)व.३–(लोपः) सुताश्चाग्नि।

(२७)व.२–सुत। (२८)पु.–र्भयदाः। (२९)पु.–वक्रा, व.१–विप्र।

## ।। केतुचाराध्यायः।।　　　　(अध्यायः१०)

[३०]वर्तुला [३१]जलशैलाभा [३२]भूपुत्राः क्षुद्भयप्रदाः।

ब्रह्मदण्डाह्वयः केतु[३३]स्त्रिवर्णस्त्रिशिखान्वि[३४]तः।।९।।

क्रूरो ब्रह्मसुतः सोऽपि प्रजानान्दुःखशोकदः।

शुक्रात्मजा [३५]अपि श्वेता [३६]ऐशान्यां दिश्यनिष्टदाः।।१०।।

कनकाख्याः [३७]शनि[३८]सुता द्विशि[३९]खाः शस्त्रभीतिदाः।

[४०]नेष्टा याम्ये गुरुसुता [४१]विकाराख्याः स्थिता [४२]अपि।।११।।

सूक्ष्मा बुधात्मजाः [४३]शुक्ला वायव्यां दिशि भीतिदाः।

अनिष्टदाः[४४]कुमाराख्या [४५]रक्त [४६]मूढाः कुजात्मजाः।।१२।।

---

(३०)पु.-वर्तला। (३१)व.१-जतुलैभा। (३२)पु.-भूपत्रा।

(३३)पु.-श्चतुर्द्वि। (३४)पु.-ताः। (३५)पु.-अपः।

(३६)व.२-ईशान्य, पु.-ईशान्या, व.१,क.-ईशान्यादि।

(३७)पु.-क्षिति। (३८)व.२-(लोपः)सुता। (३९)व.२-(लोपः)खाः।

(४०)व.१-अनेष्टा। (४१)व.१, क.-विकवाख्या स्थिता, व.३-विकचाख्या।

(४२)व.१-अधिः। (४३)व.१-शुक्रा। (४४)व.१.२-कुङ्कुभा, क.-कुङ्कुमास।

(४५)व.१-वक्र। (४६)क.,व.३-मूलाः, व.१-शूलाः।

## ।। केतुचाराध्यायः ।।              (अध्यायः१०)

[४७]अग्निजाविश्वरूपाख्यास्तद्वर्णास्तद्भयप्रदाः।

अनिष्टदा वायुसुता[४८]स्तरुणाश्चामरोपमाः।।१३।।

केतवो [४९]वृक्षसदृशा [५०]रूक्षा [५१]आशुभदायकाः।

[५२]श्वेतवंशोपमाः [५३]काष्ठाः [५४]कङ्काख्या ब्रह्मसूनवः।।१४।।

कालात्मजा भस्मरूपाः कबन्धाख्यास्त्वनिष्टदाः।

प्रजान्तकृद्धूमकेतुः कृत्तिकासु [५५]समुत्थि[५६]तः।।१५।।

राजान्तकृद्वृक्षशैलप्रासादेषु [५७]समुत्थिताः।

[५८]यः केतुः [५९]कुमुदाकारः कुमुदाख्यः सुभिक्षकृत्।।१६।।

---

(४७)पु.–अग्निजे। (४८)पु.–स्त्वनुणा। (४९)पु.,क.–रुक्ष, व.१–ऋक्ष।

(५०)व.१–ज्ञेया। (५१)व.१, पु.–शुभदायकाः। (५२)पु.–श्वेता।

(५३)व.१–काराः, पु.–कष्ठाः, क.–कृष्ण। (५४)क.–कङ्काकाराश्च।

(५५)व.१.३–समुच्छ्रितः। (५६)व.२–तः।(५७)व.३–समुच्छ्रिताः।

(५८)व.१–(लोपः)यः। (५९)पु.–कुसुमाकारः।

## ।। केतुचाराध्यायः ।।              (अध्यायः१०)

आवर्त्तसन्निभः [६०]श्वेतः [६१]आवर्त्ताख्यः शुभप्रदः।

[६२]नेष्टदः स्यादर्धकेतुः सन्ध्यायां त्रिशिरोऽरुणः।।१७।।

[६३]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

केतुचाराध्यायो दशमः।।     ।।१०।।

---

(६०)व.१–श्वेताश्चा। (६१)क.–भ्रावर्त्ताख्यः।

(६२)व.१–नेष्टसंवर्तकेतुश्च, व.२–नेष्ट्या।

(६३)पु.,व.३–केतुचारो दशमः।।,

क.,व.२–इति केतुचारो दशमः।।,

व.१–इति कश्यपसंहिताया ंकेतुचारो दशमः।।

## ।। एकादशोऽध्यायः ।।

## ।।अब्दलक्षणाध्यायः ।।

ब्राह्मं दैवं मनोर्मानं पैत्र्यमानं तथा गुरोः।

सौराख्यं सावनं चान्द्रमार्क्षं मानानि वै नव।।१ ।।

चतुर्भिर्व्यवहा[१]रोऽत्र [२]सौरचन्द्रार्क्षसावनैः।

षष्ट्यब्दव्यवहारोऽत्र गुरु[३]मानेन गृह्यते।।२ ।।

[४]निखिल[५]ग्रहाचारश्च [६]सङ्क्रान्तेः काल[७]निर्णयः।

[८]दिनरात्रिप्रमाणश्च सौरमानेन गृह्यते।।३ ।।

वृद्धेर्विधानं स्त्रीगर्भं [९]मृतकर्मविनिर्णयः।

ग्रहाणां मध्यमा भुक्तिः [१०]सावनेन प्रगृह्यते।

[११]भचक्रभ्रमणं मेघगर्भं नक्षत्रमानतः।।४ ।।

---

(१)पु.-रोऽयं। (२)पु.-सौर चान्द्रर्क्षसावनम्, व.१-न्द्रार्क्षसावने।

(३)व.१-मासेन।

(४)व.२-(लोपः)श्लोकः क्र.-४ एवं श्लोकः क्र.-५। (५)व.१.३-ग्रह।

(६)पु.-सङ्क्रान्तिः, क.-सङ्क्रान्तः। (७)पु.-निर्णये। (८)व.१-दिनरात्र।

(९)पु.-नृतकनिर्णयः। (१०)व.१-सावनेनैव। (११)व.१-तच्च।

उपवासव्रतोद्वा[१२]ह[१३]यात्राक्षौरोपनायनम्।

[१४]तिथिवर्षादिनिखिलं चान्द्रमानेन गृह्यते।।५।।[१५]

गुरुमानोक्तषष्ट्यब्दफलं [१६]नामानि कथ्यते।।६।।

प्रभवो विभवः [१७]शुक्लः [१८]प्रमोदोऽथ प्रजापतिः।

[१९]अङ्गिराः श्रीमुखो [२०]भावो युवा धाता [२१]तथैव च।।७।।

ईश्वरो बहु[२२]धान्यश्च प्रमाथी विक्रमो वृषः।

चित्रभानुः [२३]सुभानुश्च तारणः पार्थिवोऽव्ययः।।८।।

सर्वजित्सर्वधारी च विरोधी [२४]विकृतिः खरः।

नन्दनो विजयश्चैव [२५]जयमन्मथदुर्मुखाः।।९।।

---

(१२)व.२-हं। (१३)पु.-यात्र। (१४)व.१-तिथिपर्वादि।

(१५)व.१-(अधिकम्)मासैर्द्वादशाभिसौश्च अब्दमानं तथैव च।

(१६)पु.-नाम च। (१७)पु.-शुक्ल। (१८)पु.-प्रमोद।

(१९)व.२, क.-आङ्गिराः, क.-अङ्गिरः, व.१-अङ्गिरो। (२०)पु.-भावा।

(२१)व.२-स्तथैव च। (२२)क.-धान्यंश्च, व.१-धान्यख्यः।

(२३)व.२-स्वभानु। (२४)व.३-विकृतः। (२५)पु.-जयो।

हेमलम्बी विलम्बी च विकारी शार्वरी प्लवः।

शुभकृच्छोभकृत्क्रोधी विश्वावसु[२६]पराभवौ।।१०।।

प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत्।

परिधावी [२७]प्रमाथी च आनन्दो राक्षसोऽनलः।।११।।

पिङ्गलः काल[२८]युक्तश्च सिद्धार्थी रौद्रदुर्मतिः।

दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः।।१२।।

[२९]स्याद्युगं पञ्चभिर्वर्षैर्युगानि द्वादशै[३०]व तु।

[३१]युगेशा [३२]विष्णुजीवेन्द्र[३३]ज्वलनस्त्वष्टृसंज्ञ[३४]काः।।१३।।

[३५]अहिर्बुध्न्यश्च पितरो विश्वेदेवाश्च चन्द्रमाः।

[३६]इन्द्राग्नी [३७]त्वश्विनौ [३८]देवो [३९]भगाख्योऽन्त्यः प्रकीर्तितः।।१४।।

---

(२६)पु.-पराभवः। (२७)पु.-प्रमादी। (२८)पु.-युक्ताश्च।
(२९)व.१-स्याधुगं। (३०)व.३-वते। (३१)पु.-युगेश।
(३२)व.१-विष्व, पु.-विष्णो। (३३)क.-जनल, व.१-दहन।
(३४)पु.-कः। (३५)व.१-अर्हिबुध्न्यश्वि। (३६)व.१-इन्द्राग्नात्व।
(३७)व.२-साश्विनो, व.३-त्यश्विनी। (३८)व.१-देवौ।
(३९)व.१-भगस्यात् परिकीर्तितः।

## ।। अब्दलक्षणाध्यायः ।।   (अध्यायः ११)

युगस्य पञ्च वर्षेशा [४०]ब्रह्मर्केन्द्वब्दजेश्वराः।
[४१]युगेशवत्सरेशानां फलं नामानुरूपतः।।१५।।

[४२]ईतयश्चा[४३]ग्निकोपश्च व्याधयः प्रचुरा भुवि।
[४४]प्रभवाब्दे [४५]मन्दवृष्टि[४६]स्तथापि सुखिनो जनाः।।१६।।

दण्ड[४७]नीतिपरा भूपा बहुसस्यार्घवृष्टयः।
विभवाब्देऽखिला लोकाः सुखिनः स्युर्विवैरिणः।।१७।।

शुक्लाब्दे निखिला लोकाः सुखिनः स्वजनैः सह।
राजानो युद्धनिरताः परस्परजयेच्छया।।१८।।

प्रमोदाब्दे [४८]प्रमोदन्ते राजानो निखिला जनाः।
[४९]वीतरागा वीतभया [५०]ईति[५१]व्याधियुता [५२]अपि।।१९।।

---

(४०)व.२-वहन्यर्किद्वजनेश्वराः, व.१-ब्रह्मर्कद्दर्कजेश्वराः,
क.-ब्रह्मकेन्दुज्यजेश्वराः। (४१)व.१-युगसंवत्सरे।
(४२)पु.-ईतय आग्नि। (४३)व.१-ग्निवायव्यव्या व्याधयः।
(४४)पु.-प्रभवाब्द। (४५)व.१-मध्यवृष्टि। (४६)पु.-तथापि।
(४७)व.१-नीतिः। (४८)पु.-प्रमोदन्ति। (४९)व.१-वातरोगा।
(५०)पु.-ईतीव्यालयुता, व.१-अति। (५१)पु.-व्याल।
(५२)व.१-ना अपि।

।। अब्दलक्षणाध्यायः।। (अध्यायः११)

न चलन्त्यखिला लोकाः स्वस्वमार्गात्कदाचन।

प्रजापतिसमे नूनं बहुसस्यार्घवृष्टयः।।२०।।

[५३]अन्नं हि [५४]भुज्यते शश्वत्स्वज[५५]नातिथिभिः सह।

अङ्गिराब्देऽखिला [५६]लोका भूपाः स्युः कलहोत्सुकाः।।२१।।

श्रीमुखाब्देऽखिला धात्री बहुसस्यार्घ[५७]संयुता।

[५८]अध्वरे निरता विप्रा वीत[५९]रागा [६०]विवैरिणः।।२२।।

[६१]भावाब्दे प्रचुरा [६२]रोगा [६३]मध्यसस्यार्घवृष्टयः।

राजानो युद्ध[६४]निरतास्तथापि सुखिनो जनाः।।२३।।

---

(५३)व.१-अन्नी वे। (५४)पु.-भुञ्जते। (५५)पु.-जनैरर्थिभिः।

(५६)व.१-भूपा नित्यं स्युः। (५७)क.-(लोपः) श्लो. क्र.-२२ब (संयुता) तः श्लो. क्र.-२३ड पर्यन्तम्। (५८)व.१-अध्वरेषु। (५९)व.१.२-रोगा। (६०)व.१- (पुनरोक्तिः-पाठभेदः)वीतरोगा वीतरोगा। (६१)पु.-भावीब्दे। (६२)व.३-रागा, व.१-गावो।

(६३)पु.-मध्या, व.३-मध्याः, व.१- मध्यसस्यार्घबहुसस्यार्घवृष्टयाः।

(६४)पु.-निरता तथापि।

## ।। अब्दलक्षणाध्याय: ।।          (अध्याय:११)

प्रभूतपयसो   गाव: सुखिन: सर्वजन्तव:।

[६५]सर्वकामक्रिया[६६]सक्ता   युवाब्दे   युवतीजना:।।२४।।

[६७]पार्थिवाब्देऽ[६८]खिला [६९]क्ष्मेशा: सदा  युद्धपरायणा:।

सम्पूर्णा   धरणी[७०] भाति   बहु[७१]सस्यार्घवृष्टिभि:[७२]।।२५।।

ईश्वराब्देऽखिला[७३]ञ्जन्तून्रक्षे[७४]द्धात्री   च   सर्वदा।

पोषयत्य[७५]तुलं   [७६]वार्थान्फलशालीक्षु[७७]व्रीहिभि:।।२६।।

अनीतिरतुला  वृष्टिर्बहुधान्याख्यवत्सरे।

विविधैर्धान्यनिचयै:  ससम्पूर्णाखिला  धरा [७८]।।२७।।

---

(६५)पु.–सर्वे काम। (६६)व.१,क.–युक्ता।

(६७)पु.–पार्थिवर्षे, व.१–धातृवर्षे। (६८)व.२.३–खिल। (६९)पु.–क्ष्येशा:। (७०)व.१–भीति। (७१)पु.–सस्थार्ध।

(७२)व.१–(लोप:)श्लोक: क्र–२५ड त: श्लोक: क्र.–२६ड (वारिभि:)।

(७३)पु.–न्जन्तून्धात्री। (७४)पु.–धात्रीव। (७५)पु.–मुल।

(७६)पु.–म्बार्थं, व.३–चाथ। (७७)व.१–वारिभि:।

(७८)व.१–(लोप:)श्लोक: क्र.–२७ड त: श्लोक: क्र.–२८ड (प्रमाथिनी)।

।। अब्दलक्षणाध्याय:।।          (अध्याय:११)

न मुञ्चति पयोवाहा: कुत्रचित्कुत्रचिज्जलम्।

मध्यमा [७९]वृष्टिरर्थं च [८०]नूनमब्दे [८१]प्रमाथिनि।।२८।।

विक्रमाब्दे धराधीशा विक्रमात्क्रान्तभूमय:।

सर्वत्र सर्वदा मेघा मुञ्चन्ति प्रचुरं जलम्।।२९।।

[८२]वृषाब्दे निखिला [८३]क्ष्मेशा युध्यन्ति वृषभा इव।

म[८४]खप्रसक्ता विप्रेन्द्रा: [८५]सततं [८६]यजते सुरान्।।३०।।

[८७]चित्रार्घवृष्टि: सस्याद्यैर्विचित्रा निखिला [८८]धरा।

निराकुलाखिला [८९]लोकाश्चित्रभानोश्च वत्सरे।।३१।।

---

(७९)व.३-वर्षं च, पु.-रपञ्च, क.-निचयं। (८०)व.१-पृष्टाब्दे च प्रमाथिनी।

(८१)पु.-प्रमोदिनि। (८२)व.१-विक्रमाब्दे निखिला लोका युद्धन्ति वृषभापि च।

(८३)व.२-लोका। (८४)व.२-मत्ताप्रसक्ता।

(८५)पु.-सन्ततं। (८६)व.२-यकरोति। (८७)व.१-चित्रभानौ च संसाधौ।

(८८)व.१-जना:। (८९)व.१-पौराश्।

## ।। अब्दलक्षणाध्यायः ।। (अध्यायः११)

[९०]सुभा[९२]नुवत्सरे [९३]भूमौ भूभु[९४]जानाञ्च विग्रहः।
[९५]भाति भूर्भूरि [९६]सस्याद्यैर्भयङ्करभुजङ्गमैः।।३२।।
कथञ्चिन्निखिला [९७]लोकाश्चरन्ति प्रतिवत्स[९८]रम्।
[९९]नृपाहवो महारोगभैषजैस्तारणा[१००]ह्वये।।३३।।
पार्थि[१०१]वाब्दे तु राजानः सुखिनः [१०२]सुप्रजा भृशम्।
बहुभिः फल[१०३]पुष्पाद्यैर्विविधैश्च [१०४]पयोधरैः।।३४।।
व्ययाब्दे निखिला [१०५]भूपा [१०६]बहुव्ययपरा[१०७]यणाः।
[१०८]वीर[१०९]मत्तेभ[११०]तुरगरथैर्भूर्भाति सर्वदा।।३५।।

---

(९०)व.२-स्वभानु। (९१)व.१-नोश्च। (९३)व.१-भूरि।

(९४)व.३-जो नीच। (९५)व.१-विभाति। (९६)पु.-सस्यार्धैभयं।

(९७)पु.-लोकास्तरन्ति। (९८)व.१-रः। (९९)पु.-नृपाहवक्षताद्रोग।
(१००)पु.-ङ्कये। (१०१)पु.-वाष्देऽथ। (१०२)पु.-सप्रजा।

(१०३)व.१-सस्याधै। (१०४)पु.-पयोमुचैः। (१०५)व.१-भूपो।
(१०६)व.२-बहुकार्य। (१०७)पु.-भृशम्। (१०८)क.-परि।

(१०९)पु.-मत्तभ। (११०)व.१-तुरगे, क.-गा।

सर्वजिद्वत्सरे [१११]सर्वे जनास्त्रिदशसन्निभाः।

राजानो विलयं यान्ति भीमसङ्ग्राम[११२]भूमिषु।।३६।।

सर्वधारीसमे भूपा प्रजापालनतत्पराः।

[११३]प्रशान्तवैराः सर्वत्र बहुसस्यार्घवृष्टयः।।३७।।

[११४]विरोधीवत्सरे लोकाः परस्परविरोधिनः।

[११५]भूरिभूतियुता भूमिर्भूरिवारिसमाकुला।।३८।।

[११६]प्रकृति[११७]र्विकृतिं याति [११८]विकृतिः प्रकृतिं गता।

तथापि सुखिनो लोका[११९]श्चास्मिन्विकृतिवत्सरे।।३९।।

---

(१११)व.१.२-सर्व। (११२)व.१-राजिषु।

(११३)व.१.-प्रशान्तवैराश्च, व.२-चौरा। (११४)व.२-विरग्ति।

(११५)व.१-भूमिभारयुता, व.३-भूरिभूमियुता

(११६)व.१-प्रकृतिर्कृतिवृकृति यांति विकृतिप्रकृतिं गताः।

व.२-विकृतिः प्रकृतिर्याति विकृतिः प्रकृतिं गता।

(११७)पु.-र्विकृतिर्याति। (११८)पु.-वियोनिविकृतिं। (११९)व.१-नित्य।

खराब्दे निखिला [१२०]भूपाश्चान्योन्यं समरोत्सुकाः।
[१२१]मध्यमा वृष्टिर[१२२]त्युग्ररोगै[१२३]र्भूता लयं ययुः।।४०।।
नन्दनाब्दे सदा [१२४]पृथ्वी बहुसस्यार्घ[१२५]वृष्टयः।
[१२६]आनन्ददाखिलानां च जन्तूनां च महीभुजाम्।।४१।।
विजयाब्दे तु राजानः [१२७]सदा विजयकाङ्क्षिणः।
सुखिनो जन्तवः सर्वे बहुसस्यार्घवृष्टयः।।४२।।
जयमङ्गलघोषा[१२८]द्यैर्धरणी भाति सर्वदा।
[१२९]जयाब्दे [१३०]धरणी[१३१]नाथाः सङ्ग्रामजयकाङ्क्षिणः।।४३।।

---

(१२०)व.१-लोकाश्चा। (१२१)व.१-ईरणा। (१२२) पु.-तरोर्भूता।

(१२३)व.१.२-र्भूपा। (१२४)व.२-पृथ्व्यां। (१२५)व.१-वृष्टिभिः।

(१२६)व.२-आनन्देह्यरिकलानां च। (१२७)व.१-कदाचि।

(१२८)व.१-द्यैधारणी। (१२९)व.३-सयाब्दे।

(१३०)व.१-भरणी। (१३१)व.१-नाथ।

## ।। अब्दलक्षणाध्यायः ।।                (अध्यायः ११)

मन्मथाब्दे जनाः सर्वे [१३२]लीलया लीललोलुपाः।

शाली[१३३]क्षुयवगोधूमैर्नयना[१३४]भिनवा [१३५]धरा।।४४।।

दुर्मुखाब्दे मधुवृष्टि[१३६]रीति[१३७]चौराकुला धरा।

[१३८]महावैरिमहीनाथा वीरवारणधोटकैः।।४५।।

हेमलम्बी [१३९]त्वीतिभीतिर्मध्यसस्यार्घवृष्टयः।

भाति भूर्भूपसंक्षोभ[१४०]खड्गविद्युल्लतादिभिः।।४६।।

[१४१]विलम्बीवत्सरे भूपाः परस्परविरोधिनः।

प्रजापीडा [१४२]त्वनर्घत्वं तथापि सुखिनो जनाः।।४७।।

---

(१३२)व.१-तेर्तेप्यु, व.२, क.-तर्ष्कलीललोलुपाः, व.३-तष्कलीलीललोपुपाः।

(१३३)व.१-क्षुपवगो। (१३४)व.१-भिर्नवा। (१३५)व.१.३-धराः।

(१३६)व.१-रति। (१३७)व.१-चौररणाकुलाः।

(१३८)पु.-महिनाथा, व.३,क.-महिवैरिमहीनाथ।

(१३९)पु.-भीतिर्मध्यार्ध सृष्टयः। (१४०)व.१-खङ्ड, व.३-स्वर्ग।

(१४१)व.१-विलम्ब। (१४२)व.३-चन।

।। अब्दलक्षणाध्यायः।।                (अध्यायः११)

[१४३]विकार्यब्देऽखिला लोकाः [१४४]सरोगा वृष्टिपीडिताः।

पूर्वसस्यफलं स्वल्पं [१४५]बहुल[१४६]श्चापरं फलम्।।४८।।

शार्वरीवत्सरे पूर्णा धरा [१४७] सस्यार्घवृष्टिभिः।

प्रजाश्च सुखिनः [१४८]सर्वा राजानः स्युर्विवैरिणः।।४९।।

प्लवाब्दे त्वखिला धात्री वृष्टिभिः [१४९]प्लव[१५०]संयुता।

रोगाकुला त्वीति[१५१]भीतिः [१५२]सम्पूर्णं वत्सरं फलम्।।५०।।

शुभकृद्वत्सरे पृथ्वी राजते विविधोत्सवैः।

[१५३]आन्तकचोरभयदा [१५४]राजानः समरोत्सुकाः।।५१।।

[१५५]शोभकृद्वत्सरे धात्री प्रजानां [१५६]रोगशोकदा।

तथापि सुखिनो लोका बहुसस्यार्घ[१५७]वृष्टयः।।५२।।

---

(१४३)व.१-विकाम्यब्दे। (१४४)व.१-रोगा ना। (१४५)व.१-वद्रूलं।

(१४६)व.१-श्चापलं। (१४७)पु.-स्यात्सर्ववृष्टिभिः। (१४८)पु.-सर्वे।

(१४९)व.१-फल। (१५०)पु.-सन्निभा। (१५१)व.१-भयं।

(१५२)व.१-सम्पूर्णमपरं। (१५३)व.१.२-आतङ्क चौर। (१५४)व.१-जातः।

(१५५)व.१-क्षेम। (१५६)व.१-शोकरोगदा। (१५७)व.१-वृष्टिभिः।

क्रोध्यब्दे त्वखिला लोकाः क्रोधलोभ[१५८]परायणाः।

ईतिदोषेण नियतं मध्यसस्यार्घवृष्टयः।।५३।।[१५९]

[१६०]अब्दे विश्वावसौ [१६१]शश्वच्चोररोगाकुला धरा।

सस्यार्घवृष्ट[१६२]यो मध्या [१६३]भूपालोऽति[१६४] विभूतयः।।५४।।

पराभवाब्दे [१६५]राजानः समरं सह शत्रुभिः।

आमयक्षुद्र[१६६]सस्यादिप्रभूता[१६७]त्यल्पवृष्टयः।।५५।।

[१६८]प्लवङ्गाब्दे मध्यवृष्टिरोगचोराकुला [१६९]धरा।

[१७०]अन्योन्यसमरे भूपाः शत्रुभि[१७१]र्हृतभूमयः।।५६।।

---

(१५८)पु.-परायणः। (१५९)क.-(लोपः) श्लोकः क्र.-५३।

(१६०)व.१-श्रब्दे। (१६१)पु.,क.-शस्य, व.१-सश्वचौर।

(१६२)क.-योर्मध्या।

(१६३)व.३,क.-भूपालोऽतिवि, व.२-भूपालो भाति। (१६४)व.१.-भूपयः।

(१६५)व.१-लोकानां राजानः शत्रवो वमुः। (१६६)व.१-धान्यानि।

(१६७)पु.-त्वल्प, व.१-त्यत्य, क.-स्वत्य। (१६८)पु.-प्लवङ्ङ्गब्द।

(१६९)व.१-धराः। (१७०)व.१-अन्योन्यं। (१७१)पु.-हतभूमयः।

## ।। अब्दलक्षणाध्यायः ।।            (अध्यायः ११)

[१७२]कीलकाब्दे त्वीति[१७३]भीतिः [१७४]प्रजाक्षोभो [१७५]नृपाहवे।
तथापि [१७६]वर्धते लोकः [१७७]समधान्यार्घ[१७८]वृष्टिभिः ।।५७।।[१७९]
[१८०]सौम्याब्दे सुखिनो लोका बहुसस्यार्घवृष्टिभिः।
विवैरिणो धराधीशा विप्राश्चाध्वरतत्पराः[१८१] ।।५८।।
साधारणाब्दे वृष्ट्यर्घभयसाधारणं [१८२]स्मृतम्।
विवैरिणोऽखिला भूपाः प्रजाः स्युः [१८३]स्वस्थचेतसः ।।५९।।
विरोधकृद्वत्सरे तु परस्परविरोधिनः।
[१८४]सर्वे जना [१८५]नृपाश्चैव मध्यसस्यार्घवृष्टयः ।।६०।।

---

(१७२)पु.-कालाब्दे। (१७३)पु.-भीति।

(१७४)व.२-प्रजाक्षोभ। (१७५)व.१-नृपाहवाः, व.२-नृपाक्वचित्।

(१७६)व.१-वर्तते। (१७७)व.१-समा। (१७८)व.१-वृष्टयः।

(१७९)व.१-(पुनरोक्तिः) कीलकाब्दे त्वीतिभीतिः। (१८०)पु.-सौमब्दे।

(१८१)व.१,व.२-श्चाध्वस्ततत्पराः। (१८२)व.१.२-भृशम्।

(१८३)क.-सुस्थ।

(१८४)पु.-सर्व। (१८५)व.१-नृप।

## ।। अब्दलक्षणाध्यायः ।। (अध्यायः११)

भूपाहवमहा[१८६]रोगमध्यस[१८७]स्यार्घवृष्टयः।

[१८८]दुःखिनो जन्तवः सर्वे वत्सरे [१८९]परिधाविनि।।६१।।

प्रमादीवत्सरे तस्मिन्मध्यसस्यार्घवृष्टयः।

प्रजाः कथञ्चिज्जीवन्ति [१९०]समात्सर्याः क्षितीश्वराः।।६२।।

आनन्दाब्देऽखिला लोकाः [१९१]सर्वदानन्दचेतसः।

राजानः सुखिनः सर्वे बहुसस्यार्घवृष्टिभिः।।६३।।

राक्षसाब्देऽखिला लोका राक्षसा इव निष्कृपाः।

[१९२]स्वस्वकार्यरताः सर्वे मध्यसस्यार्घ[१९३]वृष्टयः।।६४।।

---

(१८६)व.३-रोगो। (१८७)व.१-स्यार्द्ध।

(१८८)व.२-(समाक्षरलोपः)श्लोकः क्र.-६१क तः श्लोकः क्र. ६२ब।

(१८९)क.-परिधावति। (१९०)व.१-समाश्चर्ये।

(१९१)व.१,क.-(समाक्षरलोपः) श्लो. क्र.-६३ब तः श्लो. क्र.-६४अ पर्यन्तम्।

(१९२)व.१-सर्व। (१९३)व.१-वृष्टिभिः।

नलाब्दे मध्यसस्यार्घवृष्टयः [194]प्रवरा धरा।

[195]नृपसंक्षोभसञ्जातभूरिभीकरभूमयः।।६५।।[196]

पिङ्गलाब्दे [197]त्वीतिभीतिर्मध्यसस्यार्घवृष्टयः।

राज[198]भिर्विक्रमाक्रान्ता [199]भुज्यते शत्रुमेदिनी।।६६।।

वत्सरे कालयुक्ताख्ये सुखिनः सर्वजन्तवः।

[200]सन्तीतयेऽपि सस्यानि [201]प्रवराणि [202]तथागदाः।।६७।।

[203]सिद्धार्थीवत्सरे भूपाः शान्त[204]वैरास्तथा प्रजाः।

सकला वसुधा भाति बहुसस्यार्घ[205]वृष्टिभिः।।६८।।

---

(१९४)पु.,क.,व.१-(लोपः) प्रवरा धरा। (१९५)व.१-प्रचुरा मत्ताः।

(१९६)पु.-(पाठान्तरम्-त्रुटितम्) प्रवरस्या.................र्धवृष्टिभिः।,

पु.-(पुनरोक्तिः)श्लो.क्र.-६४अ,ब (राक्षसाब्देऽखिला लोका राक्षसा इव निष्कृपाः।)। (१९७)व.१-(लोपः)त्वीतिभीति। (१९८)व.१-(लोपः)भि।

(१९९)व.१-भुञ्जते। (२००)पु.-संसीतयो सस्यहानि, व.१-संतातपेति, व.२-संतितयोऽपि। (२०१)व.१-प्रचुरोपि। (२०२)पु.-तथा, व.३,क.-तथापि च।

(२०३)पु.-सिद्धार्थ। (२०४)पु.-वेष। (२०५)व.१-वृष्टयः।

रौद्राब्दे नृपसंक्षोभसम्भूतक्लेशभागिनः।
[२०६]सततं त्वखिला लोका मध्यसस्यार्घवृष्टयः।।६९।।
[२०७]दुर्मत्यब्देऽखिला लोका भूपा [२०८]दुर्मतयस्तथा।
तथापि सुखिनः सर्वे [२०९]सङ्ग्रामाः सन्ति चेदपि।।७०।।
सर्व[२१०]सस्ययुता धात्री [२११]पालिता धरणीश्वरैः।
[२१२]पूर्वदेशविनाशः स्यात्तस्मिन्दुन्दुभिवत्सरे।।७१।।
रुधिरोद्गारि[२१३]शरदि प्रभूताः [२१४]स्युस्तथामयाः।
नृपसङ्ग्रामसम्भूत[२१५]भूभुजस्त्वखिला जनाः।७२।।
रक्ताक्षीवत्सरे भूपाश्चान्योन्यं हन्तुमुद्यताः।
ईतिरोगाकुला धात्री स्वल्पसस्यार्घ[२१६]वृष्टयः।।७३।।

---

(२०६)पु.–सन्ततं। (२०७)क.–दुन्दुभ्यब्दे। (२०८)व.३,पु.–धर्मतयस्तथा,
क.–धर्मवयस्तथा। (२०९)पु.–शान्तिग्रामाः सान्ति। (२१०)पु.–सस्या।

(२११)व.१–पालयत्यवनिश्वराः, क.–पालिता धरणीखलैः।

(२१२)पु.–पूर्वे देशे तु नाशः, क.–पूर्वदेशेसस्य।

(२१३)पु.–राधि, व.३–धराधि। (२१४)पु.–(लोपः)स्यु।

(२१५)व.३–(लोपः)भूभु।

(२१६)व.१–वृष्टिभिः, पु.–वृत्तयः।

क्रोधनाब्दे मध्यवृष्टिः पूर्वसस्यविनाशनम्[२१७]।

सम्पूर्णमपरं [२१८]सस्यं भूपाः [२१९]क्रोधाभिभूतयः।।७४।।

क्षयाब्दे [२२०]सर्वसस्यार्घ[२२१]वृष्टयः स्युः क्षयं गताः।

तथापि लोका जीवन्ति कथञ्चिद्येन केनचित्।।७५।।

[२२२]चैत्रादिवारपोऽब्देशश्च भूपो मेष[२२३]चारपः।

सस्याधिपः कर्कटेशस्तुले[२२४]शस्तु [२२५]रसाधिपः।।७६।।

अङ्ग[२२६]वङ्गकलिङ्गेषु[२२७] मेष[२२८]वारेश्वरोऽब्दयः।

तद्वर्णसस्य[२२९]प्रचुरं स्वदेशे निखिलं फलम्।।७७।।

---

(२१७)व.२,क.-विनाशनः। (२१८)पु.-सस्यभूताः।

(२१९)पु.-क्रोधविभूतयः, व.३-क्रोधाविभूतयः। (२२०)व.२-सस्यसर्वार्ध। (२२१)पु.-वृष्टयस्युः।

(२२२)व.२-वैशादिवारद्वेसस्य, क.-चैत्रादिवारंथोब्देश, व.१-चैत्रादिवारश्चाब्देश।

(२२३)व.१-वारपः, व.२-चारथः, क.-चारयः, व.३-वारयः।

(२२४)व.१-शश्च, क.-शोऽपि। (२२५)पु.-रसोधिपः। (२२६)व.२-वङ्गे। (२२७)पु.-कलिङ्गे। (२२८)व.१-वाराष्टयः स्मृतः, व.२-मेखतो रखरोद्वयः,

व.३-वारेश्वरोऽब्दयः। (२२९)पु.-प्रवरं।

## ।। अब्दलक्षणाध्याय:।।           (अध्याय:११)

सूर्येऽब्दे प्रचुरा रोगा [२३०]मध्यसस्यार्घवृष्टय:।

[२३१]वाराहवोत्सुका क्ष्मेशाश्चतुरङ्गबलाकुला:।।७८।।

चन्द्राब्दे निखिला गाव: प्रभूतपयसो [२३२]धरा।

भाति सस्यार्घ[२३३]पानीयद्यु[२३४]चर[२३५]स्यार्धिमानवै:।।७९।।

अग्नितस्कररोगा:[२३६]स्युर्नृपो विग्रहदाय[२३७]क:।

हत[२३८]सस्यबहुव्यालो [२३९]भौमाब्दे [२४०]वृष्टिनाशद:।।८०।।

प्रभूतवा[२४१]त[२४२]सौम्यब्दे [२४३]मध्यसस्यार्घवृष्टय:।

नृपसंक्षोभसम्भूत[२४४]भूरिक्लेश[२४५]भुजप्रजा:।।८१।।

---

(२३०)व.१-मध्यमध्यमस्यार्घ। (२३१)पु.-वराहोत्सुकाक्ष्मेश, व.२-वाराहोत्सुकक्ष्मेश, व.३-धरावहोत्सुकक्ष्मेशा, व.१-नहागवोत्सुकाक्ष्मेशा:।

(२३२)व.१-धराम्। (२३३)व.१-पानियं। (२३४)व.३-चरस्य।

(२३५)व.१-स्यार्ध। (२३६)व.१-द्योनृपो, व.३-स्युर्नृप।

(२३७)व.१-(लोप:)श्लोक: क्र.-८०ब(क:) त: श्लोक: क्र.-८१ब(वृष्टय:)।

(२३८)पु.-सस्येव। (२३९)पु.-भौमार्ध। (२४०)व.२,क.-वृद्धिनाशनम्।

(२४१)व.२-(लोप:) त। (२४२)व.२.३-सौम्याब्दे। (२४३)पु.-मध्य, व.१,क.-मध्यय। (२४४)व.३-भूमि। (२४५)व.१-भुत्प्रजा।

## ।। अब्दलक्षणाध्यायः ।।　　　　(अध्यायः११)

गुरोः संव[२४६]त्सरे [२४७]विप्राः [२४८]सन्तताध्वरशालिनः।

सम्पूर्ण[२४९]वृष्टिसस्यार्घनिरोगैः [२५०]सुन्दरा धरा।।८२।।

[२५१]यवगोधूम[२५२]शालीक्षुफलपुष्पार्घवृष्टिभिः।

सम्पूर्णा निखिला धात्री भृगुपुत्रस्य वत्सरे।।८३।।

[२५३]सौरेऽब्दे मध्यमा वृष्टिरीतिभीतिर[२५४]नेक[२५५]धा।

[२५६]सङ्ग्रामोद्योगधात्रीशबल[२५७]क्षुण्णा[२५८]खिला धरा।।८४।।

---

(२४६)पु.–सरो। (२४७)क.–विप्रा, पु.–विप्र।

(२४८)पु.–(लोपः)सञ्जतारशी....नः, क.–स्नजातापरशालिनः,

व.२–संयुता धरशीलिनः।

(२४९)व.१–सस्यवृष। (२५०)व.१–सुधराधरा, पु.(लोपः)धरा।

(२५१)व.१–पर्व। (२५२)पु.–शालिनां। (२५३)व.१–सौराष्ट्रे।

(२५४)व.२–शोकदा। (२५५)व.१–धाः। (२५६)व.३,क.–सङ्ग्रामे।

(२५७)व.२–क्षुणा, व.३–क्षुण्ण। (२५८)पु.–खिलधारा, व.१–खिला धराः।

यस्मिन्नब्दे शशाङ्क[२५९]ज्ञः जीव[२६०]शुक्राश्च मन्त्रिणः।
तस्मिन्नब्देऽ[२६१]खिलं [२६२]क्षेमं बहुसस्यार्घवृष्टयः।।८५।।
[२६३]सस्येशानां फलं त्वेवं [२६४]पापाश्चे[२६५]दर्घनाशनम्।
बलाबलं सुसंवीक्ष्य वदेत् फलनिरूपणम्।।८६।।
[२६६]मृगादिराशि[२६७]षट्कं यदुत्तरायणसंज्ञकम्।
याम्यायनं कर्कषट्कं[२६८] ज्ञातव्यं भानु[२६९]भुक्तितः।।८७।।
[२७०]अहोरात्रं क्रमात् [२७१]स्वस्व[२७२]देवानामय[२७३]नद्वयम्।
अखिलं मङ्गलं कर्म सौम्यायनगते रवौ।।८८।।

---

(२५९)पु.–(लोपः)ज्ञः, व.३–ज्ञ। (२६०)पु.–शुक्रः।

(२६१)व.२.३–तुलं, पु.–तुल। (२६२)व.१,क.–क्षेम।

(२६३)व.१–सस्यनाशः। (२६४)व.१–पाप। (२६५)व.२,पु.–दर्थ।

(२६६)व.१–मृगाद्य। (२६७)व.१–षट्के। (२६८)पु.–(अधिकम्) स्यात्स्था।

(२६९)पु.–युक्तितः। (२७०)व.३–अहोरात्र। (२७१)व.१–ज्ञेयं, क.–च्छस्व।

(२७२)पु.–दैवाना। (२७३)क.–नोच्च यत्।

## ।। अब्दलक्षणाध्याय: ।।               ( अध्याय: ११ )

तद्वर्जितं [२७४]तन्निखिलं कार्यं याम्यायने स्थिते।

ऋतवः षड्भानु[२७५]भोगात्तु मकरादि द्वयं [२७६]द्वयम्।।८९।।

भवन्ति शिशिराद्या [२७७]ये हैमन्ता[२७८]न्तास्तु [२७९]तेऽखिलाः।

चान्द्रमानेन [२८०]पौषाद्या मासाः स्युः शिशिरादयः।।९०।।

[२८१] ।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायामब्दलक्षणाध्याय एकादशः।। ।।११।।

---

(२७४)व.१,पु.–निखिलं। (२७५)पु.–भोगान्। (२७६)पु–(लोपः)द्वयम्।

(२७७)व.१–श्च। (२७८)क.–भास्त ते, पु.–स्तास्तु ते। (२७९)व.१–षट्कदा।

(२८०)क.–पौषा।

(२८१)पु.–इति अब्दलक्षणमेकादशः।।,

व.१–इति कश्यपसंहितायां ब्रह्मर्षिविरचितायांसंवत्सराध्याय एकादशः।।,

व.२–अब्दलक्षण एकादशः।।, व.३–इत्यब्दलक्षणमेकादशोध्यायः।।,

क.–इत्यब्दलक्षणमेकादशः।।

# ।। द्वादशोऽध्यायः ।।

## ।। तिथ्यध्यायः ।।

अथातः सम्प्रवक्ष्यामि तिथ्यध्या[1]यं च [2]तत्क्रियाम्।

[3]तदीशाः क्रमशो [4]धातृवह्नि[5]द्यौकमलासनाः ।।१ ।।

विष्णुगौर्यौ [6]गणाधी[7]श[8]यमौ सर्व[9]सिद्धिकरौ।

गु[10]हार्के[11]न्द्रौ [12]च [13]वस्वीशौ दुर्गाना[14]गौ च धर्मपः ।।२ ।।

[15]वस्वीश्वरौ हरिर[16]वौ [17]कामः [18]शर्वो निशाकरः।

[19]दर्शा[20]ह्वयतिथेस्त्वीशा भवन्ति पितरः [21]सदा।।३ ।।

---

(१)पु.–ये। (२)पु.–मक्रियाम्। (३)व.१–तिथीशाः। (४)पु.–धात्रीव।

(५)व.२–द्वै, व.१–च। (६)पु.–धना। (७)व.३,क.–शा।

(८)पु.–सञ्जमौ, व.३,क.–जसौ। (९)व.१–निशाङ्करौ। (१०)व.१–हो।

(११) व.१–न्द्रो, व.२–न्द्रै, क.–ष्टौ। (१२)व.२–व। (१३)व.२–वस्वांशौ। (१४)पु.–नौ। (१५)व.१–विश्वश्वरौ। (१६)व.१.२.३–वी। (१७)पु.–कलि।

(१८)पु.–सर्वे, क.–सर्पौ, व.१–शिवकलिस्ततः।

(१९)व.१–शशी विश्वेदर्शसंता तिथीशाः। (२०)व.२–हय। (२१)व.२–सदाः।

।। तिथ्यध्यायः।। (अध्यायः१२)

नन्दा भद्रा जया रिक्ता पूर्णा[२२]ख्याः स्युः पुनः पुनः।
[२३]नेष्टमध्येष्ट[२४]फलदाः शुक्ले कृष्णे प्रती[२५]पगाः।।४।।

लौहाश्मवृक्ष[२६]शय्यादि[२७]चित्तप्रेष्यासवादि यत्।
[२८]रणोप[२९]करणं क्षेत्रं तिथौ प्रतिपदीरितम्।।५।।

मौञ्जीविवाहयात्रा[३०]सु [३१]प्रतिष्ठाभूषणादिकम्।
[३२]पुष्टिवास्त्वादिकं कर्म द्वितीया[३३]यां विधीयते।।६।।

शिल्पमौञ्जीप्रतिष्ठा[३४]श्च वि[३५]द्योद्वाहादिमङ्गलम्।
[३६]यात्रेभोष्ट्रा[३७]म्बुगोकर्म तृतीयायां [३८]विभूषणम्।।७।।

---

(२२)व.३,क.–द्याः। (२३)पु.–नष्टमध्ये। (२४)व.१–फलदा।
(२५)व.१–पदाः। (२६)व.३,क.–शास्त्रा।
(२७)व.२–विन्नलेख्या, क.–लेष्या, व.३–वित्तलेखसपादि।
(२८)व.१–व.३–रणोध। (२९)व.१–कारणं।
(३०)व.१–श्च, पु.–स, व.३–स, क.–स्यत्। (३१)क.–प्रतिता।
(३२)व.१–पौष्टिकाश्वा, व.२–युद्ध। (३३)पु.–यं। (३४)व.१–च।
(३५)पु.–धो। (३६)व.१–यन्त्रेभाष्ट्रा, पु.–यात्राभोष्ट्रा, क.–ष्ट्रां।
(३७)पु.–बुगे।
(३८)क.–विधीयते।

[३९]बन्धनोच्चाटना[४०]ग्न्यस्त्र[४१]विषाद्यखिलदारुणम्।
अथर्वणादिकं कर्म रिक्ता[४२]स्वेव विधीयते।।८।।
यात्रोपनायनो[४३]द्वाह[४४]वास्तुशान्तिकपौष्टिकम्।
[४५]चरस्थिराखिलं कर्म पञ्चम्यां समुदीरितम्।।९।।
सेवाभूषणगोवास्तुसमरं क्रयविक्रयम्।
[४६]भूषणं कर्म[४७] भैषज्यं सर्वं षष्ठ्यां विधीयते।।१०।।
वास्तूपनयोद्वाहप्रतिष्ठा [४८]च [४९]चिरस्थिरम्।
कृषिभूषण[५०]सङ्ग्रामं सप्तम्यां समुदी[५१]रितम्।।११।।

---

(३९)व.१(लोपः)श्लोकः क्र.-८अ,ब। (४०)क.-स्त्राश्च।

(४१)पु.-विश्वा, व.२-विरचा। (४२)पु.-श्वे च, क.-ख्यैव, व.२-स्वे तद्।

(४३)व.१-द्वाहा। (४४)व.१-श्रतिष्ठा शांति। (४५)व.१-सर्वा, पु.-चरास्थिरा।

(४६)व.१-भूप। (४७)व.१-च। (४८)व.१.२.३,क.-दि। (४९)पु.-चिरं।

(५०)व.३-सङ्ग्रामा। (५१)व.३-रिताः।

## ।। तिथ्यध्यायः ।।                (अध्यायः १२)

[५२]शिवस्थापनलोहाश्मवृक्षवाणिज्यभूषणम्।

[५३]खा[५४]तक्षेत्र[५५]रणो[५६]द्योगमष्टम्यां समुदीरितम्।।१२।।

[५७]यानोपनयनोद्वाहप्रतिष्ठाखिलमङ्गलम्।

[५८]पौष्टिकं [५९]शान्तिकं कर्म [६०]दशम्यामखिलं शुभम्।।१३।।

[६१]विवाहकृषिवाणिज्यमुपवासादिभूषणम्।

[६२]वाणिज्यशिल्पनृत्याद्यमेकादश्यां विधीयते।।१४।।

चरस्थिराखिलं कर्म स्थापनोद्वाहभूषणम्।

द्वादश्यां सर्व[६३]मुक्तं [६४]यद्यात्रान्नग्रहणं विना।।१५।।

[६५]वास्तूपनयनोद्वाहप्रति[६६]ष्ठोद्यानभूषणम्।

माङ्गल्य[६७]मखिलं कर्म त्रयोदश्या[६८]मुदीरितम्।।१६।।

---

(५२)क.-(लोपः)श्लोकः क्र.-१२अ,ब। (५३)व.३-क्षा। (५४)व.२-तं। (५५)व.३-रणे। (५६)पु.-योग। (५७)क.-यात्रो। (५८)व.१-शांतिकं। (५९)व.१-पौष्टिकं। (६०)व.१-दशम्यां समुदीरितम्। (६१)व.१-विवाहा। (६२)व.१-सङ्ग्राम। (६३)व.१-भुक्ता हि।

(६४)व.१-यात्रा न।, व.२-शय्यायान्नात्रं ग्रहणं, क.,व.३-यात्रान्नग्रहणं।

(६५)क.-यात्रो। (६६)व.२-ष्ठायान। (६७)पु.-मङ्गलं। (६८)व.१-विधीयते।

।। तिथ्यध्यायः।।　　　　　　(अध्यायः१२)

[६९]दन्तधावन[७०]तैलस्त्री[७१]मांसयात्रोपनायनम्।

[७२]विना न क्षौरमितरं पौर्णमास्यामुदीरितम्।।१७।।

[७३]अमायां पितृकर्मैकं कर्तव्यमितरं न तु।

[७४]रिक्ताख्यास्तिथय[७५]श्चामा सर्वकर्म[७६]निगर्हि[७७]ताः।।१८।।

अष्टमी द्वादशी षष्ठी पक्ष[७८]रन्ध्रास्तु तासु च।

[७९]मङ्गले सर्वदा [८०]त्याज्या न्यूनं हि [८१]दशनाडिकाः।।१९।।

---

(६९)व.३-(लोपः)श्लो.क्र.-१७ अ,ब,क। (७०)व.२,क.-तैलादि।

(७१)पु.-मास। (७२)व.२-विनक्षौतानाक्षौर, व.१-क्षौरं विनान्यमितरं।

(७३)व.१-(पाठभेदः)पितृकर्म च कर्तव्यममायामितरं न च।

(७४)व.१-रिक्ताश्च, व.२-ह्यास्। (७५)व.२-श्चेमा।

(७६)व.३-पिगर्हिता, व.१-कर्मसु। (७७)पु.-ता।

(७८)पु.-लेन्द्रास्तु, व.२-रम्भास्तु, व.१-रन्ध्रस्तु।

(७९)व.२-मङ्गलं, व.३-मङ्गलैः। (८०)व.२-त्याज्त्यं।

(८१)व.२-दशकनिष्ठिका:, व.१-मनकादशभाद्विजा:, पु.-दशनाडिका।

## ।। तिथ्यध्यायः ।। (अध्यायः१२)

मध्यमा प्रतिपच्छुक्ले शेषाः स्युर्मङ्गलप्रदाः।

[८२]षष्ठ्यां दर्शे[८३]प्रतिपदि द्वादश्यां [८४]चैव पर्वसु।।२०।।

[८५]नवम्यां [८६]न च कुर्वीत कदाचिद्दन्तधावनम्।

स्त्रीसेवनममावास्यां चतुर्दश्यां [८७]क्षुरक्रिया।।२१।।

षष्ठ्यां [८८]तैलस्तथाष्टम्यां [८९]पलञ्च [९०]परिवर्जयेत्।

आदित्यभौमयोर्वारे व्यतीपाते च पर्वसु।

तैला[९१]भ्यङ्गं न [९२]कर्तव्यं वैधृतौ च दिनक्षये।।२२।।

कुर्या[९३]दामलकं स्नानं दशम्यां मूढधीर्नरः।

पुत्रनाशो भवेत्तस्य त्रयोदश्यां [९४]धनक्षयः।।२३।।

---

(८२)व.१–अष्टम्यां, व.३–षष्ठी। (८३)व.१–षष्ठ्यौश्च।

(८४)व.१–प्रतिपत्सु च।

(८५)व.२(लोपः)श्लोकः क्र.२१अ तः श्लोकः क्र.२३ब।

(८६)व.१,क.–च न।, व.३–नैव। (८७)पु.–क्षुरं तथा। (८८)व.३–तैलं।

(८९)व.१–पलं चैव। (९०)व.१–विवर्जयेत। (९१)व.१.३–भ्यगो।

(९२)व.१.३–कर्तव्यो। (९३)व.१–दामलक। (९४)व.३–धनक्षयम्।

सम्पत्पुत्र[९५]क्षयस्तस्य [९६]द्वितीयायामसंशयम्।
[९७]सप्तम्यां च [९८]नवम्यां [९९]वा अमायां कुलनाशनम्।।२४।।
निशि चन्द्रवती [१००]या तु पूर्णिमानुमति[१०१]श्च सा।
दिवा [१०२]चन्द्रवती राका [१०३]तद्वदेव द्विधा[१०४]प्यमा।
सिनीवाली चन्द्रवती नष्टचन्द्रा कुहू[१०५]र्मता।।२५।।
कार्त्तिके शुक्लनवमी [१०६]ह्यादिः कृतयुगस्य [१०७]सा।
त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंज्ञिता।।२६।।
माघे पञ्चदशी [१०८]कृष्णा द्वापरा[१०९]दिरुदीरिता।
कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी।।२७।।[११०]

---

(९५)पु.–क्षयंतस्य, व.३–क्षयेतस्य। (९६)व.२–द्वितीयायां न।
(९७)पु.–सप्तम्या। (९८)व.२–(लोपः)नवम्यां वा। (९९)व.१–च।
(१००)पु.–सा। (१०१)व.१–स्मृताः। (१०२)व.१–चान्द्र।
(१०३)पु.–तद्देव, व.१–तद्वच्च। (१०४)पु.–धमा। (१०५)व.१–स्मृता।
(१०६)व.१–आदिः। (१०७)व.२–च। (१०८)पु.–शुक्ला।
(१०९)व.२–तु दीरिताम्, क.–रुदीरिताः, व.१–दिः श्रुतीरिताः।
(११०)व.१–(लोपः)श्लोकः क्र.–२७ड तः श्लोकः क्र.२८अ।

## ।। तिथ्यध्यायः ।।                (अध्यायः१२)

द्वादश्यूर्जे शुक्लपक्षे नवम्य[१११]श्वयुजे [११२]सिता।

चैत्रभाद्रपदे चैव तृतीया शुक्लसंज्ञिता।।२८।।

एकादशी सिता पौषे [११३]आषाढे दशमी सिता।

माघे च [११४]दशमी शुक्ला [११५]नभस्येऽ[११६]थ सिताष्टमी।।२९।।

श्रावणे [११७]मास्यमावास्या [११८]फाल्गुने मासि पूर्णिमा।

आषाढे कार्त्तिके मासि चैत्रे ज्येष्ठे च पूर्णिमा।

मन्वादयः स्नानदानश्राद्धे[११९]ष्वत्यन्तपुण्यदाः।।३०।।

यदा कृष्णत्रयोदश्यां [१२०]मघास्विन्दुः करे रविः।

गजच्छाया तदा ज्ञेया पितृणां दत्तमक्षयम्।।३१।।

---

(१११)पु.-श्वयुर्जे। (११२)व.२-सिते। (११३)व.१-प्याषाढे।

(११४)पु.-सप्तमी। (११५)व.१-र्नमस्यस्य। (११६)व.२.३,क.-प्य।

(११७)व.१-चाप्यमावास्या। (११८)क.-श्रायेण। (११९)व.१-त्व।

(१२०)पु.-मघाविधु।

## ।। तिथ्यध्यायः ।।　　　　　　　　　(अध्यायः १२)

एकस्मिन्वासरे [१२१]तिस्त्र[१२२]स्तिथयः स्युः क्षया [१२३]तिथिः।

तिथिर्वारत्र[१२४]येऽप्येकाभ्यधि[१२५]कात्वेऽतिनिन्दिता।।३२।।

[१२६]यामस्तमा[१२७]स्तिथिं प्राप्य मुहूर्तत्रयवाहिनीम्।

सूर्यस्त्वखण्डसंज्ञोऽसौ [१२८]व्रताद्यखिलकर्मसु।।३३।।

[१२९]तिथेः पञ्चदशो भागः क्रमेण तिथयोऽखिलाः।

एकैकस्यामपि तिथौ [१३०]तदर्धं करणं [१३१]स्मृतम्।।३४।।

[१३२]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां

महासंहितायातिथ्यध्यायो द्वादशः।।　　।।१२।।

---

(१२१)क.–मिश्रां। (१२२)पु.–स्तिथिख। (१२३)व.१–भिधा, क.–मिति।

(१२४)पु.–यस्यैका।

(१२५)व.२–कत्वेतिनिन्दिताः, पु.,क.–कात्वेतिर्मिता, व.३–कात्वेनिर्मिता।

(१२६)व.१.३–यामस्तग। (१२७)व.२–यस्तिथिं। (१२८)व.२–व्रताय।

(१२९)व.१–तिथिः। (१३०)पु.–तदर्ध। (१३१)क.,व.३–क्षणम्, व.२–क्षये।

(१३२)पु.,क.–इति तिथ्यध्यायो द्वादशः।।, व.१–इति तिथ्यधिकारो द्वादशः।।,

व.२–तिथ्यध्यायोद्वादशः।।, व.३–इति तिथ्यध्यायो दशमः।।

## ।। त्रयोदशोऽध्यायः ।।

## ।। वाराध्यायः ।।

अथातः सम्प्रवक्ष्यामि [१]वाराणा[२]मखिलक्रियाम्।

वारो हि कारणं यस्मात्ति[३]थेर्वारो बलाधिकः ।।१ ।।

[४]राज्ञाभिषे[५]कमाङ्ग[६]ल्यं [७]सेवास्त्र्योर्णाश्वभेषजम्।

स्वर्ण[८]सङ्ग्राम[९]धान्यादि विदद्याद्रविवासरे ।।२ ।।

शङ्खमुक्ता[१०]ब्जरजत[११]वृक्षेक्षुस्त्री[१२]विभूषणम्।

[१३]क्रतुकृष्यम्बु[१४]नृत्याद्यं [१५]शृङ्गिकर्मेन्दुवासरे ।।३ ।।

---

(१)पु.–वार। (२)पु.–मपि लक्षणम्, व.२.३–मखिलाक्रियाम्।
(३)व.१–थौ।

(४)व.३–गजा। (५)व.२–को, व.१–कं। (६)पु.–ल्य।

(७)व.१–सेव्यस्त्रीणोऽश्व, क.–स्त्रीणाश्व, व.३–स्त्रीर्णास्व, पु.–वास्त्रोर्णाश्व।

(८)व.१–सङ्ग्रह। (९)व.२–धान्यानि। (१०)पु.–ञ्ज, व.१–श्च।

(११)व.१–मुक्ताश्च, व.२–वृक्षेक्षुस्त्री, क.–वृक्षेक्षूस्त्रीवि। (१२) पु.–षुभूषणम्।

(१३)पु.–ऋतुपुष्पं। (१४)व.१–बृत्याद्यं, व.२–भूषाद्यं। (१५)पु.–शृङ्ग।

प्रवालाकरधात्व[१६]स्त्रविषाग्निसमरादिकम्।

सन्धिविग्रहभूकर्मभूमिपुत्रस्य वासरे।।४।।

गीतनृत्यकलाशिल्पलिपि[१७]भूरससङ्ग्र[१८]हः।

[१९]सङ्ग्रामवार्ता[२०]वाग्वादभूषणाद्यं बुधेऽहनि।।५।।

[२१]पौष्टिकं बलमाङ्गल्यं [२२]हेमाम्बरविभूषणम्।

वृक्ष[२३]गुल्मलतायानकर्मदेवेज्यवासरे।।६।।

स्त्री[२४]नृत्यगीतहेमा[२५]श्च कृषिरत्नविभूषणम्।

गोधान्योत्सव[२६]पण्यादि[२७]कर्म [२८]भार्गववासरे।।७।।

क्रूरानृतासव[२९]स्तेयसीसाश्मा[३०]यस[३१]वास्तु [३२]यत्।

स्थिरकर्माखिलं [३३]धान्य[३४]सङ्ग्रहं [३५]सौरवासरे।।८।।

---

(१६)व.१-श्व। (१७)व.२-भूषण। (१८)व.२-हं। (१९)व.१-ध्नामवाश्वा। (२०)पु.-विग्वाद। (२१)व.१-पौष्टिकाश्वर। (२२)पु.-हमां। (२३)क.-कर्म।

(२४)व.१,क.-गीतनृत्य। (२५)व.३-श्व। (२६)क.-मया। (२७)व.१-कार्यं। (२८)व.१-भृगुजलावासरे। (२९)व.२-सौयसी, व.१-स्तेय। (३०)व.२.३,क.-य, व.१-यन। (३१)व.३-वस्तु। (३२)व.१-तत्। (३३)पु.-धान्यं। (३४)व.१-सङ्ग्रह। (३५)व.२.३-सौरिवासरे।

।। वाराध्यायः ।। (अध्यायः १ ३ )

रविः स्थिरश्चरश्चन्द्रः कुजः क्रूरोऽ[३६]खिलं बुधः।

ईज्यो लघु[३७]र्मृदुः शुक्रस्तीक्ष्णो दिनकरात्मजः।।९।।

[३८]क्लेशः कान्ति[३९]र्मदो लक्ष्मीर्धनहानिः [४०]सदा तथा।

सौभाग्य[४१]मर्कादिवारेष्व[४२]भ्यङ्गफलमी[४३]रितम्।।१०।।

[४४]वारप्रवृत्तिः सर्वेषां लङ्कायां भास्करोदये[४५]।

देशान्तश्चराधा[४६]ख्यनाडीभि[४७]स्तदधोपरि।।११।।

बलवद् ग्रहवारेऽपि [४८]सत्कृतं कर्म सिध्यति।

दुर्बल[४९]ग्रहवारेऽ[५०]पि [५१]न सिध्यन्ति कदाचन।।१२।।

---

(३६)व.१-बुधः खलः। (३७)व.१-भृगुः। (३८)व.१-केशः।

(३९)व.१.२-र्गदो, क.-मन्दो, व.३-र्मतिर्लक्ष्मी।

(४०)व.१-रनिष्टता, व.३,क.-विपत्तथा। (४१)व.१-मर्कवारादि।

(४२)क.-भ्यङ्गे। (४३)व.२-रिताम्। (४४)व.२-वारः। (४५)पु.-दयः।

(४६)व.१-ख्यैर् , व.२-खं, व.३-या।

(४७)व.१-तथापरे, व.३,क.-स्तदधोपरे।

(४८)व.१.२-यत्कृतं, क.-संकृतं। (४९)व.१-प्रद। (५०)व.१-षु, व.२-तु।

(५१)व.३-दुःखेनापि न सिध्यति।

## ।। वाराध्यायः ।। (अध्यायः१ ३ )

चन्द्रसौम्येज्यशुक्राणां वारास्त्वखिलकर्मसु।

पूजितास्त्वन्यवारेऽ[५२]पि प्रोक्तं कर्मैव सिद्धयति।।१ ३ ।।

सूर्यो रक्तः शशी[५३]गौरो वर्णो भौम[५४]श्च लोहितः।

[५५]दूर्वाछविर्बुधो जीवः [५६] स्वर्णवर्णः सितः सितः।।१४।।[५७]

सौरिः कृष्णः [५८]स्वस्ववारे स्वस्व[५९]वर्ण[६०]क्रियाः [६१]शुभाः।

[६२]शैलाक्षवेदा ७।५।४ स्तर्का[६३]ब्धिनगाः ६।४।७

[६४]पञ्चाग्निबाहवः ५।३।२

।।१५।।

---

(५२)व.१-षु। (५३)व.२-शुक्लाः। (५४)व.१.२.३,क.-स्तु।

(५५)पु.-(लोपः)छवि, व.२-दूर्वास्तु। (५६)व.२-दूर्वाभश्च।

(५७)व.२-(इतः पर्यन्तं श्लोकः संख्या) २२०। (५८)व.१-स्वस्य।

(५९)व.३,क.-वर्णा। (६०)व.१.२,क.-क्रिया, पु.-क्रियां। (६१)व.१-मूलाः।

(६२)पु.-शैलेषु। (६३)व.१-स्तर्काष्वि। (६४)व.१-वेदाग्नि।

।। वाराध्याय:।। (अध्याय:१३)

[६५]वेदाक्षिबाणा ४।२।५ [६६]लोकैकेभा [६७]३।१।८

[६८]स्त्वक्षिगिरिवह्नय: [६९] २।७।३ ।

चन्द्रे[७०]भतर्का [७१]१।८।६

कुलिकयमघण्टार्धयामका: ।।१६।।

प्रहरार्धप्रमाणास्ते भानुवारादित: क्रमात्।

चतुर्विंशतिसङ्ख्या: स्यु: [७२]क्षणे वारे च वासरे।।१७।।[७३]

यो वासराधिपस्त्वाद्य[७४]स्तस्मात्षष्ठो द्वितीयक:।

[७५]तस्मात्षष्ठस्तृतीय: स्यादेवमेवं तत: [७६]परम्।।१८।।

---

(६५)व.१-वेदद्विकानिला:, व.२-वेदावक्राणांत्वा ४।५।५।

(६६)व.१-लौकैकेन। (६७)व.२-३।३।८ । (६८)व.१-स्त्वक्षद्विवाहव।

(६९)व.१-५।७।३ । (७०)व.१,३-भतर्का:। (७१)व.२-२।८।६ ।

(७२)व.१-क्षणेवाराश्चवासरे, व.२-क्षणावारोस्ववासरात्, क.-क्षणवारा: स्ववासरात्, व.३-क्षणवाराश्चवासरे।

(७३)व.१-(अधिकम्)वारेशा: पञ्चम: पूर्व: स्तस्मात्षष्ठ: पुन: पुन:।

(७४)पु.-स्तस्यात्षष्ठो। (७५)व.१,क.-तस्मात्वष्ट:, व.२-तस्मात्ह्यष्ट।

(७६)व.१-परे।

## ।। वाराध्यायः ।। (अध्यायः १ ३ )

यस्य ग्रहस्य वारेऽपि यत्कर्म [७७]समुदीरितम्।

[७८]तत्तस्य कालहोरासु [७९]तदा सर्वं विधीयते।।१९।।

[८०]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

वाराध्यायस्त्रयोदशः।। ।।१३।।

---

(७७)व.१-तत्समुदीरितम्। (७८)व.१-(लोपः)-श्लोकः क्र.-१९क,ड।

(७९)व.२,क.-सदा।

(८०)व.१-इति काश्यपसंहितायां वाराध्यायस्त्रयोदशः।।१३।।,

व.२-इति वाराध्यायस्त्रयोदशः।।१३।।,

व.३,क.,पु.-इति वाराध्यायस्त्रयोदशः।।

## ।। चतुर्दशोऽध्यायः ।।

## ।। नक्षत्राध्यायः ।।

अथातः सम्प्रवक्ष्यामि [१]नक्षत्राध्यायमुत्तमम्।

नक्षत्र[२]वशतः सर्वं शुभाशुभनिरूपणम्।।१।।

क्रमाद् भेशादस्त्रयमवह्निधातृनिशाकराः।

[३]ईशोऽदितीज्याहिपितृभगार्यमदिवाकराः।।२।।

त्वष्टृवायुसहस्राक्षवह्नि[४]मित्रामरेश्वराः।

निर्ऋत्युदक[५]विश्वेश्रीवत्साङ्क[६]व[७]सवोऽम्बुपाः।।३।।

अजपादाभिधानाहिर्बुध्न्यपूषा[८]ह्वया [९]अमी।।४।।

---

(१)व.३-(लोपः)श्लोकः क्र.-१ब तः श्लोकः क्र.-२अ(क्रमाद्भेशा..)पर्यन्तम्।

(२)व.१,क.-वशतः, व.२-वस्वतः। (३)व.१-ईशा।

(४)व.२-मित्रेविखेचराः, पु.-मित्रखेचराः। (५)क.-विश्वाश्चश्रीवधुश्च।

(६)व.३,क.-वा। (७)व.१.२.३,क.-सवाम्बुपाः। (८)पु.-द्वया।

(९)व.१-स्त्वमी।

यात्रोप[१०]नयन[११]क्षौरवस्त्रसीमन्तभूषणम्।

प्रतिष्ठा[१२]श्वेभविद्यास्त्रकृषिकर्माश्विभे शुभम्।।५।।

बिलप्रवेशगणितविषशस्त्राग्निदारुणम्।

वापीकूपतडागादि[१३]निक्षेपं याम्यभे [१४]शुभम्।।६।।

[१५]विषाग्न्यस्त्रसङ्ग्रामदारुणाद्यखिल[१६]क्रियाः।

सन्धिविग्रह[१७]वाद्यादि[१८]विषादाश्वाग्नि[१९]भे [२०]शुभम्।।७।।

[२१]वस्त्रोप[२२]नयनोद्वाह[२३]सीमन्तश्च कृषिक्रियाः।

देवप्रतिष्ठा[२४]वास्त्वादिस्थिरका[२५]र्यं च धातृभे।।८।।

---

(१०)व.२–नयनं। (११)क.–क्षौरं। (१२)व.२–खेभ।

(१३)व.१–निक्षोपो, व.३–निक्षेप। (१४)व.१–शुभः।

(१५)व.१.३,क.–विषाग्निश। (१६)पु.–क्रया। (१७)पु.–धावित्र, क.–धाचित्र।

(१८)व.१–विवादा। (१९)पु.–भं। (२०)व.१.३,क.–शुभाः।

(२१) व.२–वास्तो।

(२२)क.–नायनो। (२३)व.१–सीमन्तादि। (२४)व.१–थात्वादि।

(२५)व.३,क.–र्याश्च। (२६)व.२–ध्माणां।

प्रतिष्ठोद्वाहसीमन्तयात्रोपनयनक्रिया:।

क्षौरवास्तुस्वर्णरत्नगजौ[२६]ष्ट्राणाञ्च चन्द्रभे।।९।।

[२७]तोरणध्वजसङ्ग्रामप्राकारा[२८]स्त्र[२९]क्रिया: खिला:।

सन्धिविग्रहवेतालरसादीनां च [३०]रुद्रभे।।१०।।

[३१]यात्राप्रतिष्ठासीमन्तवास्तु[३२]वस्त्रोपनायनम्।

क्षौरभूषणधान्या[३३]श्च [३४]कर्मभेऽदितिसंज्ञके।।११।।

चरस्थिराणि कार्याणि सर्वाण्यखिलदेहिनाम्।

कार्याणि [३५]पुष्यनक्षत्रे विना पाणिग्रहं सदा।।१२।।[३६]

---

(२७)व.२-तोरणं। (२८)व.२-दि। (२९)व.२-क्रिया। (३०)पु.-रुद्रभे।

(३१)व.३-वाचा। (३२)पु.-शास्त्रोप। (३३)व.३-श्व।

(३४)व.१.२-कर्माण्यदितिसंज्ञके, क-कर्मभे दिनिसंज्ञके।

(३५)व.१-(लोप:) पुष्यनक्षत्रे विना पाणिग्र।

(३६)व.१-(पुनरोक्ति:)श्लोक: क्र.-१०अ,ब।

[३७]धातुवादा[३८]हवद्यूतविषशस्त्राग्निबन्धनम्।

वादवाणिज्य[३९]पिशुनं कर्मकद्रूजभे [४०]हितम्।।१३।।

गोधान्यकृषिवाणिज्यरणोपकरणादिकम्।

विवाहशिल्पनृत्याद्यं निखिलं कर्म [४१]पैतृभे।।१४।।

रणदारुणशस्त्राग्निधातु[४२]र्घातविषादिकम्।

विवादभेषजं कर्म कार्यं [४३]पूर्वात्रियेऽपि [४४]च।।१५।।

वस्त्रोपनयनोद्वाहवास्तुसद्मप्रवेशनम्।

[४५]अश्वप्रतिष्ठा[४६]सीमन्तगजकर्मोत्तरासु [४७]च।।१६।।

प्रतिष्ठो[४८]द्वाहसीमन्त[४९]यात्राक्षौर[५०]विभूषणम्।

वस्त्रोपनयना[५१]श्वेभं वास्तुकर्म दिनेशभे।।१७।।

---

(३७)क.-विवाद, पु.-धातुवा। (३८)पु.-रुण।

(३९)व.१-पैशून्यं, व.३-पिशुन। (४०)व.१-शुभम्।

(४१)पु.-पैतृकम्, व.३-पितृभे। (४२)व.३,क.-वाद, व.१.२-र्वाद। (४३)व.१-सर्वा। (४४)व.२-वा। (४५)व.१-अग्नि। (४६)व.२-सीमन्तः। (४७)क.-वा।(४८)व.२-द्वाहणं। (४९)व.२-मन्त्रा। (५०)पु.-विभूषणम्। (५१)व.३,क.-श्वेभ, व.२-ष्वेवभ।

[५२]प्रवेशवस्त्रक्षौरादिप्रतिष्ठावास्तुभूषणम्।

[५३]अश्वेभ[५४]नयनेभो[५५]ष्ट्रसीमन्तोर्णादिचित्रभे।।१८।।

प्रतिष्ठोद्वाहसीमन्तक्षौरवस्त्रोपनायनम्।

भूषणाश्वेभ[५६]पशु[५७]पवास्तुकर्म समीरभे।।१९।।

वाणिज्यवस्त्राभरण[५८]रसधान्यादि[५९]सङ्ग्रहम्।

[६०]शिल्पलेखननृत्याद्यं सर्वमिन्द्राग्निभे [६१]हितम्।।२०।।

यात्रोपनयनोद्वाहप्रतिष्ठा[६२]श्च प्रवेशनम्।

सीमन्तवस्त्रा[६३]भरणगजकर्म च [६४]मित्रभे।।२१।।

---

(५२)व.१-क्षौरप्रतिष्ठावस्त्रादिप्रवेशो वास्तुभूषणम्।

(५३)व.१-अश्वस्य। (५४)पु.-नयनभो। (५५)पु.-(लोपः) ष्ट्रो।

(५६)व.१-पश्यम्बु कर्म कार्य समीरभे। (५७)व.२-या।

(५८)पु.-रसावन्यादि। (५९)व.१,क.-सङ्ग्रहः। (६०)क.-शिला।

(६१)व.१-हिते। (६२)व.२-श्व। (६३)व.३-भरणं।

(६४)व.१-मैत्रभे।

आहारक्षौरवाणिज्यशिल्पवस्त्रादिलेखनम्।

लोहाश्म[६५]पट्टगीता[६६]द्यं कर्म वासवभे हितम्।।२२।।

[६७]विवाहाहववाणिज्यकृषिभैषज्यकर्म [६८]यत्।

सन्धिविग्रहशस्त्रास्त्रशिल्पकर्म च मूलभे।।२३।।

यात्राप्रतिष्ठासीमन्तव्रतबन्धन[६९]भूषणम्।

क्षौरवास्तुपुरा[७०]रामं [७१]निखिलं श्रवणे हितम्।।२४।।

यात्रावस्त्रोप[७२]नायनं प्रवेशक्षौरभूष[७३]णम्।

प्रतिष्ठावास्तुसीमन्त[७४]प्रवेशव्रतबन्धनम्।

[७५]भूषणश्वेतवस्त्रादि जलकर्म जलेशभे।।२५।।

---

(६५)व.१.२-पशु। (६६)व.२,क.-द्य।

(६७)व.१-विवाहश्चैव। (६८)पु.-वत्, क.-च। (६९)व.१-भूषणाः।

(७०)व.१-रार। (७१)व.२-निखिले। (७२)व.१-पवन, व.२.३-पवनं।

(७३)व.१-णः। (७४)व.१-प्रवेशं वसुभेहिता।

(७५)व.१-(लोपः)श्लोकः क्र.-२५क-ड, व.३-भूषणं।

प्रतिष्ठोद्वाहसीमन्तप्रवेशव्रतबन्धनम्।

[७६]वस्त्रक्षौरा[७७]श्व [७८]तोयेभवास्तुकर्म च पौष्णभे।।२६।।

[७९]मघान्तकद्विदेवा हि मूलपूर्वात्रयाग्निभम्।

अधोमुखं [८०]तु [८१]नवकं भानां तत्र विधीयते।।२७।।

वापीकूपतडागादिनिधे[८२]रुद्धरणं च यत्।

[८३]बिलप्रवेशगणितशिल्प[८४]भूतादिसाधनम्।।२८।।

[८५]मित्रेन्द्रार्द्रादिति[८६]वसु[८७]करपौष्णाश्विवायु[८८]भम्।

तिर्यङ्मुखं च [८९]नवकं [९०]तत्र नूनं विधीयते।।२९।।

---

(७६)व.३-वस्त्रं। (७७)क.-श्व। (७८)व.३,क.-तोयेन।

(७९)व.३-मघान्तिक। (८०)व.२-(लोप:)तु।

(८१)क.-नक्षत्रं, व.३-मवक्रं।

(८२)व.२-तुद्धरणं, पु.-रुद्दरणं, व.१-स्तु रवणं। (८३)क.-बीज।

(८४)पु.-भूषणादि। (८५)क.-मित्रेद्विन्द्रादि। (८६)पु.-वसु:।

(८७)व.३-(लोप:) कर। (८८)क.-भि:। (८९)पु.-नवके।

(९०)व.१-मन्त्र।

[९१]नटाश्वपशुनावो[९२]ष्ट्रहलादिकृषिकर्म यत्।

वसुधातृहरी[९३]शार्य[९४]स्तूत्तरा वारिदैवतम्।।३०।।

ऊर्ध्वास्यधिष्ण्यनवकमिदं तत्र विधीयते।

मर्त्यामर्त्यगृहारम्भप्राकारोद्यान[९५]पट्टनम्।।३१।।

स्थिरं रोहिण्युत्तराभं क्षिप्रं पुष्याश्विसूर्यभम्।

चरभं वसुवारीशपवनादितिविष्णुभम्।।३२।।

मिश्रं [९६]वह्निद्विदैवत्यमुग्रं [९७]पूर्वमघान्तकम्।

रौद्रकद्रुजमूलेन्द्र[९८]वृन्दं तीक्ष्णचतुष्टयम्।।३३।।

मृदुवृन्दं [९९]त्वष्ट्रमित्रपौष्णसीतांशुभं त्विदम्।

स्वनाम[१००]सदृशफलदमेतत्सर्वमुदीरितम्।।३४।।

---

(९१)व.१-रपा, पु.-तटा, व.३-तटाकाश्व। (९२)व.२-त्र।

(९३)व.२-शीर्य, व.१-शाश्वर्यत्युत्तरा च द्विदैवतम्। (९४)क.-त्यूत्तरा।

(९५)पु.-पदृणाम्, व.१-पट्टतम्, व.३-पट्टणम्, व.२-पसमम्।

(९६)पु.-वह्निं। (९७)क.-पूर्वा। (९८)व.२-दिष्टंतीक्ष्ण।

(९९)क.-त्वाष्ट्रमित्र, व.२-त्वप्रमिदं, त्वष्ट्रमिश्र। (१००)व.१-सम।

## ।। नक्षत्राध्यायः ।।                    (अध्यायः १४)

पौष्णादिति[१०१]त्वाष्ट्रमित्र[१०२]दस्त्रार्केन्दुवसुडुषु।

[१०३]विष्णुपुष्ये[१०४]षु बालानां कर्णवेध उदीरितः।।३५।।[१०५]

अदितिद्वयदस्त्रेन्दुकरादित्रितयेऽपि [१०६]च।

उत्तरासु च रोहिण्यां गजकर्माखिलं शुभम्।।३६।।

मृदुस्थिरक्षिप्रभेषु विविष्णुचरभे[१०७]षु च।

अश्वानामखिलं कर्म कार्यं [१०८]शुक्रस्य वासरे।।३७।।

स्थिरं रोहिण्युत्तराभं क्षिप्रं पुष्याश्विसूर्यभम्।

स्थिरश्रवणचित्रासु [१०९]विधिभूताष्टमीषु च।

स्थानप्रवेशगमनं [११०]पशूनां न कदाचन।।३८।।

---

(१०१)पु.,क.-त्वष्ट्र। (१०२)पु.-दशा, व.२-दस्त्री, क.-दस्त्र।

(१०३)व.२-विष्णा। (१०४)व.२-भमूलेषु।

(१०५)पु.,व.३-(इतः पर्यन्तं श्लोकः संख्या ३६०। (१०६)व.२-वा।

(१०७)व.१-पि च। (१०८)व.१-सूर्यस्य। (१०९)व.१-दर्श।

(११०)पु.-पश्वनां।

इन्द्राग्निपितृमूलाज[१११]चरस्थिरमृदुडुषु।

क्षिप्रेषु सीरगमनं विदध्यात्प्रथ[११२]मे नृपैः।।३९।।

[११३]त्रिषष्टसु नवर्क्षेषु सप्तस्वर्क[११४]विभुक्रमात्।

हानिवृद्धिः कर्तृमृत्युर्लक्ष्मीप्राप्तिर्यथाक्र[११५]मम्।।४०।।

[११६]वसुवायुभनैर्ऋत्य[११७]क्षिप्रेन्देषु मृदुडुषु।

[११८]सीतां [११९]स्मृत्वा[१२०]थ बीजोप्तिरित्युक्[१२१]ष्टफलप्रदा।।४१।।

राहुधिष्ण्यात्समारभ्य [१२२]धिष्ण्ये[१२३]ष्वष्टसु निष्फ[१२४]लम्।

[१२५]ततः पञ्च नवर्क्षेषु धा[१२६]न्यं वृद्धिस्तदन्तरे।।४२।।[१२७]

---

(१११)क.–चरणा। (११२)व.३.१.२.,क.–मं वृषैः।

(११३)व.२–स्त्रिषुध्य, व.१,क.–त्रिषुष्टा। (११४)पु.–विमुक्तभात्।

(११५)पु.–भात्। (११६)क.–प्रसवायुज। (११७)पु.–क्षिप्र, व.२.३,क.–ध्रुव।

(११८)पु.–सीता। (११९)व.२–स्मृतां। (१२०)पु.–स्मृत्वाद्य।

(१२१)व.२–ष्ण। (१२२)व.२–धिष्णोस्कासुनिः। (१२३)व.१–ष्ठष्ट।

(१२४)व.१–लाः,व.३–ला। (१२५)व.२,पु.–तमः।

(१२६)व.१.३,क.–न्य। (१२७)व.२–(समाक्षरलोपः)श्लोकः क्र–४२क तः श्लोकः क्र.–४३ड पर्यन्तम्।

चतु[१२८]र्थाष्टद्वादशर्क्षेषु [१२९]इति [१३०]पञ्चचतुष्टयम्।

निष्फलं चिन्तयेत्स[१३१]र्वबीजोप्तिसमये क्रमात्।।४३।।

पितृमारुतसर्पा[१३२]न्त्यस्थिरर्क्षे[१३३]ऽश्विन्दुशुक्रयोः।

न कुर्याद् वार[१३४]णे रोगमु[१३५]क्तस्नानं कदाचन।।४४।।

उत्तरात्रयपुष्यार्कपौष्णमैत्रवसुडुषु।

[१३६]सेन्द्रवारुणधिष्ण्येषु नृत्यारम्भः प्रशस्यते।।४५।।

वस्वग्नीन्द्वीज्यनैर्ऋत्य[१३७]भाग्यं [१३८]त्वाष्ट्रं च [१३९]त्र्युत्तराः।

पितृद्विदैव[१४०]हस्ताख्यातारा: स्युः कुलसंज्ञकाः।।४६।।

---

(१२८)पु.–र्भा, व.३–र्थ। (१२९)व.१–तिथि।

(१३०)व.१.३,क.–पञ्चचतुषटयेम्।

(१३१)व.१.३, क.–र्वं। (१३२)पु.–न्त्या। (१३३)पु.–श्विदु।

(१३४)व.२.३,क.–यो। (१३५)व.२–क्तं। (१३६)व.१–इन्द्र।

(१३७)क.–स्वष्ट्र। (१३८)क.–वत्युत्तरा, व.२–ष्ट्रयवयुत्र्युत्तराः।

(१३९)व.१–क्षेत्ररात्रयम्। (१४०)व.१–वखाद्या, पु.–मध्या।

[१४१]धातृज्येष्ठादितिस्वाती[१४२]पौष्णाम्बुहरि[१४३]देवताः।
अजपान्तक[१४४]भौजङ्गताराः [१४५]स्वोपकुला[१४६]ह्व[१४७]याः।।४७।।
शेषाः [१४८]कुला[१४९]कुलास्तारास्तासां [१५०]मध्ये कुलोडुषु।
[१५१]गम्यते यदि भूनाथः पराजयमवा[१५२]प्यते।।४८।।
धिष्ण्येषु यत्कुलाख्येषु [१५३]गन्ता जयम[१५४]वाप्यते।
सन्धिर्भवेत्त[१५५]तः सम्यक् [१५६]तथाकुलकुलोडुषु।।४९।।
भद्रा[१५७]तिथिः [१५८]शनेर्वारे [१५९]वारे [१६०]चेद्विषमाङ्घ्रिभे।
त्रिपुष्करस्त्रिगुण[१६१]दो द्विगु[१६२]णं [१६३]द्व्यङ्[१६४]घ्रिभे मृतौ।।५०।।

---

(१४१)व.२–धात। (१४२)व.२–पौष्णा नु, पु.–पौष्णार्क।(१४३)पु.–दैवतम्। (१४४)व.२–भौजैगे। (१४५)व.३,क.–श्वो, व.२–श्वोप। (१४६)पु.–द्वया। (१४७)व.२,क.–याः। (१४८)व.१–कुलास्। (१४९)व.२–(लोपः)कुला। (१५०)व.२–ह्यादुर्यु। (१५१)व.२–गम्यादि। (१५२)व.१–प्स्यति।

(१५३)व.३–पतन्, क.–परा। (१५४)व.१–प्नुयात्। (१५५)व.१–योः। (१५६)व.१–तदा। (१५७)पु.–तिथि। (१५८)व.१–शनिवार, पु.–यमार्कार। (१५९)व.१–श्चेद्। (१६०)व.१–चेद्विषामांध्रिभम्। (१६१)व.३,क.–दं। (१६२)व.१–णं। (१६३)व.२–ध्यं। (१६४)पु.–धिभे।

दद्यात्तद्दोषनाशाय [१६५]गोत्रयं द्वित[१६६]यक्रमात्।

विषवृक्षोऽश्विभाद्याम्यधिष्ण्यादामलक[१६७]स्तरुः ।।५१ ।।

[१६८]उदुम्बरश्चाग्निधिष्ण्या[१६९]ज्जम्बुवृक्ष [१७०]श्च धातृभात्।

इन्दुभा[१७१]त्खदिरो जातः कृष्ण[१७२]वृक्ष[१७३]श्च रौद्रभात्।।५२ ।।

सम्भूतोऽदितिभाद्वंशः पिप्पलः [१७४]पुष्यसम्भवः।

सर्पधिष्ण्यान्नागवृक्षो वटः पितृभसम्भवः।।५३ ।।

[१७५]पालाशो भाग्यभा[१७६]ज्जातः [१७७]प्लक्षश्चार्यमसम्भवः।

[१७८]अरिष्टवृक्षो रविभाद् [१७९]ब्रह्मवृक्षस्त्वष्ट्रसम्भवः।।५४।।[१८०]

---

(१६५)पु.-त्रेयं। (१६६)व.३,क.-यं। (१६७)क.-स्तदा।

(१६८)व.१-औदुम्बर।(१६९)व.१-म्बक्षाश्च, क.,व.३-जम्बुवृक्षश्च।

(१७०)व.२,क.-स्तु। (१७१)पु.-त्वा।

(१७२)पु.-प्लक्षश्च, व.२.३,क.-वृक्षस्तु।

(१७३)व.१-(लोपः)रक्त। (१७४)पु.-पुष्प। (१७५)व.१-फलांशो।

(१७६)पु.-लातः। (१७७)पु.-लक्षा। (१७८)व.१-अम्बष्ट, व.२-अवष्ट।

(१७९)व.२-श्रीवृक्ष। (१८०)व.३,क.-(लोपः)श्लोकः क्र.५४।

स्वात्यर्क्षजोऽर्जुनो वृक्षो [१८१]द्विदैवत्याद्विकङ्कतः।

मित्रभाद् बकुलो [१८२]जातो [१८३]विष्टिः पौरन्दर्क्षजः।।५५।।

[१८४]सर्जवृक्षो मूलभाच्च वञ्जुलो वारिधिष्ण्यजः।

पनसो [१८५]विश्वभाज्जातश्चार्कवृक्ष[१८६]स्तु विष्णुभात्।।५६।।

वसुधिष्ण्याच्छमीवृक्षः कदम्बो वरुणर्क्षजः।

अजैकपाच्चूतवृक्षोऽहिर्बुध्न्या[१८७]त्पिचुमन्दकः।।५७।।

[१८८]मधुवृक्षः पौ[१८९]ष्णाधिष्ण्या[१९०]त्स्वर्णवृक्षं प्रपूजयेत्।

अरिवृक्ष[१९१]मथानीय [१९२]पीडनीयं प्रयत्नतः।।५८।।

---

(१८१)व.२-द्विवककमिति, व.१-द्विदैवसाद्विकं वतवः, क.-त्यांद्धिकं पितः।

(१८२)पु.-जीतौ। (१८३)व.३-विप्तिः। (१८४)व.१-सज्जु।

(१८५)पु.-वैश्व। (१८६)व.१-श्व। (१८७)व.१-मि, व.२-त्सिचुमेदकः। (१८८)पु.-मधुकरवृक्षः। (१८९)व.३-ष्ण्य।

(१९०)पु.-तूचर्क्षवृक्षं, व.२-त्सर्वर्क्ष।

(१९१)व.१-मते, क.-मेयोति, व.३-मेयोनीयं, व.२-मतो यान्ति।

(१९२)व.२-पानीय, व.३-प्रपीडनीयं।

[१९३]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां नक्षत्राध्यायश्चतुर्दशः।। ।।१४।।

---

(१९३)पु.-इति नक्षत्राध्यायश्चतुर्द्दशः।।,

क.-इति नक्षत्राध्यायश्चतुर्द्दशः।।,

व.१-इति कश्यपसंहितायां नक्षत्राध्यायश्चतुर्दशः।।,

व.२-नक्षत्राध्यायश्चतुर्दशः।।,

व.३-इति नक्षत्राध्यायश्चतुर्द्दशः।।१४।।

## ।। पञ्चदशोऽध्यायः ।।

## ।। योगाध्यायः ।।

योगेशाः क्रमशः [१]कालविष्णु[२]श्चन्द्रः पिता[३]महाः।

जीवराक्षस[४]देवेन्द्र[५]कालाग्न्यर्कभूमयः ।।१ ।।

[६]मरुद्भगजजलाधीशगणेशेश[७]धराधिपाः।

[८]त्वष्ट्र[९]मित्रकुमारा[१०]ख्यसामित्रकमला[११]द्विजाः ।।२ ।।

देव[१२]दैत्यौ [१३]च पितरौ विधि[१४]स्तल्लक्षण[१५]प्रदा।

परिघस्य तु [१६]पूर्वार्धं व्यतीपातः सवैधृतिः ।।३ ।।

---

(१)व.३–कालो। (२)व.३–श्चन्द्र। (३)पु.–महम्, क.–मह, व.३–महः।

(४)व.३–वेन्द्र। (५)पु.–कंकालाग्न्य, व.१–जलचन्द्रार्क, व.२–कालास्यर्कज्य। (६)पु.–मरुद्गजाधीश, व.१–मरुदखगजलाधीश, व.२–मनुद्भगजत्र्यवीश,

क.–मरुदभगजश्चादीश। (७)व.१,पु.–धनाधिपाः। (८)क.–त्वाष्ट्र।

(९)व.१–विमित्रकुमारा, पु.–मित्रकुम्भः।

(१०)व.२–ख्यसावित्री, पु.–ख्यासामित्र, व.१–स्फुःसावित्री।

(११)पु.–द्विजा। (१२)क.–दैत्येन्य, व.१–वैद्यौ। (१३)व.२–स्व।

(१४)व.१–तत्र। (१५)व.१.३–प्रदाः। (१६)पु.–पूर्वार्ध।

महा[१७]पाता[१८]ष्टमश्चन्द्रः सर्वकर्मसु गर्हितः।

विष्कुम्भ[१९]वज्रयोस्तिस्रः षड्वा [२०]गण्डातिगण्डयोः।।४।।

व्याघाते [२१]नवमाने तु पञ्च नाड्यास्तु गर्हिताः।

व्याघातशूल[२२]परिघपातपूर्वेषु सत्स्वपि।।५।।

गण्डातिगण्डकुलिशवैधृतेषु [२३]नवस्वपि।

अदितीन्दुमघा ह्यश्विमूलमैत्रेज्यभानि च।।६।।

ज्ञेयानि सह[२४]चित्राणि मूर्ध्नि [२५]भानि यथाक्रमात्।

लिखेदूर्ध्वगतामेकां तिर्य[२६]ग्रेखास्त्रयोदश।।७।।

तत्र खार्जूरिके चक्रे कथितं मूर्ध्निभं न्यसेत्।

[२७]भान्येकरेखा[२८]गतयोः सूर्याचन्द्रमसोर्मिथः।।८।।

---

(१७)क.,व.१.२.३-पातो। (१८)व.१-ष्टमं (१९)व.१,क.-गण्डयो।

(२०)पु.-गण्डेतिगण्डयोः। (२१)व.१.३-नवशूलेतु, क.-नवमूलेतु, पु.-नवभातेतु। (२२)क.-परिघा। (२३)व.३-च सत्स्वपि। (२४)व.१-चैत्राणि। (२५)पु.-तानि। (२६)व.१-रेखा। (२७)व.१-तत्रैक। (२८)पु.-गतयो।

## ।। योगाध्यायः ।।                (अध्यायः१५)

एकार्गलो दृष्टि[२९]पातः [३०]साभिजिद्गर्हितानि वै।

[३१]क्षणयोग[३२]प्रमाणं स्याद् [३३]भागो यः सप्तविंशतेः।।९।।

योगस्य योगेऽप्येकस्मिन्योगाः स्युः सप्तविंशतिः।।१०।।

[३४]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

योगध्यायः पञ्चदशः।। ।।१५।।

---

(२९)व.१–पातः, व.३–पाते।

(३०)व.३, क.–श्चाभिजित्सहितानि वै, व.१–श्चाभिजिद्वर्जितानि वै।

(३१)व.१–क्षणं। (३२)व.३,क.–प्रमाणाः। (३३)पु.–भागो।

(३४)व.१–इति कश्यपसंहितायां योगध्यायः पञ्चदशः।।,

व.३,क.–इति योगाध्यायः पञ्चदशः।।,

पु.,व.२–योगाध्यायः पञ्चदशः।।

## ।। षोडशोऽध्यायः ।।

## ।। करणाध्यायः ।।

क्रमशः करणाधीशाः सहस्राक्षः प्रजापतिः।

मित्राख्यस्त्वर्यमा भूमिः श्रीः कीनाशः कलिस्ततः।।१।।

[१]रक्षःसंज्ञो [२]दन्दशूको वायोरेकादशामराः।

करणानि बवादीनि शुभसंज्ञानि तानि षट्।।२।।

[३]क्रमायाता [४]क्रमायाता [५]भद्रा [६]नेष्टैव मङ्गले।

अनेककिङ्किणी[७]जाल[८]शोभितं क्रकचं यथा।।३।।

मुखे पञ्च गले त्वेका [९]वक्षस्येकादशस्तथा।

नाभौ चतस्रः [१०]कटिषट् तिस्रः [११]पुच्छे तु नाडिकाः।।४।।

---

(१)व.१-अजः। (२)व.१-दुन्दु। (३)व.२-क्रमाद्याता, व.१-क्रामापाता।

(४)व.२-क्रमाज्जाता, व.१-क्रमापाता। (५)व.१-भाद्रे।

(६)व.१,क.-नेष्टेव, पु.-नैष्ठेव, व.२-नेष्टा च।

(७)व.३-जालम, व.२,क.-जाला।

(८)व.२,क.-शौतक्रकचं यथा। (९)व.१-वक्ष्ये एका।

(१०)पु.-कटिषट्तिस्रः। (११)व.१-पुच्छे तु।

## ।। करणाध्यायः।। (अध्यायः१६)

कार्यहानिर्मुखे मृत्युर्गले वक्षसि निस्वता।

कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे[१२] ध्रुवो जयः।।५।।

स्थिराणि करणान्ये[१३]षां नेष्टौ नागचतुष्प[१४]दौ।।६।।

[१५]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

करणाध्यायः षोडशः।। ।।१६।।

---

(१२)पु.-ध्रुवे। (१३)पु.-तान्यष्टौ। (१४)व.१.२-दे।

(१५) पु.,व.२-करणाध्यायः षोडशः।।,

व.१-इति कश्यपसंहितायां करणाध्यायः षोडशः।।,

क.,व.३-इति करणाध्यायः षोडशः।।

## ।। सप्तदशोऽध्यायः ।।

## ।। मुहूर्ताध्यायः ।।

अथातः सम्प्रवक्ष्यामि मुहूर्तगुणलक्षणम्।

शुभाशुभफलं सर्वं मुहूर्त[1] वशतो भवेत्।।१।।

दिवा मुहूर्तो रुद्राहिमित्रपितृवसू[2] दकम्।[3]

विश्वेविधातृवैरिञ्चिशक्रेन्द्राग्न्यसुराम्बुपाः।।२।।

अर्यमाभग[4] संज्ञश्च क्रमशो दश पञ्च [5] च।

रुद्राजपादाहिर्बुध्न्यपूषाश्वि[6] यमवह्नयः।।३।।

धातृचन्द्रादिती[7] ज्या[8] विष्णवर्क[9] त्वष्ट्रवा[10] यवः।

[11] रात्रिसंज्ञा मुहूर्तास्ते क्रमात्पञ्चदश स्मृताः।।४।।

---

(१)व.१–वशतः खलु। (२)व.२–दका, व.१–दिका।

(३)पु.–(अधिकम्) किंस्तुध्नभाविषाग्निशस्त्रसङ्ग्रामदारुणम्।

(४)व.१–संज्ञा। (५)व.३–वा। (६)व.३–राम।

(७)व.१–जीव। (८)व.३–विष्ट्य। (९)पु.–त्वष्ट्र (१०)पु.–व्यकः।

(११)पु.–(पुनरोक्तिः)रात्री।

## ।। मुहूर्ताध्यायः।।  (अध्यायः१७)

अह्नः पञ्चदशो भागो [१२]मुहूर्तो [१३]यस्तथा निशि।

एकाधिपे मुहूर्तस्य धिष्ण्यस्य च तथा भवेत्।।५।।

[१४]धिष्ण्याख्यः [१५]सुमुहूर्तस्तत्रर्क्षोक्तक्रियाः शुभाः।

[१६]अर्यमा राक्षस[१७]ब्राह्मौ [१८]पित्र्याग्नेयौ तथाभिजित्।।६।।

राक्षसा[१९]म्बू ब्राह्म[२०]पित्र्यौ [२१]भौजङ्गेशौ यथाक्रमात्।

अर्कादिषु च वारेषु [२२]मुहूर्ता [२३]गर्हिताः शुभे।।७।।

पौराणिका रौद्रसिता मैत्राः [२४]सारभटाः [२५]क्षणाः।

सावित्रवैरा[२६]जकाख्यौ गान्धर्वश्चाष्टमोऽभिजित्।।८।।

---

(१२)पु.–मुहूर्तौ। (१३)व.२.३,क.–यः तथा।

(१४)पु.–तद्धिष्ण्याख्यः, व.२–स्वधिष्ण्याख्यः।

(१५)व.३–समुहूर्त्तस्यात्, क.–सुमुहूतस्यस्तत्र। (१६)पु.–अर्यमो।

(१७)व.१–ब्राह्म। (१८)पु.–पित्र्यग्नीशौ,व.३–पित्राज्ञेयो।

(१९)क.,व.३–ख्यौब्राह्म, व.२–प्यौब्राह्म। (२०)व.३–पित्रौ।

(२१)व.१–भोजङ्गे, व.२–भोजङ्गा। (२२)व.१–मुहूर्तो। (२३)व.१–गर्हितः।

(२४)व.१–वारभयः। (२५)व.१–क्षणा। (२६)व.१–जिता।

## ।। मुहूर्ताध्यायः ।।                (अध्यायः१७)

[२७]रोहिणो बलसंज्ञश्च विजयो [२८]नैर्ऋतः सितः।

इन्द्रो जलेश्वरः पञ्चदशमो [२९]भागसंज्ञकः।।९।।

अष्टमो[३०] योऽभिजित्संज्ञः [३१]स एव कुतपः स्मृतः।

रौद्रो गन्धर्वयक्षे[३२]शा भूषणो वायुरग्नयः।।१०।।

रक्षो धाता [३३]तथा [३४]सौम्यः [३५]पद्मजो वाक्पति[३६] स्ततः।

पूषा हरिर्वायुनिर्ऋतिर्मुहूर्ता रात्रि[३७]संज्ञकाः।।११।।

[३८]सितवैराजविजयमैत्रसावित्रसंज्ञिताः।

अभिजिद्बलयुक्तास्ते [३९]सर्वकार्येषु सिद्धिदाः।।१२।।

---

(२७)व.१.२–रोहिण्ये।

(२८)व.३–नैर्ऋतस्ततः, क.–नैर्ऋतो मतः, व.२–नैर्ऋत नतः।
(२९)व.१–भग।

(३०)पु.–द्यो, व.३–(लोपः)यो। (३१)व.२–सर्वत्र।

(३२)व.१–शः श्चारणो, क.–सा वारुणो, व.३–शास्तुरगा। (३३)पु.–त्वथा।

(३४)व.२–सौम्य। (३५)पु.–पित्र्यजो, व.१–पद्मजीवा। (३६)पु.–स्तथा।

(३७)व.३, क.–संज्ञिताः। (३८)व.१–(लोपः)श्लोकः क्र.१२अ–ब।

(३९)व.३–सर्वे।

[४०]आत्ययिकेषु च कार्येषु [४१]क्षणं पञ्चाङ्गमीरि[४२]तम्।

[४३]यदुक्तं तत्र तत्कर्म सर्वमत्रापि सिद्ध्यति।।१३।।

[४४]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

मुहूर्ताध्यायः सप्तदशः।। ।। १७।।

---

(४०)व.१-अत्यै, व.३-आय, क.-आत्मै।

(४१)व.१-क्षणाः, व.३, क.-क्षण। (४२)व.१-ताः।

(४३)व.१-यदृक्षं यत्र यत्।

(४४)पु.,व.२-मुहूर्ताध्याय सप्तदशः।।

व.१-इति कश्यपसंहितायां मुहूर्ताध्यायः सप्तदशः।।

व.३, क.-इति मुहूर्ताध्याय सप्तदशः।।

## ।।अष्टादशोऽध्यायः।।

## ।। उपग्रहाध्यायः।।

अथातः सम्प्रवक्ष्यामि [१]चोपग्रहनिवारणम्।

भूकम्पश्चार्कभा[२]त्सप्त धिष्ण्ये विद्युच्च पञ्च[३]मम्।।१।।

[४]शूलाष्टमे [५]तु नवमो शनिरष्टादशाह्वये।

केतुः पञ्च[६]दशो [७]दण्ड[८]श्चोल्का एकोनविंशतिः।।२।।

निर्घातपातसंज्ञश्च ज्ञेयः स नवपञ्च[९]मे।

मेघनिर्घात[१०]कम्पाश्च कुलि[११]शः परिवेष[१२]कः।।३।।

विज्ञेयाश्चैकविंशर्क्षादारभ्य च यथा[१३]क्रमम्।

चन्द्रयुक्तेषु [१४]भेष्वेषु शुभकर्म न कारयेत्।।४।।

---

(१)व.१, क.–उपग्रह। (२)व.३–ससधिष्ण्यं, पु.–विदधं। (३)व.२–मे।

(४)व.२–शूलोष्टमो। (५)व.१–थ। (६)व.२–दशे। (७)पु.–गण्ड।

(८)व.१–उल्का। (९)पु.–मः। (१०)व.१.२–कम्पश्च।

(११)व.१.३–शं, व.२–शे। (१२)व.१–कम्, व.२–के।

(१३)व.२–क्रमात्। (१४)पु.–भेद्येषु।

।। उपग्रहाध्यायः ।।                    (अध्यायः १८)

सूर्यभात्सार्पपित्र्यर्क्षत्वष्ट्रमित्रात्यभेषु    च।

सविष्णुभेषु   क्रमशो   दस्रभाच्चन्द्रसंयुते।।५।।

धिष्ण्ये [१५]चरति [१६]सन्त्यत्र   दुष्टयोगः पतत्यसौ।

चण्डीशचण्डायुधा[१७]ख्यास्तस्मिन्नैवाचरेच्छु[१८]भम्।।६।।

त्रयोदशम   स्युर्मिलने [१९]सङ्ख्यया  तिथिवारयोः।

क्रकचो   [२०]नाम   यो   [२१]योगो  मङ्गले[२२]ष्वतिगर्हि[२३]तः।।७।।

[२४]चेत्सूर्यवारः  सप्तम्यां   प्रतिपत्सौम्यवासरे।

सम्वर्तसंज्ञयोगोऽयं   शुभकर्मविनाशकृत्।।८।।

एकादश्यामिन्दुवारो   द्वादश्यामर्कवासरः।

षष्ट्यां   बृहस्पतेर्वारस्तृती[२५]या   बुधवासरे।।९।।

---

(१५)व.१.२-तावति। (१६)क.-सान्यत्र, व.२-खेसंप्त, पु.-सात्यत्र।

(१७)व.१-ख्य। (१८)क.-भे।(१९)व.१-संख्यापातांववारयोः।

(२०)पु.-सायतो, क.-साम्य  यो।(२१)व.१.२.३,क.-योगोऽयं।

(२२)पु.-अतिविगर्हितम्, व.१-विवर्जितः। (२३)क.-ताः।

(२४)व.१-सप्तम्यां  सूर्यवारश्चेत्। (२५)पु.-यां।

अष्टमी शुक्रवारे [२६]च [२७]नवम्यां [२८]मन्दवासरः।
दग्धयोगा[२९] स्त्विमे [३०]ज्ञेयाः पञ्चधाख्यास्तथाष्टमी।।१०।।
[३१]यमर्क्षमर्क[३२]वारेऽपि [३३]सौम्ये भौमे च विश्वभम्।
बुधे [३४]धनिष्ठार्यमर्क्षं गुरौ ज्येष्ठा भृगोर्दिने।।११।।
ग्रहाणां जन्मयोगाः स्युः पौष्णभं शनिवासरे।
विशा[३५]खादिचतुर्वर्ग[३६]भानुवारादि[३७]षु क्रमात्।।१२।।
उत्पातमृत्युकाणा[३८]ख्या अमृताख्याश्च कीर्तिताः।।१३।।

---

(२६)व.१.२.३,क.-तु। (२७)व.१-नवम्ये। (२८)व.३,क.-मर्क्रि।

(२९)व.२-श्च विज्ञेया। (३०)व.३-ज्ञेयाः। (३१)व.१.२,क.-यमोर्क।

(३२)व.१.२-वासरे। (३३)पु.-चिचेन्दौ विश्वभं कुजे, व.३-चित्रेन्दावश्विभम्।

(३४)पु.-श्रवि। (३५)पु.-(लोपः) खा। (३६)व.१.२-मर्क।
(३७)क.-तः।

(३८)व.३-ख्यामृता, व.१-ख्याः सिद्धयस्तत्र कीर्तिताः,
क.-ख्याः अमृताख्या कीर्तिताः।

## ।। उपग्रहाध्यायः ।। (अध्यायः १८)

आनन्दकालदण्डा[३९]ख्य[४०]धूम्रधातृशुभाह्वयाः।

ध्वाङ्क्षध्वजा[४१]ख्यश्रीवत्सवज्रमुद्गरछत्रकाः।।१४।।

[४२]मित्रं मानसपद्माख्य[४३]लुम्बकोत्पातमृत्य[४४]वः।

काणः सिद्धिः शुभा मृत्युमुसलान्तककुञ्जराः।।१५।।

राक्षसाख्यश्चरस्थैर्यवर्धमानाः क्रमादमी।

योगाः [४५]स्वसंज्ञाः फलदा [४६]स्त्वष्टाविंशति[४७]संज्ञकाः।।१६।।

[४८]रविवारक्रमादेते दस्रभादिन्दुभाद्विधौ।

सार्पाद् भौमे बुधे हस्तान् मित्रभाद्देवपूजिते।।१७।।

[४९]वैश्वदेवाद् भृगुसुते [५०]वारुणाद् भास्करात्मजे।

विरुद्धसंज्ञा ये योगास्तिथिवासरर्क्षसम्भवाः।।१८।।

---

(३९)पु.–ख्य। (४०)व.३–शूम्राद्याष्टशुभावहाः। (४१)पु.–ख्यः।

(४२)व.१–मित्र। (४३)क.–लम्बको, व.१–लम्भको। (४४)पु.–याः।

(४५)व.१–स्युः सङ्गफलदा। (४६)पु.–त्वष्टा। (४७)व.३–संख्यकाः।

(४८)पु.,व.२–रविवारे। (४९)पु.–वैदेवाद्। (५०)पु.–वारुणे, व.१.२–वरुणा।

[५१]हूणे वङ्गे खरो दोषो [५२]देशेष्वन्यत्र शोभनाः।
हस्तर्क्षं सूर्यवारे तु [५३]चन्द्रर्क्षं चन्द्रवासरे।।१९।।
कुजेऽश्वि[५४]भं बुधे मैत्रं गुरौ [५५]पुष्योत्तरं भृगौ।
रोहिणे [५६]शनिवारे तु [५७]सिद्धियोगाह्वया अमी।।२०।।
आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः।
जया [५८]सौम्ये गुरौ [५९]रिक्ता [६०]पूर्णार्काश्चामृताः शुभाः।।२१।।

---

(५१)पु.-ह्णवंऽगे खरो दोषा, व.१-हूणाबङ्गखखे देशे।

(५२)व.१-सदोषास्त्वन्यत्र शोभनाः। (५३)व.३-श्रवणं। (५४)व.१-भे।

(५५)व.३-पुष्योशतं भृगुगौ, क.-पुष्योत्तभं भृगौ,

व.२-पुष्योत्तराभृगोः, व.१-पुष्यात्पभं भृगो।

(५६)व.१-शशि। (५७)पु.-सिद्ध। (५८)पु.-सौम्य। (५९)व.१,क.-रिक्त।

(६०)व.१,क.-पूर्णार्को चामृताः शुभाः, व.२-पूर्णाकिन्यः शुभाः स्मृताः।

## ।। उपग्रहाध्यायः ।।                    (अध्यायः१८)

नन्दा तिथिः शुक्रवारे सौम्ये भद्रा [६१]जया कुजे।

रिक्ता मन्दे गुरोर्वारे पूर्णा सिद्धाह्वया तिथिः।।२२।।

[६२]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां

महासंहितायामुपग्रहाध्यायोऽष्टादशः।। ।।१८।।

---

(६१)व.१-कुजे जया।

(६२)पु.,क.,व.३-इति उपग्रहाध्यायोष्टादशः।।,

व.२-उपग्रहाध्यायोष्टादशः।।,

व.१-इति कश्यपसंहितायामुपग्रह प्रकारणमष्टदशः।।,

## ।। एकोनविंशतिमोऽध्यायः ।।

## ।। सङ्क्रान्ति-अध्यायः ।।

घोरा ध्वाङ्क्षी महोदर्यो [1]भूमन्दा मन्दाकिनी [2]तथा।

मिश्रा राक्षसिका [3]सूर्यसङ्क्रान्तिष्वर्कवासरात्।।१।।

नामानि क्रमशो ज्ञेया[4]श्चोग्राद्यैरपि धिष्ण्यकैः।

शूद्रतस्करवैश्या[5]द्यैर्देवभूपगवां क्रमात्।।२।।

अनुक्तानां च सर्वेषां घोरा[6]द्यास्तु सुखप्रदाः।

पूर्वाह्णे नृपतिं हन्ति विप्रान्मध्यन्दिने [7]विशः।।३।।

[8]अपराह्णेऽस्तमे शूद्रान्प्रदोषे च पिशाचकान्।

निशि रात्रिञ्चरा[9]न्नाट्यकारा[10]नपररात्रके।।४।।

---

(१)व.३-(लोपः) भूमन्दा, व.१-मया मन्दा। (२)व.१-मता। (३)क.-दैव।

(४)व.३-त्युग्राद्यै। (५)व.१-द्या। (६)पु.-द्यस्तु।

(७)व.१-वशः, व.२-विज्ञाः।

(८)व.१-अपराह्नसमय, व.२-अपराह्नऽस्तमं। (९)व.३-न्नाढ्य।

(१०)व.२-नवरात्रके, व.१-परारात्रिके।

## ।। सङ्क्रान्ति–अध्यायः ।। (अध्यायः१९)

गोपानु[११]षसि [१२]सन्ध्यायां लिङ्गिनं रविसङ्क्रमः।
यदा [१३]मेषगते सूर्ये भरण्यादिचतुष्टये।।५।।
[१४]सस्यवृद्धिर्भवेत्तत्र वृद्धिरार्द्राचतुष्टये।
मघादिदशके हानिः क्षेमं [१५]चानुक्तभेषु च।।६।।
सिंहशार्दूलवाराहखरकुञ्जरमाहिषाः।
तुरग[१६]श्वाजवृषभ[१७]कुक्कुटाश्च [१८]बवादिषु।।७।।
तिथ्यर्धजानि सङ्क्रान्तिवाहनानि यथाक्रमात्।
भयोनिवाहनं [१९]बङ्गवाह्लीके [२०]विषये [२१]खशे।।८।।
भुशुण्डीभिण्डिमालासिदण्डकोदण्डतोमरान्।
कुन्तपाशाङ्कुशास्त्रेषु बिभर्ति करणेऽश्विनः।।९।।

---

(११)व.२–प्यसि। (१२)व.१–सन्ध्यासु। (१३)पु.–मेषं।

(१४)व.१–(लोपः)श्लोकः क्र. ६अ–ब। (१५)व.२–वानुक्त, व.१–भानुक्त।

(१६)पु.,व.३–श्वाज। (१७)व.१.२–कुकुटाश्च। (१८)व.३–बकादिषु।

(१९)व.१–वङ्गे। (२०)व.१–विषमे। (२१)व.१–शशे, व.३–ज्वरे, व.२–श्वरे।

## ।। सङ्क्रान्ति-अध्यायः ।। (अध्यायः१९)

[२२]हविष्यं [२३]पायसं भक्ष्यमपूपं च पयो दधि।
चित्रान्नं गुडमध्वाज्यं [२४]शर्करां [२५]च बवादिषु।।१०।।
निविष्टो वणिजे विष्ट्यां बालवे च गरे बवे।
ऊर्ध्वस्थितस्तु किंस्तुघ्ने शकुनौ कौलवे रविः।।११।।
चतुष्पात्तैतिले [२६]नागे [२७]सुप्तः [२८]क्रान्तिं [२९]करोति नः।
[३०]अन्धं [३१]मन्दं मध्यदृष्टिं सुलोचनमतः परम्।।१२।।
पर्यायाद्गणयेद् भानि [३२]रोहिण्याद्यं [३३]चतुर्विधम्।
स्थिर[३४]भेष्वर्कसङ्क्रान्ति[३५]र्ज्ञेयं विष्णुपदाह्वयम्।।१३।।

---

(२२)पु.-हविष्य, व.२-हविषः, व.३ हविष्याः। (२३)पु.-वायसं।
(२४)व.३,पु.-शर्करा। (२५)पु.-च नोहविः, व.३-बवतो हविः।
(२६)पु.-भागे। (२७)क.-सुतः, व.१-सुप्तस्यं।
(२८)क.-क्रान्ति, व.१-सङ्क्रमो। (२९)व.१-भवेत्।
(३०)व.१-अध्यं। (३१)व.१-मध्यं। (३२)व.१-रोहिण्यादि।
(३३)व.१-चतुष्टयम्। (३४)पु.-मेषर्क। (३५)व.१-ज्ञेया।

।। सङ्क्रान्ति–अध्यायः ।।        (अध्यायः१९)

षडशीति[३६]मुखं ज्ञेयं द्विस्वभावेषु राशिषु।

सौम्ययाम्यायने नूनं [३७]भवतो मृग[३८]कर्किणौ।।१४।।

[३९]घटमेषभयोर्ज्ञेयं [४०]विषुवः सूर्यसङ्क्रमः।

अहः सङ्क्र[४१]मणे पुण्यमहः कृत्स्नं [४२]प्रकीर्तितम्।।१५।।

[४३]रात्रौ सङ्क्र[४४]मणे [४५]भानोर्व्यवस्था [४६]सङ्क्रमे सदा।[४७]

[४८]आक्रान्त्यां गतयो [४९]राश्योरन्तरालमहर्पतेः।।१६।।

[५०]विज्ञेयं बिम्बमध्यं तद्यदहः सन्महत्फलम्।

स्नानं दानं ग्रहणवत्सौम्ययाम्यायने द्वये।।१७।।

---

(३६)व.१–मुखात् ज्ञेया। (३७)व.३–भवतौ। (३८)व.१–कर्किणो।

(३९)व.१–तुलाधराज्ञेयो, व.२–घटमेषतयोज्ञेयं, व.३–घटमेषतयोज्ञेयो।

(४०)व.२–विष्णुवत्, व.१–विषुवं, क.–विषुवः। (४१)क.–मते।

(४२)व.२–प्रकीर्तिता। (४३)व.१–रात्रि। (४४)पु.–मते। (४५)क.–भानौ।

(४६)व.३–सर्वसङ्क्रमे, व.१–सूर्यसङ्क्रमः।

(४७)व.१–(अधिकम्)सस्यद्धिर्भवेत्तत्र मृगार्द्रादितुष्टये।

(४८)पु.–आक्रान्त, व.१–आक्रान्तां। (४९)व.१–राश्यां।

(५०)व.१–(लोपः)श्लोकः क्र.१७–अ.।

## ।। सङ्क्रान्ति–अध्यायः ।। (अध्यायः१९)

अतीत्य प्राप्य तत्कालं [५१]तथा कुर्याद् [५२]द्युसङ्क्रमः।

सङ्क्रान्तिष्वखिले[५३]ष्वेवं तत्कालः [५४]पुण्यकः स्मृतः।।१८।।

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः [५५]कलाः।

यावद्भिरंशैः पुरतः सङ्क्रान्तेर्भानुभुक्तितः।।१९।।

भानो[५६]रयनसङ्क्रान्ति[५७]स्तथा तद्राशिसङ्क्रमः।

[५८]सङ्क्रान्तिग्रहणर्क्षं वा जन्मन्युभयपार्श्वयोः।।२०।।

[५९]नेष्टं त्रिषट् शुभदं [६०]पर्यायाश्च पुनः पुनः।

[६१]हानिवृद्धि[६२]स्थानहानिस्त[६३]त्प्राप्ति[६४]र्भानुतः क्रमात्।।२१।।

---

(५१)व.१–तदा। (५२)व.१–दुपक्रमः। (५३)पु.–ष्वयं।

(५४)व.१–पुण्यदः, व.३–पुण्यकालः।

(५५)व.२–फलः, व.१–स्मृतः, क.–वरश्च। (५६)पु.–रयनं।

(५७)व.१–स्तदा। (५८)व.१–सङ्क्रान्तिर्ग्रहणार्क्षे वा।

(५९)पु.–नोष्लं, व.१–निष्ठं। (६०)व.१–पर्यायोऽत्र, व.३–पर्यायाच्च।

(६१)व.१–हानिर्वृद्धिः, ३–हानिवृद्धिः। (६२)व.३–स्थानं।

(६३)क.–प्रतिनददतिः।

(६४)व.३–भीरतिः, व.२–मीरभिः, व.१–(रिक्तस्थानम्)।

## ।। सङ्क्रान्ति-अध्यायः ।।          (अध्यायः१९)

तिलोपरिलिखेच्चक्रं त्रित्रिशूलं त्रिकोणकम्।

तत्र [६५]हेमादि निक्षिप्य दद्याद्दोषापनुत्तये।।२२।।

ताराबले न [६६]शीतांशुर्बलवान् तद्वशाद्रविः।

बली [६७]सङ्क्रममाणस्तु तद्बलाद्बलिनः खगाः।।२३।।

यादृशेनेन्दुना भानोः सङ्क्रान्तिस्तादृशं फलम्।

नरः प्राप्नोति तद्राशेः शीतांशोः साध्व[६८]साधुतः।।२४।।

[६९]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां सङ्क्रान्त्यध्याय एकोनविंशतितमः।। ।।१९।।

---

(६५)व.१-हेमादितः, क.-हेमक्षिप्य। (६६)पु.-सीशुर्बलवान्।

(६७)व.३,क.(पाठभेदः)-सङ्क्रमाणस्य वशाद्खेटाबलाधिकाः,

पु.-(पाठभेदः)सङ्क्रमाणास्तद्दशात्खेटबलाधिकः।

(६८)व.३,क.-साधु वा।

(६९)पु.-सङ्क्रान्तिध्यायो एकोनविंशः।।,

क.-इति सङ्क्रान्तिध्यायो एकोनविंशतिः।।

व.३-इति सङ्क्रान्तिध्यायो एकोनविंशतिमः।।,

व.१-इति कश्यपसंहितायां ब्रह्मर्षिविरचितायां सङ्क्रान्तिध्याय एकोनविंशः।।, व.२-इति सङ्क्रान्तिध्यायः एकोनविंशतिः।।

## ।। विंशतितमोऽध्यायः।।

## ।। गोचराध्याय: ।।

अथात: सम्प्रवक्ष्यामि [१]सर्वेषां गोचरं बलम्।

ज्ञातव्यं जन्मराशेस्तु निखिलं यद् बलाबलम्।।१।।

[२]हिमाद्रिविन्ध्ययोर्मध्ये वेधजं तद्ग्रहा[३]लयात्।

[४]श्रेष्ठो दिवाकर: षड्त्रिदशा येषु न विध्यते।।२।।

व्यार्किभि: खचरैरन्त्यनव[५]मित्रात्मजै: स्थितै:।

जन्मत्रिषष्ठसप्तायदशमस्थ: शशी शुभ:।।३।।

विबुधै[६]र्द्वि [७]नवान्त्येषु मृत्य्वम्बु[८]स्थैर्न [९]विध्यते।

[१०]त्रिषष्ठ[११]लाभगो भूमिसुतो यदि शुभप्रद:।।४।।

---

(१)व.१-वेधगोचरजं फलम्। (२)व.२-(लोप:)श्लोक: क्र.२-अ-ब।

(३)व.१-जया। (४)पु.-श्रेष्ठं। (५)व.१-बन्धुसुत। (६)पु.-र्हि।

(७)पु.-नवान्त्यस्तु, व.१-निवात्पस्व। (८)व.२-स्थो।

(९)व.१-विद्यते। (१०)व.१-त्रिषष्टा। (११)पु.-लाभगौ।

[१२]रिष्ट[१३]धर्मात्मजस्थानस्थितैः खेटैर्न विध्यते।

शुभो [१४]ज्ञः [१५]स्वाम्बु[१६]षण्मृत्यु[१७]र्दिगायस्थो न [१८]विध्यते।।५।।

[१९]द्वित्र्यङ्कायाष्टरिःफस्थैः खेचरै[२०]र्यदि वेन्दुभिः।

द्विपञ्चसप्तनवमलाभस्थः शुभदो गुरुः।।६।।

रिःफाम्बुत्रिदशाष्टस्थैर्ग्रहैर्यदि न विध्यते।

आसु[२१]ताष्टाङ्कला[२२]भान्त्यस्थितः [२३]श्रेष्ठो न विध्यते।।७।।

मृत्युः [२४]सप्ताद्यान्त्येषु लाभस्त्रिरिपु[२५]संस्थितैः।

त्रिषष्ठलाभगः सौरिः [२६]शुभो यदि न विध्यते।।८।।

---

(१२)व.१–अंश।(१३)व.१–धर्माधर्मसुखस्व। (१४)व.१–ग्य।

(१५)पु.–साम्बु। (१६)व.२–(लोपः)स्वाम्बु, पु.–षड्।

(१७)व.१–दशायस्थो। (१८)व.१–विद्यते।

(१९)पु.–धीत्र्य, व.१–धात्र्य। (२०)व.१–र्वादुभिस्तदा, व.२–वान्दुभिः।

(२१)व.१–तिष्ठाकला। (२२)व.१–भान्त्ये(२३)व.३–शुक्लो।

(२४)व.१–सदाद्यष्वाङ्केषु, पु.–सप्ताद्यरंषाकेषु। (२५)व.१–षुस्थितैः।

(२६)व.१–शुभे।

[२७]द्यूनधर्मात्मजस्थेन त्वेकेनैवोष्णरश्मिना।

अपि [२८]विद्धो ग्रहः किञ्चिन्न ददाति शुभं फलम्।।९।।

वामवेधविधानेन त्वशुभोऽपि शुभ[२९]प्रदः।

[३०]अतस्तं द्विविधं वेधं विचार्याथ बलं वदेत्।।१०।।[३१]

[३२]अज्ञात्वा [३३]विविधान्वेधान् यो ग्रहज्ञो बलं वदेत्।

स मृषा[३४]वचनाभाषी [३५]हास्यं याति जनैः सदा।।११।।

शुभे[३६]क्षितो [३७]नेष्ट[३८]फलः शुभदः पापवीक्षितः।

ग्रहौ तौ निष्फलौ ज्ञेयौ शत्रुणा च विलोकि[३९]तौ।।१२।।

---

(२७)व.१–रिफःधर्मतनूजस्थैस्त्वेकै। (२८)व.१–वृद्धो।

(२९)व.१–फलम्। (३०) क.–अतस्तं हि,

व.१–(अधिकम्) तस्माद् वेध विचिन्त्याथ कथ्यते गोचरं फलम्।

(३१)व.१–(पश्चात् पाठभेदः) अतस्तान्विविधान्वेधान्विचार्याथ फलं वदेत्।

(३२)व.१–प्रज्ञात्वा। (३३)व.१–विविधात्वेधात्।

(३४)पु.–वचन, व.२–वचनम्।

(३५)व.१–ह्रासं। (३६)व.२–क्षिते। (३७)व.१–नष्ट, व.२–तिष्य।

(३८)व.१–फलदः, क.–फल, पु.–फला। (३९)व.१–तः।

## ।। गोचराध्यायः ।। (अध्यायः२०)

[४०]नीचगो रिपुराशिस्थश्चास्तमानं गतोऽपि वा।

शुभाशुभफलं दातुमशक्तः खेचरः सदा।।१३।।

ग्रहेषु विषमस्थेषु यत्नाच्छान्तिं [४१]समाचरेत्।

हानिवृद्धि[४२]ग्रहा[४३]धीना तस्मा[४४]च्छ्रेष्ठतमा ग्रहाः।।१४।।

सूर्यादीनां च सन्तुष्ट्यै माणिक्यं मौक्तिकं ततः।

सुविद्रुमं मरकतं [४५]पुष्पराग च वज्रकम्।।१५।।

[४६]नीलं गोमेदवैदूर्यं धार्यं [४७]शश्व[४८]द्दृढं क्रमात्।।१६।।

[४९]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

गोचराध्यायो विंशतितमः।। ।।२०।।

---

(४०)क.-रिपुगो, पु.-नीचगौ। (४१)व.१-समारभेत्। (४२)व.१-ग्र्हा।
(४३)पु.,व.२-धीनं। (४४)पु.-च्छ्रेय, व.१-सुपूज्यतमा।
(४५)व.१.२,क.-पुष्य। (४६)व.३-नील। (४७)क.-शङ्ख।
(४८)व.१-यथा।
(४९)पु-गोचराध्यायो विंशतिः।।, व.३.-इति गोचराध्यायो विंशतिमः।।,
क.-इति गोचराध्यायो विंशतिः।।, व.१-इति कश्यप संहितायां।।,
व.२-गोचराध्यायो विंशतिमः।।

## ।। एकविंशतितमोऽध्यायः ।।

## ।। चन्द्राताराबलाध्यायः ।।

अथातः सम्प्रवक्ष्यामि चन्द्रताराबलं शुभम्।

चन्द्रताराबलं हेतुः कार्यसिद्ध्यै[१] यथा नृणाम्।।१।।

मासा[२]दीन्दुः [३]शुभो यस्य तत्प[४]क्षं तस्य शोभ[५]नम्।

कृष्णादीन्दाव[६]शुभे तु शुभं [७]तद्व्यत्ययेऽन्यथा।।२।।

[८]शुभः शशी शुक्लपक्षे द्वितीयनवपञ्चमे।

रिःफकर्माम्बुसंस्थश्च न विद्धो गगनेचरैः।।३।।[९]

---

(१)व.१-सदा। (२)व.१-दिगौ। (३)व.१-शुभे। (४)व.१.३-क्षस्तस्य।

(५)व.१-नः। (६)व.३-शुभं तद्।

(७)पु.-तद्वृद्धयत्ययेऽन्यथा, व.३-तद्दृद्धयत्येऽन्यथा, व.२-तेष्वयेऽन्यथा।

(८)व.२-शुभदः।

(९)व.१-(श्लोकः क्र.३-पाठान्तरम्)

जन्मत्रिषष्ठदशमप्तमैकादशाः सदा।

शुभकृच्छशिशुवित्त तु द्वितीयनवपञ्चमः।।

जन्मसम्पद्विप[१०]त्क्षेमप्रत्यक्साधननैधनाः।
मित्रं [११]परममित्रं च जन्मभात्स्युः पुनः पुनः।।४।।
जन्मत्रिपञ्च[१२]सप्ताख्यास्तारा नेष्टफलप्रदाः।
अरिष्टपरिहाराय दद्यादेतद् द्विजातये।।५।।
छागं गुडं च लवणं सतिलं काञ्चनं क्रमात्।
शुक्लपक्षे बली चन्द्रस्तारा बलवतीतरे।।६।।
चन्द्रस्य द्वादशावस्था [१३]राशौ राशौ यथाक्रमात्।
[१४]यात्रायां प्रश्नसमये संज्ञा तुल्यफल[१५]प्रदा।।७।।
[१६]षष्ठिघ्नं चन्द्रनक्षत्रं तत्कालघटिकान्वितम्।
वेदघ्नमिषुवेदाप्त[१७]मवस्थाभानु[१८]भाजिता।।८।।

---

(१०)व.१–त्क्षेमा। (११)पु.,क.–परमं। (१२)व.१–सप्ताष्टास्तारा।

(१३)क.–जन्म राशौ। (१४)व.३–यात्रार्थ। (१५)व.१–प्रदाः।

(१६)क.–षष्टिभे।

(१७)व.१–ममस्था। (१८)व.१–भाजिताः।

## ।। चन्द्रातारावलाध्यायः।।　　　(अध्यायः२१)

प्रवासनष्टाख्यमृता जया हास्या रतिर्मुदा।

[१९]सुप्तिर्भुक्तिर्जरा कम्पा सुस्थितिर्नाम [२०]सन्निभाः।।९।।

[२१]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

चन्द्रताराबलाध्याय एकविंशतितमः।। ।।२१।।

---

(१९)क.–सुप्तं। (२०)व.२–सन्निभाः।

(२१)पु.,व.२–चन्द्रताराबलाध्याय एकविंशतिः।।,

व.१–इति कश्यपसंहितायां चन्द्रताराबलाध्यायः एकविंशतिमः।।,

व.३–इति चन्द्रताराबलाध्याय एकविंशतिमः।।,

क.–इति चन्द्रताराबलाध्याय एकविंशतिः।।

## ।। द्वाविंशतितमोऽध्यायः ।।

## ।। सर्वलग्नाध्यायः ।।

अथातः सम्प्रवक्ष्यामि सर्वलग्नगुणं शुभम्।

प्रत्येकं सर्वकार्या[1]णां तत्तत्कार्यप्र[2]सिद्धये।।१ ।।

पट्टबन्धनयानोग्रभूषणं सन्धिविग्रहम्।

आहवाकरधात्वादिमेषलग्ने प्रसिद्ध्यति।।२ ।।

[३-४]मङ्गलस्थिरवेश्याम्बुवाणिज्यं पशुकर्म यत्।

कृषिसङ्ग्रहधान्याद्यं वृषलग्ने प्रसिद्ध्यति।।३ ।।

[५]कलाविज्ञानशिल्पाश्च भूषणाहवसंश्रयम्।

मङ्गलं त्वभिषेकाद्यं कर्तव्यं मिथुनोदये।।४ ।।

---

(१)व.१-(लोपः)-णां तत्तत्कार्यप्र (२)क.-सिद्ध्यते।

(३)पु.-(पाठभेदः) मङ्गलं स्थिरतोयं च वेश्मकर्म विभूषणम्।

कृषिवाणिज्यपश्वादि वृषलग्ने प्रसिद्ध्यति।।

(४)व.३-मङ्गला।

(५)व.१.२.३-(पाठान्तरम्) संश्रयाहवशिल्पाश्च कलाविज्ञानभूषणम्।,

क.-संश्रयाहवोशिल्पाश्च कलाविज्ञानभूषणम्।

वापीकूपतडागादिवारिबन्धनमोक्षणम्।

पौष्टिकं [६]लिपिलेखाद्यं कर्तव्यं कर्कटोदये।।५।।

धान्येक्षुकृषिवाणिज्यसीरसेवाभिषेचनम्।

भूषणं [७]साहसाद्यं यत्सिंहलग्ने प्रसिद्ध्यति।।६।।

मङ्गलं शिल्पविद्याश्च चरस्थिरविभूषणम्।

कृषिपौष्टिकवाणिज्यं कन्यालग्ने प्रसिद्ध्यति।।७।।

तुलाभाण्डाश्रितं कार्यं पण्यकृष्यं[८] च भूषणम्।

निखिलं मङ्गलं यात्रा तुलालग्ने प्रसिद्ध्यति।।८।।

स्थिरकर्माखिलं सेवापण्य[९]कृष्यभिषेचनम्।

भूषणं [१०]क्रौर्यसङ्ग्रामं कर्तव्यं वृश्चिकोदये।।९।।

---

(६)व.१-कर्मयत्किञ्चित्सर्वं सिद्ध्यति कर्किणि।

(७)व.१-सङ्ग्रहाय।

(८)क.-(समाक्षर लोपः) श्च (श्लो.क्र.८) तः पण्य (श्लो.क्र.९)।

(९)व.३-कृता।

(१०)व.१-चौर्य।

## ।। सर्वलग्नाध्यायः ।।                (अध्यायः २२)

[११]मङ्गलाश्वेभसङ्ग्रामशिल्पा[१२]नि च कला[१३]खिलाः।
[१४]शस्त्रास्त्रकृषिवाणिज्यं कर्तव्यं कार्मुकोदये।।१०।।

कृषियात्राहवाश्वेभवा[१५]रिबन्धनमोचनम्।
सन्धिविग्रहभूषाद्यं कर्तव्यं मकरोदये।।११।।

वाणिज्यं कृषिशिल्पाद्यं तोयकर्माखिलं च यत्।
स्थिरभूषण[१६]वस्त्राद्यं कर्तव्यं कलशोदये।।१२।।

माङ्गल्यकृषिसेवाश्व[१७]भूषणं क्रयविक्रयम्।
[१८]जयकर्माखिलं शिल्पकार्यं मीनोदये [१९]हितम्।।१३।।

[२०]यथोदितानि [२१]कर्माणि तथा सिद्ध्यन्ति तानि वै।
पापैरयुक्तदृष्टेषु मेषादिषु च राशिषु।।१४।।

---

(११) व.३-(लोपः) श्लोकः क्र.१०। (१२)व.१-चित्र। (१३)क.-खिलम्।

(१४)व.१-वस्त्रा। (१५)पु.-वार। (१६)व.३-वास्ताद्यं। (१७)व.२-भूषणः।

(१८)व.१-जल। (१९)व.१-शुभम्। (२०)व.३-तथो।

(२१)व.१.२,क.-कार्याणि।

## ।। सर्वलग्नाध्यायः।। (अध्यायः२२)

[२२]नृयुग्मोकर्किकन्यान्त्यघटकार्मुकराशयः।

[२३]शुभाशुभत्वाच्छुभदास्त्वितराः पापराशयः।।१५।।

पापग्रहा क्षीण[२४]चन्द्रकुजा[२५]र्क्यर्काश्च तैर्युताः।

[२६]बुधोऽपि [२७]स्यात्पूर्णचन्द्रजीवशुक्राः शुभग्रहाः।।१६।।

सौम्योग्रतैषां राशीनां प्रकृत्या न भवत्यलम्।

शुभाशुभग्रहाणां च [२८]संयुक्तेन क्षितेन वा।।१७।।

अपि [२९]सौम्येक्षित[३०]युतः क्रूरराशिः शुभ[३१]प्रदः।

क्रूरेक्षितयुतः सौम्यराशिरप्यशुभप्रदाः।।१८।।

---

(२२)व.३,क.-नृयुग्म, व.१.२-नृयुगो। (२३)व.१-शुभाशुभत्वाशुभ।

(२४)व.१-चन्द्रा। (२५)व.१,क.-र्कार्काश्च। (२६)क.-बुधे।

(२७)व.१-पूर्णचन्द्रज्ञजीव, क.-स्यान्नचत्त्वाद् गुरुशुक्रा, व.३-स्यान्नचन्द्रवत्।

(२८)क.-संयुक्तोनेक्षितेन वा, व.३-संयोगेनेक्षणेन वा।

(२९)व.१.३-सौम्यो।

(३०)पु.-युत। (३१)पु.-प्रदाः।

## ।। सर्वलग्नाध्याय:।। (अध्याय:२२)

ग्रहा[३२]सनावलोकाभ्यां राशेर्भावोऽनुवर्तते।

ग्रहोऽर्थतद्विहीनोऽसौ स्वभाव[३३]मुपसर्पति।।१९।।

आदौ सम्पूर्णफलदं मध्ये मध्यफलप्रदम्।

अन्ते तुच्छफलं लग्नं सर्वस्मि[३४]न्नेवमेव हि।।२०।।

चरलग्ने चरांशे [३५]च शुद्धे धर्मात्म[३६]जेऽष्टमे।

द्रव्यनिक्षेपणं कार्यं प्रत्यागमन[३७]वाञ्छितैः।।२१।।

चरे [३८]चरांशके लग्ने बुधेनेक्षितसंयुते।

दशमस्थे भूमिपुत्रे चौर्यकालः प्रकीर्तितः।।२२।।

दशमैकादशे [३९]सूर्ये कुजे वा शुभलग्नके।

[४०]विद्यायुधाभ्यां संयुक्तं सेवाकर्मापि सिद्ध्यति।।२३।।

---

(३२)व.१-सन्ना। (३३)व.१-मनु। (३४)व.२-न्न च सदैवहि।

(३५)क.-षु। (३६)व.१-जाष्टमे।

(३७)व.१-काङ्क्षणा।

(३८)व.१-चरांशलग्ने च। (३९)क.-सूर्यो।

(४०)क.-युद्धविद्यासंयुक्तः,

व.२-खिषायुधान्यासुयुक्ता,

व.१-विद्यासुधाभ्यासरतः।

शुभग्रहांशके लग्ने नैधने शुद्धिसंयुते।

[४१]रक्षावृद्धि: [४२]क्रिया: शस्ता: पशूनां पशुराशिषु।।२४।।

[४३]गुरुलग्ने चतुर्थेऽर्के धर्मारम्भ: प्रशस्यते।

दशमेऽर्के गुरौ लग्ने त्वभिचार: प्रशस्यते।।२५।।

चन्द्रोदये चन्द्रवारे केन्द्रस्थे देवपूजिते।

[४४]रससङ्ग्रहोऽभिहित: कर्कटेंऽशे विशेषत:।।२६।।

[४५]प्रव्रज्यायोगे स्थिरभे कर्मगे देवपूजिते।

दीक्षामुमुक्षोर्धर्मस्थै: क्रूरै: [४६]कार्यविलोकितै:।।२७।।

श्रुतिस्मृतिपुराणादिप्रोक्तानां धर्मकर्मणाम्।

गुरु[४७]ज्ञलग्नवर्गेषु प्रारम्भस्तद्बले सति।।२८।।

---

(४१)व.१-राक्षा। (४२)क.-करा। (४३)व.१-गुरौ।

(४४)व.१-रसानां सङ्ग्रह: शस्त:, क.-सङ्ग्रहसिद्धि: स्यात्।

(४५)व.१-प्रवज्य।

(४६)व.३,क.-कार्यावलोकितै:। (४७)व.१-ज्ञा।

लग्न[४८]धर्म[४९]गते [५०]सौम्य[५१]गुरौ वा [५२]हिमदीधितौ।

तयोर्वर्गस्थि[५३]ते शिल्पकर्मारम्भः प्रशस्यते।।२९।।

पापग्रहोदयं हित्वा बुधराशिगते विधौ।

शुभेषूदयसंस्थेषु ज्ञानस्य ग्रहणं शुभम्।।३०।।

[५४]लग्नसंस्थे [५५]बुधे केन्द्रे [५६]बुधराशौ तु वीक्षिते।

शुभग्रहैश्चतुर्थस्थै[५७]र्नाट्यारम्भः प्रशस्यते।।३१।।

दशमैकादशे राशौ लग्नगे [५८]जन्मलग्नतः।

वित्तकेन्द्रत्रिकोणस्थैः पण्यकर्म घटं विना।।३२।।

---

(४८)व.१-कर्म। (४९)व.३-युते, क.-गतैः। (५०)व.३,क.-सौम्ये।

(५१)व.१-जीवे। (५२)व.१-सुरमन्त्रिणौ।

(५३)व.१-(समाक्षर लोपः) श्लोकः क्र.२९क.(ते...) तः

श्लोकः क्र.३०क. (...स्थ) पर्यन्त।

(५४)व.३-लग्ने। (५५)व.१-शुभेचन्द्रे, व.२.३-बुधे चन्द्रे।
(५६)व.१-ज्ञ।

(५७)व.३-नाड्या। (५८)पु.,क.-न स।

[५९]गुरुज्ञे वा लग्नगते शुक्रे कर्मगते विधौ।
[६०]आप्यभे जलकार्या[६१]णामारम्भः सिद्धिदः स्मृतः।।३३।।
षट्सप्ताष्टान्त्यशुद्धे च बलिनः शुभखेचराः।
आयुर्वृद्धि[६२]करे योगे [६३]कर्तव्या[६४]श्चोषधिक्रियाः।।३४।।
भाग्ये [६५]पुष्ये समैत्रे च लग्ने शुक्रे क्षिते युते।
करणे तैतिलेऽष्टम्यां द्वादश्यां सन्धिरिष्यते।।३५।।
सक्रूरे क्रूरवर्गस्थे चन्द्रे [६६]बलिनि बोधने।
[६७]अरिष्टयोगे [६८]कर्तव्यस्त्वाभि[६९]चा[७०]रो निरैधने।।३६।।

---

(५९)व.१.३–गुरौज्ञे। (६०)व.१–आप्यगे। (६१)व.२,पु.–णि आरम्भः।

(६२)व.१–प्रदे। (६३)व.२–कर्तव्यं। (६४)व.२.३,क.–त्वौषध।

(६५)व.१–पौष्णे च मैत्रे च। (६६)पु.–चलिनि। (६७)व.१–रिष्टयोगेषु।

(६८)व.१–कर्त्तव्योह्य।

(६९)व.१–(लोपः)श्लोकः क्र.३६–ड(चारो..) तः श्लोकः क्र.३७ड(..खे)।

(७०)क.–चारेनिरोधने, व.२–चारोनरैधने।

।। सर्वलग्नाध्यायः।।  (अध्यायः२२)

गुरौ लग्नगते शुक्रे बलिन्याप्योदये विधौ।

शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः।।३७।।

आदौ प्रकल्पयेत्सर्वं [७१]लग्ने कर्तुर्विधोर्बलम्।

बलो[७२]पपन्ने शशिनि सन्त्यन्ये बलिनो ग्रहाः।।३८।।

चन्द्रस्य बलमाधारमाधेयं [७३]चान्यखेट[७४]जम्।

आधारे सुस्थिरे [७५]भूते [७६]व्याधेयं द्योत्यते [७७]खिलम्।।३९।।

शुभदो यदि शीतांशुर्ग्रहाः सर्वे शुभप्रदाः।[७८]

लग्नोदितां[७९]शके [८०]पुष्यफलदस्तानतिक्रमः।।४०।।

---

(७१)व.१–विनैग्ने। (७२)पु.–पवन्ते, व.३–पन्नो। (७३)व.२–वान्य।

(७४)व.३–ज्ञम्। (७५)पु.–मूर्ते। (७६)व.३–प्याधेयं, व.२–व्यामेवं।

(७७)पु.–किल।

(७८)व.१–(अधिकम्)–स चाशुभप्रदोयत्र ते सर्वेऽप्यशुभप्रदाः।

(७९)व.२–शगो। (८०)व.३–पुष्पफलवेस्ताननिक्रमः,

व.१–पुष्य फलवेश्मानतिक्रमः, व.२–लग्नफलदस्तानतिक्रमः।।

ग्रहो द्वितीयगः शेषस्थानेष्वेवं प्रकल्पयेत्।
एवं [८१]लग्नं ग्रहान् ज्ञात्वा [८२]भावतः पूर्ववन्नयेत्।।४१।।
प्रायः शुभग्रहास्त्वष्टरिःफस्थास्त्वशुभप्रदाः।
[८३]पापास्त्रिकोण[८४]केन्द्रान्त्यमृत्युस्थास्त्वशुभप्रदाः।।४२।।
[८५]पूर्णः [८६]क्षीणोऽपि वा चन्द्रो लग्ने सर्वत्र गर्हितः।
जन्मभा[८७]दष्टमं लग्नं त्यजेत्सौम्या[८८]न्वितेऽपि [८९]च।।४३।।
तथैवाष्टमराशि[९०]श्च गर्हितः सर्वकर्मसु।
न लभ्यतेऽल्पदिवसैर्लग्नं सर्वगुणान्वितम्।।४४।।
दोषाल्पत्वे गुणाधिक्ये स कालो मङ्गलप्रदः।।४५।।

[९१]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां
सर्वलग्नाध्यायो द्वाविंशतितमः।।    ।।२२।।

---

(८१)व.३–लग्न। (८२)पु.–भावना। (८३)व.१–प्रायः।
(८४)व.१–केन्द्रासमृत्युस्था। (८५)पु.–पूर्णा। (८६)पु.–क्रीणो।
(८७)पु.–दमृगं। (८८)पु.–वितोऽपि,व.१–चिते च।
(८९)व.२.३.१,क.–तत्। (९०)व.१–स्तु।
(९१)पु.–सर्वलग्नाध्यायो द्वाविंशः।।,
व.२–सर्वलग्नाध्यायो द्वाविंशतिः।।,
व.१–इति कश्यपसंहितायां सर्वलग्नाध्यायः द्वाविंशः।।,
क.–इति सर्वलग्नाध्यायो द्वाविंशतिः।।,
व.३–इति लग्नाध्यायो द्वाविंशतिमः।।

## ।। त्रयोविंशतितमोऽध्यायः ।।

## ।। प्रथमार्तवाधानाध्यायः ।।

अथातः सम्प्रवक्ष्यामि नारीणां प्रथमार्तव[१]म्।

शुभाशुभफलप्राप्तिस्तद्वशाच्च भवेद्यतः ।।१ ।।

ल[२]ग्नपञ्चाङ्गवशतो ज्ञातव्या सा शुभाशु[३]भा।

[४]पृच्छकस्य तु लग्ना[५]त्तु निधन[६]स्थे विधौ यदि।।२ ।।

पापग्रहेक्षि[७]ते युक्ते सा नारी दुर्भगाधवा।

तस्मिन् चन्द्रे कुजयुते लग्ने पापग्र[८]हे यदि।।३ ।।

व्याधि[९]योनिः पितृगृहे पतिमुक्ता स्थिता सदा।

अष्टमी षष्ठ्यमा रिक्ता द्वादशी सङ्क्रमेऽ[१०]पि [११]वा।।४ ।।

वैधृ[१२]तौ [१३]व्यतीपाते च ग्रहणे चन्द्रसूर्ययोः।

वि[१४]ष्ट्यां सन्ध्यासु निद्रायां दुर्भगा प्रथमार्त[१५]वा।।५ ।।

---

(१)क.-व। (२)क.-ग्नं। (३)व.१-भम्। (४)व.१-बृश्चिकस्य।

(५)व.१-स्तु। (६)क.-स्थो। (७)व.१-त युक्तं। (८)व.१-हो।

(९)व.३,क.-च्छोणी, व.२-श्रोणी। (१०)व.१-षु। (११)व.१.२-च।

(१२)पु.-ति। (१३)व.१-च व्यतिपाते। (१४)पु.-ष्ट्या। (१५)व.१-वे।

[१६]रोगिणी रविवारे तु सोमवारे पतिव्र[१७]ता।
दुःखिता भौमवारे [१८]तु बुधे सौभाग्यसंयुता।।६।।
[१९]श्रीसंयुता गुरोर्वारे [२०]पतिभक्ता [२१]भृगोर्दिने।
मलिना मन्दवारे तु रात्रावपि तथैव च।।७।।
मानिनी श्रीयुता भो[२२]गा सुभ[२३]गा [२४]बन्धुपूजि[२५]ता।
सौख्यान्विता पुत्रवती पतिभक्ता च दस्त्रभे।।८।।
[२६]काकवन्ध्या परप्रेष्या दुःशीला स्वैरिणी खला।
स्वगर्भ[२७]पातनरता [२८]याम्यभे [२९]बहुभाषिणी।।९।।

---

(१६)व.३-रोहिणी। (१७)व.२-तः। (१८)व.२-च।

(१९)व.१-पतिभक्ता। (२०)व.१-श्रीयुता। (२१)व.२-भृगुवासरे।

(२२)व.१.३,क.-गी। (२३)व.१-सुभगां। (२४)व.१-वधू।
(२५)व.१-ताः।

(२६)व.१-कामबन्धा। (२७)व.१-पाततत्परा। (२८)व.१-दुर्भगा।

(२९)व.१-याम्यभे सति।

## ।। प्रथमार्तवाधानाध्यायः।।    (अध्यायः२३)

मृतप्रजा परप्रेष्या परसन्तानसंयुता।

परपुरुषरता भोगी मानयुक्ता च वह्निभे।।१०।।

[३०]सुरूपा सुभगा [३१]मानी [३२]पतिभक्ता [३३]सुपुत्रिणी।

[३४]श्रीसंयुता स्थिता [३५]ज्ञानी [३६]मन्दगामी च [३७]पितृभे।।११।।

पतिव्रता सुपुत्राढ्या [३८]मानी सर्वम[३९]हासती।

[४०]भोगी कर्मरता ज्ञानी [४१]चन्द्रभे शीघ्रगामिनी।।१२।।

[४२]चलव्रता खला [४३]कष्टा रजोगुणसमन्विता।

वन्ध्या पितृगृहा[४४]सक्ता व्यस[४५]नी रौद्रभे [४६]सति।।१३।।

---

(३०)व.२-(लोपः)सुरुपा। (३१)मानिनी। (३२)व.१-(लोपः) पतिभक्ता।

(३३)व.१-सर्षहासिनी। (३४)व.१-श्रीयुतावास्थिरा। (३५)क.,व.३-मानी।

(३६)व.१-मद। (३७)व.१.२.३,क.-धातृ। (३८)व.१-मानिनी।

(३९)व.१-हासिनी। (४०)व.१-भोग। (४१)पु.-चान्द्रभे।

(४२)पु.-वल, व.१-वरा। (४३)व.१.२-केष्ट, व.३-कष्ट्रा।

(४४)पु.-श। (४५)व.१-ना। (४६)व.१-सदा, व.३,क.-तथा।

## ।। प्रथमार्तवाधानाध्यायः ।।    ( अध्यायः २३ )

कुलाचाररता मानी पतिभक्ता सुपुत्रिणी।

सुभगा [४७]धनिनी भो[४८]गी कुटिलादितिभे सति।।१४।।

प्रचण्डकामा[४९]पि सती [५०]सुपुत्रा [५१]भ्रातृमोदिनी।

यशस्विनी धनी भोगी बहुव्ययपरेज्यभे।।१५।।

अलसा [५२]निर्धना कामी पुंश्चली कप[५३]टी [५४]खला।

दुःसन्तानवती दुःखी परकार्यरताहिभे।।१६।।

मानी कलासु निपुणा [५५]गेयज्ञा शत्रुसूदिनी।

पितृ[५६]वैश्मरता साध्वी [५७]पतिभक्ता च पैतृभे।।१७।।

[५८]क्रुद्धा [५९]च [६०]क्लेशदा वन्ध्या परकार्यरता खला।

निशान्धा पुंश्चली जाता दौर्भाग्या भगदैवते।।१८।।

---

(४७)व.१–धननी, पु.–धनिनो, क.–सुधनी। (४८)व.३,क.–गा।

(४९)क.–न। (५०)व.१–पुत्रभर्तृ। (५१)व.१–प्रमोदिनी।

(५२)पु.–निर्धृणा। (५३)व.१–टे। (५४)व.१–क्षणा।

(५५)व.१–नयज्ञा, क.–नेयज्ञा। (५६)व.१–मातृ। (५७)व.२–भर्द्द।

(५८)व.३,क.–कृसा, व.१–वृद्धा। (५९)व.१–क्ले।

(६०)व.२.३, क.–शसहा।

## ।। प्रथमार्तवाधानाऽध्यायः ।।    (अध्यायः२३)

बन्धुपूज्या पुत्रवती धर्मशक्ता दृढव्रता।

पितृमातृजनैर्युक्ता [६१]विवैरार्यमभे सति।।१९।।

बहुपुत्रा बहुधना [६२]निर्दोषा [६३]बहुभागिनी।

व्यवहारकलाभिज्ञा भर्तृपूज्या च हस्तभे।।२०।।

आढ्या वाणिज्य[६४]कुशला निपुणा चित्रकर्म[६५]सु।

कामी [६६]भोगपरा दक्षा सुशीला चित्रभे सति।।२१।।

पुत्रपौत्र[६७]वती साध्वी कलाभिज्ञा धनान्विता।

[६८]साधुप्रिया [६९]धर्मशक्ता भोगिनी [७०]तु ध्रुवायुभे।।२२।।

परपुरुषरता दुष्टा नीचकर्मरता खला।

[७१]दुष्पुत्रा [७२]मलिना [७३]कष्टा द्विदैवर्क्षे च [७४]दुर्भगा।।२३।।

---

(६१)व.१–विवेकार्य। (६२)व.१–निर्द्वेष्या। (६३)व.३,क.–भोग।

(६४)व.१–कुशता। (६५)व.१–णि। (६६)व.३–भोगरता, क.–योग।

(६७)व.१–युता। (६८)व.१–धर्म। (६९)व.१–साधुचेष्टा, क.–साधुसष्टा।

(७०)व.३–रुकपपाशुभे, व.१–मारुतर्क्षके। (७१)व.१–अ।

(७२)व.२–मलिनी। (७३)व.१–क्रुद्धा, व.२–वन्ध्या। (७४)व.१–दुर्मदा।

## ।। प्रथमार्तवाधानाऽध्यायः ।।     (अध्यायः २३)

पति[७५]पक्षार्चिता कान्ता [७६]सुपुत्रा सुभगा[७७]नना।

स्वकुलाचारनिरता गुणाढ्या मित्रभे सति।।२४।।

दुष्पुत्रा दुर्भगा [७८]क्लेशी [७९]दुश्चरित्ररता [८०]व्यसू।

[८१]इन्द्रभे रोगसंयुक्ता नीचकर्म[८२]परा व्ययी।।२५।।

परदुःखोपशम[८३]ना स्वकार्यनिरता [८४]सती।

पुत्रारोग्यवती [८५]भोगी नै[८६]र्ऋतर्क्षे [८७]विपुत्रिणी।।२६।।

क्रूरकर्मरता दुःखी [८८]छन्न[८९]पापाश्चलालसा।

[९०]दीर्घकामी [९१]च दुष्पुत्रा तोयर्क्षे दुर्मदा [९२]जडा।।२७।।

---

(७५)व.१-व्रता। (७६)व.१-सुत्रत्री। (७७)व.१-धनी, क.-मिनी।

(७८)व.२-केशी। (७९)व.२-चरित्र्यरमा। (८०)पु.-वसु, व.१-न्यसः।

(८१)व.१-ऐ। (८२)व.१-रता। (८३)व.१-नी। (८४)पु.-सदा।

(८५)व.१-भागी। (८६)व.१-ऋत्य। (८७)व.१-सुपुत्रिणी।

(८८)व.१-छिन्न। (८९)पु.-पार्थखलालसा, व.१-पापसुषाखलाः।

(९०)व.१-दोषगासा, व.२-दीर्धकामा। (९१)क.-बहु।

(९२)व.१-जिका।

[९३]भोगसौभाग्यसंयुक्ता सुपुत्रा [९४]सुभगा स[९५]ती।
कुशला [९६]सर्वकार्येषु वैश्वभे [९७]पतिपूजिता।।२८।।
धन[९८]धान्या [९९]सुपुत्राढ्या [१००]भामिनी [१०१]भोगभागिनी।
पतिप्रिया [१०२]बन्धुपूज्या धर्मज्ञा श्रवणे सति।।२९।।
धनधान्यागमपरा सुपुत्रा बन्धुपूजिता।
साध्वी सर्वगुणोपेता वसुभे पतिमोदिनी।।३०।।
बहुपुत्रा गुणवती धनिनी [१०३]मानिनी [१०४]सती।
स्वकुलाचारनिरता वारुणे भोग[१०५]दायिनी।।३१।।

---

(९३)व.२-भाग्य। (९४)व.१-बन्धुपूजिताः। (९५)पु.-ते।

(९६)पु.-खिलक्रोधेषु। (९७)व.१-परि। (९८)व.२-न्य।

(९९)व.१-गमप्रीता।

(१००)क.-मतिनी, व.१-सुपुत्री। (१०१)व.१-बन्धुपूजिता।

(१०२)व.१-मानयुक्ता। (१०३)व.१-मननी। (१०४)पु.-सति।

(१०५)व.१-भामिनी।

शिल्पकार्यरता [१०६]क्रोधी निपुणा [१०७]द्यूतकर्मणि।

बन्ध[१०८]की बन्धु[१०९]रिष्टेष्टा पूर्वाभाद्रपदे खला।।३२।।

[११०]पुत्रसौभाग्यसंयुक्ता [१११]पतिभक्ता [११२]दृढव्रता।

[११३]बन्धुप्रिया [११४]धर्मनिरता[११५]हिर्बुध्न्ये [११६]धनिनी सती।।३३।।

धनधा[११७]न्याकुला साध्वी कामिनी [११८]बहुपुत्रिणी।

पति[११९]भक्ता बन्धुपूज्या गुणैर्युक्ता च [१२०]पौष्णभे।।३४।।

---

(१०६)व.१,क.–क्रोधा। (१०७)व.१.२–धूर्तकर्मसु।

(१०८)व.३–कीं, व.२–कं। (१०९)व.१–विद्वेषी, पु.–रिष्टष्टा, व.३–रिष्टीं।

(११०)व.१–परदुःखोपरा। (१११)व.१–मनी स्वकार्यनिरता।

(११२)व.१–सती।

(११३)क.–बंधुव्यो, पु.....पूर्वा, व.३–बन्धुर्त्या। (११४)व.१–धर्मरता।

(११५)व.१–चाहिर्बृध्न्यो।

(११६)व.१–धनी, पु.–यमिनी, क.–यननी।

(११७)व.१–न्य।

(११८)व.३–षड। (११९)व.३–र्भ।

(१२०)व.१–पूषपे।

## ।। प्रथमार्तवाधानाऽध्यायः।। (अध्यायः२३)

पापग्र[१२१]हलयो [१२२]नेष्टपापग्रहयु[१२३]तोऽपि वा।
[१२४]निन्द्येऽपि [१२५]दिनवारर्क्षे [१२६]नाचरेत्तत्र मङ्गलम्।।३५।।

तस्मात्सम्य[१२७] ग्व्यधार्योऽयं [१२८]सम्यग्मङ्गलमाचरेत्।।३६।।

तिथिवासरधिष्ण्येषु पुष्पं निन्द्येषु दृश्यते।
[१२९]गमनं वर्जयेत्तत्र पुनः शस्तेषु दर्शनात्।।३७।।

दोषापनुत्तये होमं [१३०]घृतं दूर्वातिलाक्षतैः।
कुर्यादष्टोत्तरशतं गायत्र्या च पृथक् पृथक्।।३८।।

[१३१]स्वर्णगोभूतिलानान्दद्याद् वि[१३२]प्रेभ्यश्च स्वशक्तितः।
अनेन विधिना चैव तस्माद् दोषात्प्रमुच्यते।।३९।।

---

(१२१)व.१-हालयं। (१२२)व.१-तेष्टं, व.३-ष्टः। (१२३)व.१-तं च यत्। (१२४)व.१-निन्दिते, क.-निन्द्यो। (१२५)क.-निज। (१२६)व.३-न वदेत्। (१२७)पु.-ग्विचार्याय, क.-र्यार्थं। (१२८)व.१-तस्मिन्मङ्गलमाचरेत्।

(१२९)पु.-गणनं। (१३०)पु.-द्युतं।

(१३१)पु.-(पाठभेदः)स्वस्वर्णगोधूमतिलानान्दद्यान्,

व.१-स्वर्णगोभूहिरण्यानि, क.-स्वर्णगो।

(१३२)व.१-प्राय।

## ।। प्रथमार्तवाधानाऽध्यायः ।।    (अध्यायः २३)

चतुर्थेऽहनि [१३३]वा स्पृश्या रजोदर्शनतः स्त्रियः।
पञ्चमेऽहनि शुद्धा [१३४]सा [१३५]देवकर्मणि [१३६]पैतृके।।४०।।
त्यक्त्वा पर्वतिथिं मूल[१३७]माश्लेषां पैत्र्यभं त्वि[१३८]ह।
आधानकाललग्ने च [१३९]चन्द्रेऽप्यो[१४०]जांश[१४१]राशिके।।४१।।
पुंग्रहैर्वीक्षिते [१४२]युग्मतिथौ पत्नीं च कामयेत्।
पुंजन्मव्यत्यये स्त्री [१४३]स्यान्मिश्रे षण्ढ[१४४]स्य सम्भवः।।४२।।
निर्बीजा[१४५]नां समायोगा [१४६]विदृशामिव [१४७]निष्फलाः।
कान्ताकटाक्ष[१४८]दृक्पा[१४९]ताद् वशीकृतजग[१५०]त्त्रया।।४३।।

---

(१३३)व.१–चा। (१३४)व.३–स्युर्। (१३५)व.१–दैवेपित्र्ये च।
(१३६)व.१–कर्मणि।(१३७)क.–मश्ले। (१३८)क.–हः।
(१३९)व.१–उच्चराशिं, पु.–चन्द्र। (१४०)व.१–गते।
(१४१)व.१–रवौ।
(१४२)व.१.२–युग्मे। (१४३)व.१–ण्यान्। (१४४)पु.–स्तु।
(१४५)क.–नाममी योगा। (१४६)व.१,पु.–विभृशामिव।
(१४७)व.२–निष्फलम्। (१४८)क.–दृश्या ता।
(१४९)व.२–तवशी, क.–नशी। (१५०)क.–तत्रम्।

# ।। प्रथमार्तवाधानाऽध्यायः ।।     ( अध्यायः २३ )

[१५१] ।। इति श्रीकश्यपब्रह्मर्षिविरचितायां  महासंहितायां

प्रथमार्तवाधानाध्यायस्त्रयोविंशतमः ।।   ।।२३।।

---

( १५१ )पु.–प्रथमार्त्तवाधानाध्यायस्त्रयोविंशः ।।,

व.१–इति  कश्यपसंहितायां  रजोदर्शनाधानध्यायः त्रयोविंशः ।।,

व.२–प्रथमाध्यायस्त्र्योविंशतिः ।।,

क.–इति  प्रथमार्तवाधानाध्यायस्त्र्योविंशतिः ।।,

व.३–इति  प्रथमार्तवाधानाध्यायस्त्र्योविंशतिमः ।।

# ।। चतुर्विंशतितमोऽध्यायः ।।

## ।। सीमन्ताध्यायः ।।

अथातः सम्प्रवक्ष्यामि सीमन्तोन्नयनं शुभम्।

[१]व्यक्तगर्भे [२]पुंसवनं कृत्वा कार्यं यथाविधि।।१।।

मासे चतुर्थे षष्ठे वा [३]कर्तव्यं त्वष्टमेऽपि वा।

शुक्लपक्षादिदिव[४]सं रिक्तां [५]पक्षस्य [६]मध्यगाम्।।२।।

ति[७]थि[८]न्त्यर्कभूसूनुसुरेज्यानां च वासरे।

पापैरसंयु[९]क्तक्षिप्रचराचरमृदुडुषु।।३।।[१०]

पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते।

[११]मासेश्वरे[१२] [१३]बलोपेते नास्तगे न पराजिते।।४।।

---

(१)व.१–गर्भे व्यक्ते। (२)पु.–समासेन। (३)व.१–कार्यं तु नवमे।

(४)व.२–सान्। (५)व.१–पक्षान्त्य। (६)व.१–मध्यमाम्, व.२–मध्यमम्।

(७)व.३,क.–थिं। (८)व.१.३,क.–त्यक्त्वार्क। (९)व.१–ते।

(१०)व.२–(लोपः)श्लोकः क्र.–३ तः श्लोकः क्र.४अ–ब।

(११)पु.–मासेशे त्व, व.३–मासेश्वरो। (१२)व.१–स्वरे।

(१३)व.३–बले।

## ।। सीमन्ताध्यायः ।।    (अध्यायः २४)

आधानतो [१४]मासपाः स्युः शुक्रारेज्यार्करात्रि[१५]पाः।
सौरज्ञाधानलग्नेशचन्द्रा[१६]र्कास्तद्वशात्फलम्।।५।।
[१७]ओजांशवो[१८]जराशौ [१९]च शुभग्रहयुतेक्षिते।
[२०]न नैधने तयोर्ल[२१]ग्ने नैधने [२२]शुद्धिसंयुते।।६।।
पञ्चभि[२३]श्च चतुभि[२४]श्च सूर्येन्दुगुरुपूर्वकैः।
ग्रहै[२५]रि[२६]ष्टैः शु[२७]भे [२८]ल[२९]ग्ने राशावपि न नैधने।।७।।
केन्द्रत्रिकोणदुश्चिक्यधनायेषु शुभग्रहाः।
शुभदास्त्रिषडायस्थाः क्रूराश्चैव शुभप्रदाः।।८।।

---

(१४)व.१-मानवस्य। (१५)व.१-वा।

(१६)व.२-कस्, क.-साद्वलम्, व.१-मुद्धृसांस्चतिः।

(१७)पु.-(लोपः)ओजां, व.१-औ, व.२-रोषो, क.-सुतांशेस्वौ।

(१८)व.१.३-प्योज। (१९)व.१-वा। (२०)क.-नै, व.१-ते।

(२१)पु.-ग्नं। (२२)व.१-सुधि। (२३)पु.,व.३-र्वा।

(२४)पु.,व.३-र्वा। (२५)क.-र्दृ।

(२६)व.१-ष्टे। (२७)क.-भै। (२८)व.२-र्ल। (२९)क.-ग्न।

चन्द्रोऽपि शुभदो ज्ञेयस्त्यक्त्वा षष्ठाष्ट[३०]मव्ययः।

सीमन्तलग्नादेकोऽपि क्रू[३१]रपञ्चाष्टरिः[३२]फगः।।९।।

हन्ति सीमन्तिनीं सोऽपि [३३]तद्गर्भं [३४]वा न संशयः।

अस्तगा नीचगा शत्रुक्षेत्रस्था न फलप्रदाः।।१०।।

उदिता[३५]स्तुङ्गगा मित्रक्षेत्र[३६]स्थाः [३७]सुफलप्रदाः।

तस्मात्सर्वं विचार्यैवं वदेल्लग्नं गुणाधिकम्।।११।।[३८]

[३९]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

सीमन्ताध्यायश्चतुर्विंशतिः।। ।।२४।।

---

(३०)क.–मीव्ययः, पु.–ध्यगः, व.३–व्ययान्। (३१)व.१.३–रः।

(३२)व.१–ष्ट। (३३)पु.–तदृर्क्षं। (३४)व.२–च। (३५)व.३–स्तङ्गगा।

(३६)व.२–स्तु, क.–स्थोक्त। (३७)व.३–स्व।

(३८)व.१–(लोपः)श्लो. क्र.–११अ,ब।

(३९) पु.,व.२–सीमन्ताध्यायश्चतुर्विंशतिः।।,

व.१–इति कश्यपसंहितायां सीमन्तोन्नयनाध्यायश्चतुर्विंशः।।,

क.–इति सीमन्ताध्यायश्चतुर्विंशतिः।।,

व.३–इति सीमन्ताध्यायश्चतुर्विंशतिमः।।

## ।। पञ्चविंशतितमोऽध्यायः ।।

## ।। जातकर्माध्यायः ।।

अथातः सम्प्रवक्ष्यामि जातकर्म शिशोस्त[१]था।
जन्मकालेऽपि कर्तव्यं [२]सूतकान्तेऽपि वा ततः[३] ।।१ ।।
नामकर्म तथा कार्यमाभ्यु[४]दयिकपूर्वकम्।
सूतकान्ते द्वादशाहे स्वस्तिवाचनपूर्वकम्।।२ ।।
सुश्रीयुतं नामपूर्वं [५]तिङतं सुसमाक्षरैः।
उक्तकाले प्रकर्त[६]व्या द्विजानामखि[७]लक्रिया:[८] ।।३ ।।
[९]अतीतेषु च कालेषु कर्तव्याश्चोत्तरायणे।
[१०]सुरेज्येऽप्यसुरेज्ये वा नास्तगे न च वार्धके।।४ ।।

---

(१)व.१–दा। (२)व.१–शुभकाले। (३)पु.–ततम्।

(४)व.२,क.–दैविक,व.३–देविक।

(५)व.१–भोजान्ते, व.२–तिङगद्भूतं, पु.–(त्रुटितम्) तिङ्न्तं।

(६)व.२–व्यः।

(७)व.२–ला। (८)व.३–लाः। (९)व.२–अतस्तेषु।

(१०)व.१–पिस्येसुरेज्येऽपि।

## ।। जातकर्माध्यायः ।। (अध्यायः २५)

शुभलग्ने शु[११]भांशे च शुभेऽह्नि शुभवासरे।

चन्द्रताराबलोपेते नैधनोदयवर्जिते।।५।।

पूर्वाह्णे क्षिप्रनक्ष[१२]त्रचरस्थिरमृदुडुषु।

नाममङ्गलघोषैश्च रहस्यं दक्षिणे श्रुतौ।।६।।

[१३]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

जातकर्माध्यायः पञ्चविंशतिः।। ।।२५।।

---

(११)व.१–भा। (१२)व.१–त्रे।

(१३)पु.,व.२–जातकर्माध्यायः पञ्चविंशतिः।।,

व.१–इति जातकर्म नामाध्यायः पञ्चविंशः।।,

क.–इति जातकर्मादिध्यायः पचविंशतिः।।,

व.३–इति जातकर्मादिध्यायः पचविंशतिमः।।

## ।। षड्विंशतितमोऽध्यायः ।।

## ।। अन्नप्राशनाध्यायः ।।

अथातः सम्प्रवक्ष्यामि नवान्नप्राशनं शिशोः।

मासे ष[१]ष्टाष्टमे वापि दशमे वापि वत्सरे।।१।।

द्वादशीमष्टमीं रिक्तां नन्दां चैव दिनक्षयम्।

सूर्यार्किभौमवा[२]रांश्च त्यक्त्वान्यदिनवासरे।।२।।

चरस्थिरमृदुक्षिप्रनक्षत्रेषु शुभे दिने।

[३]अदुर्दिने च पूर्वाह्णे चन्द्रताराबलान्विते।।३।।

शुभलग्ने शुभांशे च दशमे शुद्धिसंयुते।

जन्मराशिविलग्नाभ्यां नैध[४]नेंऽशे विवर्जिते।।४।।[५]

कृत्वाभ्युदयिकं कर्म स्वस्तिवाचनपूर्वकम्।

शुक्लस्रग्वस्त्रगन्धाद्यैः शिशुर्दैवज्ञमर्चयेत्।।५।।

---

(१)व.३-ष्टे। (२)व.३-रा।

(३)पु.-शुभे दिने। (४)व.३-नांश।

(५)व.१-(लोपः)श्लोकः क्र.-४ब तः श्लोकः क्र.-६अ।

## ।। अन्नप्राशनाध्यायः ।।  (अध्यायः २६)

बालकं प्राङ्मुखं कृत्वा प्राशयेच्च विधानतः।
स्वर्णद्रव्याथवा रौप्यद्रव्या वा [६]मङ्गलस्वनैः।।६।
त्रिकोण[७]केन्द्रेषु[८] त्र्यायेषु शुभैस्त्र्यायारिगैः [९]परैः।
अलग्ननिधनान्त्यारिस्थानस्थेन हिमांशुना।।७।।
क्षीणचन्द्रो यदि भवेदन्नप्राशनलग्नगः।
निस्वं करोति भोक्तारमथवा व्याधि[१०]संयुतम्।।८।।
शनैश्चरो यदि भवेद्राहुर्वापि विलग्नगः।
[११]सदालसं कदशनं [१२]केतुर्वापि न संशयः।।९।।
अन्नप्राशनलग्नस्थः सूर्यो वा यदि वा कुजः।
भोक्तारं व्याधिना हन्ति रिपुणा वा न संशयः।।१०।।

---

(६)व.१-मङ्गलानिः। (७)पु.-केन्द्र।

(८)पु.-त्र्याय, व.२-स्वांत्राथ।

(९)व.१-पापैः। (१०)व.१-पीडितम्।

(११)पु.,व.३,क.-सदासौक।

(१२)पु.-भुङ्क्ते।

## ।। अन्नप्राशनाध्यायः ।।          (अध्यायः २६)

अन्नप्राशनलग्नस्थः पूर्णच[१३]न्द्रशुभोऽपि वा।

[१४]सम्पूर्णान्न[१५]सदाभो[१६]क्ता भोग[१७]भागी [१८]भवेच्छिशुः।।११।।

द्वौ शुभौ यदि लग्नस्थौ स भोक्ता [१९]सत्रदो भवेत्।

अन्नं प्राणा हि भूतानां तस्माल्लग्नं विशोधयेत्।।१२।।[२०]

[२१]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां

महासंहितायामन्नप्राशनाध्यायः षड्विंशतिः।। ।। २६।।

---

(१३)व.३–न्द्रः। (१४)क.–सम्पूर्णानानारा, व.१–सम्पूर्णान्नः।

(१५)व.३–प्रदो।

(१६)व.१–क्तो। (१७)व.१–भोगी। (१८)क.–न संशयेः।

(१९)व.२–रसदो, पु.–सक्षदो।

(२०)व.१–(लोपः) श्लोकः क्र.–१२क–ड।

(२१)पु.,व.२–अन्नप्राशनोध्यायः षड्विंशतिः।।,

व.१,क.–इत्यन्नप्राशनाध्यायः षड्विंशः।।,

व.३–इत्यन्नप्राशनाध्यायः षड्विंशतिः।।

## ।। सप्तविंशतितमोध्यायः।।

## ।। चौलाध्यायः।।

अथातः सम्प्रवक्ष्यामि बालानां चौलकर्म यत्।
तृती[१]ये वत्सरे वापि पञ्च[२]मादपि [३]जन्मतः।।१।।
स्वकुलाचारतः का[४]र्यमुत्तरायणगे रवौ।
अमरेज्ये सुरेज्ये च नास्तगे न च वृद्धगे।।२।।
पञ्च[५]पर्वतिथिं रि[६]क्तां त्यक्त्वा[७]न्यदिवसेषु च।
[८]चन्द्रज्ञजीवशुक्राणां वा[९]रल[१०]ग्नांशकेषु च।।३।।
दस्रे[११]न्द्वदितिपुष्येन्द्रभेषु हस्तत्रये[१२]षु [१३]च।
वि[१४]ष्णुत्रयेषु [१५]पौष्णे च चौलकर्म शुभप्र[१६]दम्।।४।।[१७]

---

(१)व.३–य। (२)पु.–मे। (३)पु.–वापि जन्मतः, व.३–ब्दे जन्मतः।
(४)व.३–र्य, पु.–र्या (५)पु.–वर्ष। (६)पु.–क्ता। (७)व.१–र्क।
(८)व.१–चन्द्रार्क्षजीव। (९)व.१–रे। (१०)व.१–ग्ने। (११)पु.,व.२–द्र।
(१२)व.१–पि। (१३)पु.–वा। (१४)क.–ष्ट। (१५)व.२–पौष्णर्क्षे।
(१६)पु.–दाम्।
(१७)व.१–(लोपः)श्लोकः क्र.–४क तः श्लोकः क्र.–६ड।

## ।। चौलाध्यायः ।।                    (अध्यायः २७)

पञ्चाङ्गशुद्धिदिवसे   चन्द्रताराबलान्विते।

नैधने   शुद्धिसंयुक्ते   लग्नराशौ   न   नैधने।।५।।

[१८]अष्टषष्टान्त्यगे   चन्द्रे   [१९]पापास्वायत्रिशत्रुषु।

[२०]चतुष्टयत्रिकोणेषु   [२१]स्वद्वित्रिषु   शुभेषु   च।।६।।

नवान्नप्राशने   चौले   व्रतब[२२]न्धेऽभिषेचने।

शुभदं   जन्मनक्षत्रमशुभं   त्वन्यकर्मणि।।७।।

अथ   क्षौरं   च   सर्वेषां   साधारणमिहोच्यते।

तस्मिन्नेव   दिने   वारे   नक्षत्रे   [२३]वोद[२४]येंऽशके।।८।।

अथवा   क्षणपञ्चाङ्गे   क्षौरकर्मणि   चोदिते।

शुभलग्ने   शुभांशे च   नृणां   क्षौरं   शुभप्रदम्।।९।।

---

(१८)व.१-अषष्टाष्टां। (१९)पु.-पापैश्चाय।

(२०)व.२-धनत्रय।

(२१)क.-स।

(२२)पु.-न्धा। (२३)क.-चो।

(२४)व.१-यां।

## ।। चौलाध्यायः ।। (अध्यायः २७)

क्षौरकर्म विधेयं [२५]च पञ्चमे पञ्चमे दिने।

क्षौरभस्योदये वापि [२६]निन्द्यर्क्षे न कदाचन।।१०।।

स्नात्वा भुक्त्वाहवे याने भूषिते [२७]निशि सन्ध्ययोः।

नवमे दिवसेऽ[२८]भ्यक्ते [२९]क्षौरं नात्महितैषिणाम्।।११।।

[३०]विप्रभूपाज्ञयोद्वाहे सूतके बन्धमोक्षणे।

[३१]यज्ञाधानेऽखिलर्क्षेषु [३२]वारेषु क्षौरमिष्टदम्।।१२।।

[३३]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

चौलाध्यायः सप्तविंशतिः।। ।। २७।।

---

(२५)व.१.२-यत्, व.३,क.-तत्। (२६)व.१-विध्य।

(२७)व.१-न च। (२८)व.१-(लोपः)भ्यक्ते। (२९)पु.-क्षौरे।

(३०)व.१-नृपविप्रा, व.२-नृपभूपा। (३१)क.-अश्वायाने।

(३२)पु.-वारे, व.३,क.-वारोक्तं।

(३३)पु.-चौलाध्याय सप्तविंशतिः।।,

क.-इति चौलाध्यायः सप्तविंशतिः।।,

व.१-इति क्षौरचौलाध्यायः सप्तविंशः।।,

व.३-इति चौलाध्यायः सप्तविंशतिमः।।

## ।। अष्टविंशतितमोऽध्यायः ।।

## ।। उपनयनाध्यायः ।।

अथातः सम्प्रवक्ष्यामि [१]चोप[२]नायनमुत्तमम्।
द्विजत्वकार[३]णं श्रौतस्मार्तकर्म[४]प्रसाधनम्।।१।।
आद्यं सर्वाश्रमाणां च देह[५]संस्कारकारणम्।
अनेन कर्म[६]णा [७]सर्वे संस्कृताः पूर्वदेहिनः।।२।।
[८]तत्संस्कारं लग्नवशात्तस्माल्लग्नं प्रवच्मि तत्।
[९]गर्भेऽष्टमेऽ[१०]ब्दे विप्राणां जन्म[११]तो वा म[१२]हीभुजाम्।।३।।
एकादशे [१३]तु वैश्यानां द्वादशे व्रतबन्धनम्।
ब्रह्मचर्यसकामि[१४]त्वे जन्मतः पञ्चमे समे।।४।।

---

(१)व.१–ह्यौ। (२)पु.–न। (३)व.३,क.–णं। (४)व.१–प्रदायनम्।

(५)क.–संस्कारणं तथा। (६)पु.–णां। (७)पु.–सर्व।

(८)व.१–ससंस्कारो।

(९)व.२.३,क.–गर्भा। (१०)व.१–ष्टे। (११)व.३–नो।

(१२)व.३,पु.–हा।

(१३)क.–न। (१४)व.१–स्य।

।। उपनयनाध्यायः।।                (अध्यायः२८)

[१५]विप्रानुपूर्वतः कार्य[१६]मष्टमे नवमे [१७]तथा।
गुरौ भृगौ [१८]वा [१९]शाखेशे [२०]नास्तगे वृद्धशैशवे।।५।।
जीवशुक्रकुजज्ञाश्च ऋग्वेदा[२१]द्यधिपाः क्रमात्।[२२]
सौम्यायनेऽतिश[२३]स्तं तच्चैत्रे [२४]मीनस्थिते [२५]रवौ।।६।।
जन्मान्त्यनिधनस्थेऽपि [२६]पूजायां शुभदो गुरुः।
उक्तेऽब्दे [२७]चेदनुक्तेऽ[२८]ब्दे न शस्तो बलवानपि।।७।।
[२९]ऋतौ वस[३०]न्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथ।
विशां मुख्यं च सर्वेषां द्विजानां [३१]चोपनायनम्।।८।।

---

(१५)पु.–नुमतः। (१६)व.२–अष्टमे, पु.,व.३–सप्तमे। (१७)व.१–थवा।
(१८)व.१–न। (१९)व.१–शाखंरे। (२०)व.१–अस्तगे। (२१)पु.–द्या।
(२२)व.१–(लोपः)श्लोकः क्र.–६ब तः श्लोकः क्र.–७क पर्यन्तम्।
(२३)क.–स्ते। (२४)पु.–मान। (२५)पु.–रतौ। (२६)व.३,क.–पूजया।
(२७)व.३–चेंदु, व.१–पद। (२८)व.१.३,क.–तु। (२९)पु.–ऋतु।
(३०)पु.–न्तो। (३१)व.१–उप।

साधार[३२]णं च [३३]मासेषु माघादिषु च [३४]पञ्चसु।
प्रश[३५]स्तं शुक्लपक्षेऽपि [३६]कृष्णे प्रतिपदादिषु।।९।।
चतु[३७]र्थीं सम्परित्यज्य दिवसेषु च पञ्चसु।
द्वितीया च तृतीया च पञ्चमी [३८]सप्तमी तथा।।१०।।
[३९]त्रयोदशी च दशमी प्रश[४०]स्तास्तिथयो व्रते।
द्वादश्येकादशी षष्ठी [४१]कृष्णेऽप्युक्ता[४२] च मध्यमा[४३]।।११।।
मैत्रे [४४]विष्णुत्रये [४५]हस्ते त्रयर्क्षे[४६]षूत्तरात्रये।
धातृद्वयादितीज्यान्त्यदस्रर्क्षे[४७]षूत्तमं व्रतम्।।१२।।

---

(३२)व.१-णो। (३३)व.१-सर्वेषां। (३४)व.१-पञ्चपञ्चसु।

(३५)क.-स्ते। (३६)व.१-कृष्ण। (३७)पु.-र्था। (३८)व.२-द्वादशी।
(३९)व.२-एकादशी। (४०)पु.-स्ता ति।

(४१)व.१.२-शुक्लपक्षेऽपि। (४२)क.-क्ताश्च।

(४३)पु.-माः। (४४)व.१-हस्वत्रये।

(४५)व.१-विष्णु। (४६)पु.-षु भरात्रये, व.१-उद्रारात्रये।

(४७)व.१-व्रतबन्धनम्।

[४८]वैनाशिकादि ऋक्षेषु न कार्यं मङ्ग[४९]लं क्वचित्।
प्रशस्ता वास[५०]रा सौ[५१]म्यकाव्यदेवेन्द्रमन्त्रिणाम्।।१३।।
विज्ञेयौ वासरौ तत्र मध्यमौ चन्द्रसूर्ययोः।
त्रिभज्या[५२]ङ्कप्रमाणं [५३]यत्त[५४]त्राद्यं[५५]शे च [५६]दैविकम्।।१४।।
द्वितीये मानुषं कार्यं तृती[५७]यांशे [५८]च पैतृकम्।
अनुक्तव[५९]र्षे काले वा चोपनीतो विनश्यति।।१५।।
तिथिवासरधिष्ण्येषु दरिद्रो दुःखि[६०]तः शिशुः।
शाखाधिपबलं तस्य [६१]वारो लग्नं नवांशकः।।१६।।

---

(४८)पु.-वेना। (४९)क.-ले। (५०)व.३-राः। (५१)व.१-म्या।

(५२)व.२-हः, व.३,क.-ह्नः। (५३)व.१-वत्।

(५४)व.१-त्रिधाद्यां, व.२-यत्र त्राद्यं। (५५)व.२-शे च, व.१-सेचर।

(५६)व.१-देविकम्, व.२-दैविकं। (५७)क.-यें। (५८)व.३-तु।

(५९)व.३-र्ष।

(६०)पु.-त। (६१)व.१-वारौ लग्नै।

[६२]यतस्तु दुर्लभं [६३]तत्र [६४]व्रती विद्याधनान्वितः।
शाखेशे वा गुरौ शुक्रे [६५]नीचस्थे वा तदंशके।।१७।।
तत्रोपनी[६६]त[६७]श्च शिशु[६८]र्वेदशास्त्रविवर्जितः।
[६९]शुक्रे गुरौ वा शाखेशे रिपुराश्यं[७०]शगे सति।।१८।।
तत्रोपनीत[७१]श्च शिशुः कलाखिलविवर्जितः।
साक्षान्नीचस्थिते [७२]पापे यदि शत्रुगृहं गते।।१९।।
[७३]जीवे भृगौ वा शाखेशे महापातककृद् भवेत्।
स्वतुङ्गस्थे तदंशे वा स्वर्क्षगे वा तदंशगे।।२०।।

---

(६२)व.३–एतत्सु। (६३)पु.–तच्च। (६४)पु.–व्रती। (६५)व.१–नावस्थे।

(६६)व.३,क.–तः। (६७)व.३–स। (६८)व.१–श्चेद् वेदशास्त्राविशारदः।

(६९)व.२–गुरौ भृगौ वा। (७०)व.१–गते।

(७१)पु.–स शिशुः, व.१–न शिशुः।

(७२)व.१.२–वास्य अधिशत्रौ गृहांशके। (७३)व.२–शुक्रे गुरौ।

[७४]गुरौ भृगौ वा शाखेशे वेदशास्त्रविशारदः।

[७५]परमोच्चगते जीवे शाखेशे वा भृगोः सुते।।२१।।

उपनीतो धनाढ्यश्च वेदशास्त्रविशारदः।

मित्रराश्यङ्गते [७६]जीवे शाखेशे [७७]वा तथा सिते।।२२।।

[७८]व्रती [७९]शिशुः [८०]कलाभिज्ञो वेदवेदाङ्गपारगः।

[८१]स्वाधिमित्र[८२]गृहस्थो वा तस्योच्चस्थे तदंशके।।२३।।

गुरौ भृगौ वा शाखेशे वेदशास्त्रार्थपारगः।

[८३-८४]जीवे काव्येऽथवा यस्य मौञ्जीबन्धन[८५]लग्नगे।।२४।।

---

(७४)व.१-(समाक्षरलोपः)श्लोकः क्र.-२१क तः श्लोकः क्र.-२३ब।

(७५)पु.-(पुनरोक्तिः)श्लोकः क्र-२१क तः श्लोकः क्र.-२२ब।

(७६)व.१-शुक्रे। (७७)व.१-ज्ये तदंशके। (७८)व.३-व्रतः।

(७९)पु.-शुचिः। (८०)पु.-कर्माभिज्ञो।

(८१)व.३-स्वाधि, क.-स्वधि, व.१-अधि।

(८२)व.३,क.-गृहस्थे।

(८३)व.१-(समाक्षरलोपः)श्लो.क्र.-२४क तः श्लो.क्र.-२६ड।

(८४)व.३-जीवः काव्यो। (८५)व.३-लग्नगः।

तस्य विद्या प्रभूता [८६]स्याद् विवाह[८७]स्त्वचिराद् भवेत्।

यस्योपनयने लग्नसंस्थौ शुक्रबृहस्पती।।२५।।

[८८]सा विद्या तस्य निःसीमा बुद्धिश्चापि धनं [८९]यदि।

शुभग्रहांश[९०]गे चन्द्रे विद्यावा[९१]न्धनवान्व्रती।।२६।।

तस्मिन्पापांश[९२]संस्थेऽपि [९३]निधनेऽखिलदुःखभाक्।

[९४]स्वांशसंस्थे निशानाथे [९५]दरिद्रोऽखिल[९६]दुर्भगः।

न तथादिति[९७]विष्ण्वर्क्ष[९८]कर्कटांशे धनी सुखी।।२७।।

---

(८६)पु.–सा। (८७)पु.–हम्। (८८)व.३–सद्। (८९)व.१–महत्।

(९०)व.१–गतेऽस्मिन्। (९१)व.३–(लोपः)धनवान्।

(९२)पु.–संस्थापि,व.३–संस्थे हि। (९३)व.१.३,क.–निर्धनो।

(९४)पु.–स्वांशस्थे। (९५)व.१–दरिद्रे। (९६)पु.–दुर्भयः, व.१–दुर्नयः।

(९७)व.३–प्लक्ष्र्ष। (९८)व.१.२–कर्कटांशस्थे, क.–कर्कांशस्थ।

[९९]नियतानध्यायदिनं [१००]पापांशगे विधुव्रते।

सततं वर्जये[१०१]द्विद्याधनारोग्यपरो द्विजः।।२८।।

[१०२]लग्नेऽथ राशयः सर्वाः शुभेक्षितयुताः शुभाः।।२९।।

नवांशा न तथा [१०३]सौम्य[१०४]गृहास्तेषु गुणो[१०५]त्कटाः।

अपि सौम्येक्षितयुतः कर्कटांशोऽत्र न क्वचित्।।३०।।

महादोषान्परित्यज्य दोषाल्पत्वे गुणाधिके।

पञ्चङ्गशुद्धिदिवसे चन्द्रताराबलान्विते।।३१।।

[१०६]इष्टं चन्द्रेज्यसूर्याद्यैः पञ्चभिर्बल[१०७]संयुतैः।

चतुर्भिवा ग्रहैर्लग्ने नैधने शुद्धिसंयुते।।३२।।

---

(९९)व.२–नियतोनाध्यादिनं, व.१–नायतोनार्यपदिनं, पु.–नियताध्ययनदिनं।

(१००)व.२–पापांशे, व.१–पापांशे च विवर्जयेत, पु.–पापांश विधुव्रते।

(१०१)व.२–द्विद्वन्। (१०२)पु.–लग्नोप, व.१–लग्नाद्या।

(१०३)व.१–सौम्याः।

(१०४)व.१–गृहांशेषु। (१०५)व.१–कटाम्।

(१०६)पु.–दृष्टे च, व.१–इष्टौ। (१०७)पु.–संयुते।

त्रिकोणकेन्द्रस्वत्र्या[१०८]यशुभैस्त्र्या[१०९]यारिगैः परैः।

[११०]लग्नषष्टाष्टवान्त्येन चन्द्रेण व्रतमीरितम्।।३३।।

वर्धमानोऽपि वा चन्द्रः पूर्णो वा यदि तुङ्ग[१११]गः।

निस्वं करोति व्रतिनं लग्न[११२]गः क्षयरोगिणम्।।३४।।

व्रतबन्धनलग्ना[११३]त्तु केन्द्र[११४]गे यदि भास्क[११५]रे।

[११६]स्फूजितोऽयं महादोषः करोति कुलनाशनम्।।३५।।

[११७]कुजश्चेत्कुपितो दोषः शिष्याचार्यविनाशनम्।

मन्दे तु [११८]रुधिरो दोषः करोति [११९]महदापदम्।।३६।।[१२०]

---

(१०८)व.२-यै, व.३-ये। (१०९)पु.-य।

(११०)व.१-लग्नादष्टान्त्य वा होन, व.३,क.-लग्नषष्टान्त्यबाह्येन।

(१११)व.१-गे। (११२)पु.-ग। (११३)व.३-म्बु। (११४)व.१-गो।

(११५)व.१-रः। (११६)व.३-कूजितो, पु.-कुपितो, क.-कथितोऽयं।

(११७)व.२-कुष्माश्चेत। (११८)व.२-रुदिता।

(११९)व.२-महती शदाम्, क.-महती सदा, पु.-महानी गदः।

(१२०)व.१-(समाक्षर लोपः)श्लोकः क्र.३६ड तः श्लोकः क्र.३७अ।

राहौ रन्ध्राह्वयो दोषः शिशोर्मातृविनाश[१२१]नम्।
केतौ के[१२२]न्द्रे तूग्रदोषो विद्या[१२३]वित्तविनाश[१२४]नम्।
सम्यग्बलाबलं [१२५]चिन्त्य वदेद् दोषनिरूपणम्।।३७।।
एकस्मिन्केन्द्रगे जीवे शुक्रे वा पापकेन्द्र[१२६]जाः।
[१२७]दोषा विनाशमायान्ति पापं भागीरथीजलैः।।३८।।
मित्रराशिगते जीवे शुक्रे वा केन्द्रगे बुधे।
[१२८]दोषा नश्यन्ति पाताद्याः प्राणायामेन पातकान्।।३९।।
अधिमित्रनवांशस्थे शाखा[१२९]धीशे त्रिकोणगे।
दोषा विनाशमायान्ति ग्रीष्मे कुसरितो यथा।।४०।।
यत्रैकादशगः सूर्यश्चन्द्रो वा [१३०]मित्रराशिगः।
हन्ति लग्नोद्भवं दोषं पूतनामिव केशवः।।४१।।

---

(१२१)व.१-नः। (१२२)व.१-न्द्रगते। (१२३)पु.-चित्त।
(१२४)व.१-कः।

(१२५)व.१-वीक्ष्य। (१२६)व.३-जः, व.१-जे। (१२७)व.२,पु.-दोषं।

(१२८)व.१-(समाक्षरलोपः)श्लोकः क्र.-४०अ तः श्लोकः क्र.-४२अ।

(१२९)व.३-पापाद्या। (१३०)व.१-मृत्युराशिगः।

[१३१]अ[१३२]धिमित्रर्क्षगः सूर्यः चन्द्रो [१३३]वापि गुणस्य च।।४२।।[१३४]

---

(१३१)व.२-(अधिकम्) यत्रैकादशगः सूर्यः चन्द्रो वा यदि लग्नगः।

(१३२)व.१-अपि, व.२-अति।

(१३३)व.१-यदि लाभगः, व.३-वापि गुणाय च।

(१३४)व.१.२-(अधिकम्)

हन्ति दोषचयं यद्वत्पापसङ्घं स्मृतिर्हरेः।
त्रिषष्ठालाभगो भौमः शनिर्वा यदि तुङ्गगः।।
सर्वदोषा क्षयं यान्ति पापं पञ्चाक्षरी यथा।
स्वाधिमित्रगतौ भौमः शनिर्वा यदि लाभगः।।
निहन्ति दोषचयं सर्वे पिनाकी त्रिपुरं यथा।
लग्नात्रिषष्ठगः सूर्यस्तुङ्गस्थो वा भवेद्यदि।।
नाशयत्यखिलान्दोषान् स्वोदये तिमिरं यथा।
केन्द्रत्रिकोणगः सौम्यो त्रिराश्यंशगो यदि।।
पापकेन्द्रवतं दोषं हन्तीभान्केसरी यथा।।

## ।। उपनयनाध्यायः।।  (अध्यायः२८)

[१३५]एकदोषो गुणा लक्षं हन्ति तद् बाधको गुणः।

[१३६]नास्ति चेत्पाव[१३७]नं पञ्च[१३८]गव्यं मद्यलवो यथा।।४३।।

[१३९]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहिताया–मुपनयनाध्यायोऽष्टाविंशतितमः।। ।। २८।।

---

(१३५)व.३,क.–एको। (१३६)व.१–नापि। (१३७)व.३–न।

(१३८)व.३–गव्य।

(१३९)पु., व.२–उपनयनाध्यायोष्टाविंशतिः।,

व.१–इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितामुपनयनाध्यायोष्टाविंशः।।,

व.३–इति उपनयनाध्यायोष्टाविंशतिमः।।,

क.–इत्युपनयनाध्यायोष्टाविंशतिः।।

## ।। एकोनत्रिंशतितमोऽध्यायः ।।

## ।। समावर्तनाध्यायः ।।

अथातः सम्प्रवक्ष्यामि समावर्तन[१]मुण्डनम्।

गुर्वनुज्ञा[२]तशिष्याणां द्विजानां नियतात्मनाम्।।१ ।।

सौम्यायने [३]देवपूज्यशुक्रयोर्दृश्यमानयोः।

चैत्रमासविवर्ज्येषु माघादिषु च पञ्चसु।।२ ।।

अष्ट[४]मीं नव[५]मीं रिक्तां मासाद्या[६]मवमां तिथिम्।

हित्वान्यदिवसे जीवसौम्यभार्गववासरे।।३ ।।

उत्तरात्रयमैत्रेज्यहरीन्द्वदितिधातृषु।

पौष्णादित्येषु ऋक्षेषु समावर्तनमीरितम्।।४ ।।

शास्त्रोक्तवार[७]धिष्ण्येषु यद्वा ल[८]ग्नांशगे शुभे।

सर्वेषु मङ्गलेष्वेवमङ्कुरार्पणमिष्यते।।५ ।।[९]

---

(१)व.१.३–मण्डनम् , व.२,क.–मण्डलम्। (२)व.३–तु।

(३)व.३–क.–दिने।

(४)व.३–मी। (५)व.३–मी। (६)पु.–मध्यमां।

(७)क.–ऋ। (८)व.३–ग्नं। (९)व.२–(लोपः)श्लोकः क्र.–५।

## ।। समावर्तनाध्यायः ।।    (अध्यायः २९)

पूर्वतो नवमे सप्तदिवसे पञ्चमेऽपि वा।

पञ्चाङ्गशुद्धिदिवसे [१०]बीजनक्षत्रसंयुते।।६।।[११]

सहमङ्गल[१२]घोषाद्यैर्विप्रपुण्याङ्गनादिभिः।

[१३]स्वग्रामात्प्रागुदग्भागे मृत्तिकानयनं [१४]शुभम्।।७।।

[१५]मृद्वैणवानि [१६]चापं च पात्राण्यत्र प्रकल्पयेत्।

ब्रह्मेन्द्र[१७]यमतोयेशशशि[१८]नं पात्रदेव[१९]ताः।।८।।

मृत्पूरितेषु पात्रेषु क्रमा[२०]दीशात्तमर्चयेत्।

ब्रह्माणं मध्यपात्रे च [२१]चतुर्दिक्षु प्रपूजयेत्।।९।।

---

(१०)व.२–वीत, क.–जी।

(११)व.३–(लोपः)श्लोकः क्र–६अ तः श्लोकः क्र.–७ब।

(१२)पु.–दो। (१३)व.२–स्वग्रामस्य। (१४)व.१–तथा।

(१५)क.–मृद्वेनवानि, व.२–मृद्वैणवर्तियं। (१६)पु.–पञ्च।

(१७)व.१–भौम। (१८)व.३–नः। (१९)व.३–ताम्।

(२०)व.१–देतान्प्रपूजयेत्, व.३,क.–दीशान्समर्चयेत्।

(२१)व.१–चतुर्दिश्विन्द्रपूर्वकान्।

## ।। समावर्तनाध्यायः ।।   (अध्यायः २९)

[२२]समन्त्रेण समभ्यर्च्य स्वस्तिवाचनपूर्वकम्।

[२३]जपिता [२४]इत्यनुवाकं जपेत्तद्बीजवापनम्।।१०।।

कर्त[२५]व्यं त्व[२६]खिलं त्वेतद्दिवा वा यदि वा निशि।

तत्सस्यवृ[२७]द्धिकतुणा[२८]मभिवृद्धिप्रसू[२९]चि[३०]का।।११।।

[३१]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

समावर्त्तनध्याय एकोनत्रिंशतिः।।   ।। २९।।

---

(२२)व.२-(लोपः)समन्त्रेण। (२३)व.२-जपित्वा, व.३-य जाता।

(२४)व.१-रभ्युनुवाकं, व.३-इत्यनुवाके। (२५)व.१-व्यम।

(२६)क.-नलं, व.३-लष्वेत्त। (२७)व.१-द्धिः। (२८)व.१-मायुर्वृ।

(२९)व.१-च। (३०)व.१,क.-काः।

(३१)पु., व.२-समावर्त्तनध्यायएकोनत्रिंशतिः।।,

व.१-इति कश्यपसंहितायां समावर्त्तनध्यायः एकोनत्रिंशः।।,

क.-इति समावर्त्तनध्यायः एकोनत्रिंशः।।,

व.३-इति समावर्त्तनध्यायः एकोनत्रिंशमः।।

## ।। त्रिंशतितमोऽध्यायः ।।

## ।। प्रश्नलक्षणाध्यायः ।।

अथातः सम्प्रवक्ष्यामि गृहस्थाश्रममुत्तमम्।

यदाधारस्त्वाश्रमाणां भूतानां प्राणिनां तथा।।१।।

[१]ऋणत्रयच्छेदकारि धर्मकामार्थसिद्धिदम्।

एतत्सर्वं स्थितं स्त्रीषु शीलवृत्तान्वितासु च।।२।।

तच्छील[२]लब्धिवृत्तिस्तु [३]सुलग्नवशतो भवेत्।

तस्मात्सम्यग्लग्नशु[४]द्धिं प्रवक्ष्यामि समासतः।।३।।

पञ्चाङ्गशुद्धिदिवसे सुवासीनं सुचे[५]ष्टितम्।

[६]भक्त्या प्रणम्य [७]दैवज्ञं पृच्छेद्दैवं यथा तथा।।४।।

ताम्बूलफलपुष्पाद्यैः [८]पूर्णाञ्जलिमुपागतः।

दम्पत्योर्जन्मभं राशिं तस्मै कर्ता निवेदयेत्।।५।।

---

(१)व.२-रिण। (२)व.३,क.-वृत्तलन्धिस्तु, व.१-वृद्धिः लब्धिस्तु।

(३)पु.- सुलग्ने च ततो, व.१-सुलग्नवशतः खलु। (४)क.-द्धिः।

(५)व.१-तसम्। (६)व.३-पृच्छेदेवं। (७)व.२-मृक्षदेव।

(८)व.१-संयूज्य प्रयतः शुचिः।

[९]चन्द्रः षष्ठाष्टमग[१०]तो बलवा[११]न्पृच्छकोदयात्।
[१२]वेदाष्टमाब्दाद्दम्पत्योर्मरणं प(स)द्यसंशय[१३]म्।।६।।
एको लग्नगतः पापः पापोऽन्यः सप्तराशिगः।
आसप्तमाब्दान्मरणं पुरुषस्य न संशयः।।७।।
यदि चन्द्रो लग्नगतस्तस्मात्सप्तगतः कुजः।
विवाहतस्त्वष्टमाब्दात्कुरुते [१४]निधनं पतेः।।८।।
स्वनीचगः शत्रुदृष्टः पापः पञ्चमगो [१५]यदा।
[१६]मृत[१७]पुत्रां करोत्येव [१८]कुलटां वा न संशयः।।९।।
लग्नाद्दुश्चिक्यपुत्रा[१९]स्त[२०]कर्मलाभगतः शशी।
गुरुदृष्टस्तयोरेव [२१]सम्पदं कुरुते [२२]सदा।।१०।।

---

(९)व.१-चन्द्रे। (१०)व.१-ते। (११)व.१-वृश्चिकोदयात्।
(१२)व.१.२-चेद। (१३)व.१.२.३-यः। (१४)व.१-मरणं।
(१५)व.१.३-यदि। (१६)व.२-मृत्यु।
(१७)व.१-पुत्रं। (१८)पु.-कुलटा, व.१-कुलटानां। (१९)व.२-य।
(२०)व.१-धर्म। (२१)व.१-सम्बन्ध, पु.-सम्पदां। (२२)व.१-तथा।

लग्न[२३]स्थाश्चन्द्रशुक्राभ्यां वीक्षि[२४]ताः संयुताश्च वा।
कुर्वन्ति कन्यकालाभं यदि गो[२५]घटकर्कटाः।।११।।[२६]

युग्मराश्यंशकगतौ शुक्रेन्दुबलिनौ यथा।
स्थितौ [२७]यदि [२८]तु तौ लग्ने सम्बन्धं कुरुतस्तदा।।१२।।

युग्मराश्यंशगे लग्ने स्त्रीद्रेष्काणे [२९]यदा सति।
वीक्षि[३०]ते शशिशुक्राभ्यां कन्यालाभस्तदा भवेत्।।१३।।

[३१]वरलब्धि[३२]रपि स्त्रीणां पुंलग्ने पुंनवांशके।
पुंग्रहैर्वीक्षितयुते पुंद्रे[३३]क्काणे भवेत्तदा।।१४।।

कृष्णपक्षे शशी लग्नाद्युग्मराशिगतो यदि।
पापदृष्टो न सम्बन्धं करोत्येवा[३४]रिरन्ध्रगः।।१५।।

---

(२३)पु.-स्थ, व.३-स्थां। (२४)व.३-तां। (२५)क.-धन।
(२६)व.१-(लोपः)श्लोकः क्र.-११ तः श्लोकः क्र.-१२।
(२७)व.३-युतौ। (२८)व.३-युग्म। (२९)व.१-तथा।
(३०)व.३-त। (३१)पु.-ध। (३२)व.१-पर।
(३३)व.२.३,क.-ष्का। (३४)व.१-पि केन्द्रगः।

[३५]तथा निमित्तशकुनैर्मङ्गलैर्मङ्गलं भवेत्।

तस्मिन्नमङ्गलै[३६]र्दृष्टो दम्पत्यो[३७]र्निधनं भवेत्।।१६।।

[३८]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां प्रश्नलक्षणं त्रिंशोऽध्यायः।। ।। ३०।।

---

(३५)व.१–वृत्ता। (३६)क.–ष्टैर्, व.३–ष्टे। (३७)व.१–मरणं।

(३८)पु.,व.२–प्रश्नलक्षणं त्रिंशोऽध्यायः।।,

व.१–इति कश्यपसंहितायां प्रश्नाध्यायस्त्रिंशमः।।,

क.–इति प्रश्नलक्षणं त्रिंशोऽध्यायः।।,

व.३–इति प्रश्नलक्षण त्रिंशोऽध्यायः।।

## ।। एकत्रिंशतितमोऽध्यायः ।।

## ।। कन्याप्रदानाध्यायः ।।

अथातः सम्प्रवक्ष्यामि कन्यावरणमुत्तमम्।

सम्यक् तस्याः [१]प्रदानं च पुत्रपौत्र[२]प्रवर्धनम्।।१।।

पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते।

विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे।।२।।

मासा[३]द्यदिवसं रिक्तामष्टमीं नवमीं तिथिम्।

त्यक्त्वान्यदिवसे गन्ध[४]स्रक्ताम्बुलैः फला[५]न्वितैः।।३।।

सहवृद्धद्विजगणो वरयेत्कन्यकां सतीम्।

तथेति तत्पिता [६]कन्यां वरणोक्त[७]र्क्षवासरे।।४।।

कुर्यात्प्रदानं कन्यायाः स्वस्तिवाचनपूर्वकम्।

कुलशील[८]गुणोपेतसुरूपाय वराय च।।५।।

---

(१)पु.-प्रधानं। (२)व.३,क.-वि, व.१-धनप्रदम्। (३)व.१-दि।

(४)व.१-सत्ता, व.२-सुक्ता। (५)व.३-क्षतैः। (६)पु.-कन्या।

(७)पु.-(लोपः)वरणो। (८) पु.,व.१-गुणोपेता, व.२-वयोपेते।

## ।। कन्याप्रदानाध्यायः ।।          (अध्यायः ३१)

ततस्तस्मै   कन्यकायै   शुक्लाम्बरविभूष[९]णाम्।

[१०]दद्यान्मङ्गलघोषैश्च   विप्राशीर्वचनैः  सह।।६।।

आदौ  कृत्वा  [११]शचीपूजां  पश्चात्सर्वं  समाचरेत्।

[१२]सुवर्णवर्णकञ्जाक्षीं   दिव्यस्रग्वस्त्रशोभिताम्।।७।।

सर्वलक्षणसंयुक्तां   सर्वाभरणभूषिताम्।

[१३]अनर्घमणिमालाभिर्भासयन्तीं   [१४]दिगन्तरम्।।८।।

विलासिनी[१५]सहस्रेण   सेव्यमानामहर्निशम्।

ध्यात्वा   प्रणम्य  तां  देवीं  [१६]कुमारी  प्रार्थयेदिति।।९।।

---

(९)व.३–णम्। (१०)व.२–महन्। (११)पु.–शशी।

(१२)पु.–सुवर्णवनकञ्जाक्षी, क.–सुवर्णवणास्वञ्जाक्षीं,

व.१–स्वर्णवणां पङ्कजाक्षीं, व.३–सुवर्णवर्णां स्वञ्जाक्षीं।

(१३)व.३–अनघ्य। (१४)पु.,व.१.३–दिगम्बराम्, क.–दिगम्बरम्।

(१५)क.–सहस्राभिः। (१६)व.१,क.–कुमारीं।

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि।

विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे।।१०।।

[१७]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां

कन्याप्रदानमेकत्रिंशोऽध्यायः।। ।। ३१।।

---

(१७)पु.,व.२-कन्याप्रदानमेकत्रिंशोऽध्यायः।।,

व.१-इति कुमारीवरणाध्यायः।।,

व.३-इति कन्याप्रदानमेकत्रिंशोऽध्यायः।।,

क.-इति वरणाध्यायो एकत्रिंशोऽध्यायः।।

## ।। द्वात्रिंशतितमोऽध्यायः ।।

## ।। एकविंशतिदोषनिरूपणम् ।।

विवाहो जन्मतः स्त्रीणां युग्मेऽब्दे पुत्रपौत्रदः।

अयुग्मे श्रीपदः पुंसां विपरीते तु मृत्युदः।।१।।

उत्तरायणगे सूर्ये [१]मीने [२]चैत्रे [३]च वर्जयेत्।

अजगो[४]द्वन्द्वकुम्भालिमृगराशिगते रवौ।।२।।

[५]मुख्यं कर[६]ग्रहं त्वन्यराशिगे न कदाचन।

[७]शुक्रे तपस्ये [८]तपसि माधवे च करग्र[९]हम्।।३।।

[१०]प्रशस्तं [११]मध्यमं ज्ञेयं सहमासोर्जमासयोः।

आरभ्या[१२]र्द्धोदये भानोर्नवर्क्षेषु न कारयेत्।।४।।

---

(१)व.३-मीन। (२)पु.-चैत्रं। (३)व.१-विवर्जयेत्। (४)व.१-युग्मे।

(५)व.१-मुख्य। (६)व.१-ग्रहः प्रोक्तोरुषगे। (७)व.१.२.-शुक्ले।

(८)व.२-माघे च। (९)व.१-ग्रहः। (१०)व.१-प्रशतो।

(११)व.१-मध्यमो ज्ञेयः। (१२)व.१-र्द्धोर्दयाद्।

## ।। एकविंशतिदोषनिरूपणम्।।   (अध्यायः ३२)

सुरस्थापनमुद्वाहं यज्ञोपनयनं क्वचित्।

न कुर्यान्मङ्गलं तावन्निद्रां त्यजति केशवः।।५।।

[१३]प्रबोधे दिवसे विष्णोर्नोत्सवान्तरमाचरेत्।

[१४]नास्तगे च सिते जीवे न तयोर्बालवृद्धयोः।।६।।[१५]

न गुरौ सिंहगे नार्के चापराशिगतेऽपि [१६]वा।

प्राक्पश्चादुदितः शुक्रो बालस्त्रि दशवासरम्।।७।।

पक्षं पञ्चदिनं वृद्धो गुरुः पक्षं तु सर्वतः।

वृद्धशुक्रः स्त्रियं हन्ति [१७]वृद्धो जीवस्तु तत्पतिम्।।८।।

[१८]अस्तगौ तौ तयोर्मृत्युप्रदावखिलमङ्गले।[१९]

वृद्धश्चन्द्रः स्त्रियं हन्ति पतिं हन्त्यस्तमागतः।।९।।

---

(१३)पु.,व.३-प्रसुप्त। (१४)व.१-नास्तमे।

(१५)पु.-७००(इतः पर्यन्तं श्लोकः संख्या)। (१६)पु.-च।

(१७)पु.-पतिं हन्त्यस्तमागतः। (१८)पु.-(लोपः)श्लोकः क्र.-१०।

(१९)व.१-(अधिकम्) बालो जीवः स्त्रियं हन्ति बालः शुक्रः पतिं हरेत्।

## ।। एकविंशतिदोषनिरूपणम्।। (अध्यायः३२)

यतस्त्वमृतरश्मित्वाद्बालोऽपि शुभदः शशी।

जन्म[२०]मासर्क्षतिथिषु क्षणेंऽशे न करग्रहम्।।१०।।

न विवाहस्त्वाद्य [२१]गर्भं पुत्र[२२]पुत्र्योस्तयो[२३]र्मृतिः।

[२४]एको ज्येष्ठस्तयोर्मध्ये [२५]ज्येष्ठमासे [२६]शुभप्रदः।।११।।

सर्वग्रासे तु सप्ताहमुत्पातग्रहणा[२७]त्परे।[२८]

वर्जयेत्त्रिदिनं खण्डे तं नक्षत्रमृतुत्रये।।१२।।

---

(२०)पु.–मासर्क्षादिषु, व.१–मासर्क्षतिथिषु करणांशे न,

व.२–मासर्क्षदिवासक्षणेंशे।

(२१)व.१.३–गर्भ, क.–गर्भः। (२२)पु.–पुत्री। (२३)व.१–र्मिथः।

(२४)पु.–एकं। (२५)पु.–ज्येष्ठे। (२६)व.१–तु कारयेत्।

(२७)व.१–त्परः।

(२८)व.३–(अधिकम्) पराशरः–

ज्येष्ठकन्यका यत्र ज्येष्ठपुत्रो वरो यदि।

व्यत्ययो वा तयोस्तत्र ज्येष्ठमासे शुभप्रदः।।

## ।। एकविंशतिदोषनिरूपणम्।।       (अध्यायः३२)

ग्रस्तोद[२९]यपरो दोषो ग्रस्तास्तेर्वा शशी[३०]नयोः।

[३१]द्युनिशो[३२]ऽर्धे तूभयं तद्[३३]खण्डाखण्डव्यवस्थ[३४]योः।।१३।।

विद्यमाने बले [३५]कार्यं विवाहं गुरुसूर्ययोः।

अविद्यमाने दम्पत्योः पूजां कृत्वा तयोरपि।।१४।।

गोचरं वेधजं चाष्टवर्गजं त्रिविधं बलम्।

[३६]तेषु सर्वेषु विज्ञेयं प्रधानं चाष्टवर्गजम्।।१५।।

तिथिरेकगुणो वारो द्वि[३७]गुणो तारकात्ततः।

[३८]तस्मात्तु बलवान्योगः करणं बलवत्ततः।।१६।।

---

(२९)व.१.३–ये। (३०)व.१,क.–तयोः।

(३१)व.१–न निशा च भूभयतः।

(३२)क.–र्द्धं। (३३)व.२–खण्डा, व.३–खण्डि। (३४)व.१–या।

(३५)व.१–कार्यो विवाहो। (३६)व.१–एषु।

(३७)व.१.३–गुणास्तारका।

(३८)व.३,क.–तयास्तु।

## ।। एकविंशतिदोषनिरूपणम्।।    (अध्याय:३२)

तस्मान्मुहूर्त्तो बलवां[३९]स्ततो लग्नं बलाधिकम्।

होरा [४०]बलवती लग्नाद् देक्काणो बलवांस्तत:।।१७।।

ततो नवांशो बलवान् द्वादशांशस्ततो बली।

सर्वेभ्य [४१]एभ्यस्त्रिंशद्भाग [४२]एव बलाधिक:।।१८।।

[४३]एतत्समस्तं सञ्चिन्त्य चन्द्रताराबलान्वि[४४]ते।

पञ्चाङ्गशुद्धिदिवसे महादोषविवर्जिते।।१९।।

अकालवृष्टिनीहारमेघध्वनिविवर्जिते।

[४५]स्वाल्पदोषं गुणाधिक्यं लग्नं तच्छुभदं स्मृतम्।।२०।।[४६]

---

(३९)व.२-(लोप:) श्लोक: क्र.१७ब त: श्लोक: क्र.१८ब।

(४०)पु.-बलवान्विज्ञाद्। (४१)व.१-एतेभ्यश्चापि त्रिशद्भागो।

(४२)व.३-उक्त।

(४३)व.१-बलं। (४४)व.१-तम्।

(४५)व.१-स्वल्पास्वदोषसंयुक्ता गुणवत्तबलान्विते।

(४६)व.१-(लोप:) श्लोक: क्र.-२१ एवं श्लोक: क्र.-२२।

## ।। एकविंशतिदोषनिरूपणम्।।        (अध्यायः३२)

[४७]लग्नाद्या राशयः सर्वे शुभेक्षित[४८]शुभैर्युताः।

जामित्रशुद्धिसंयुक्तं शत्रुत्वं चेष्टितं [४९]बुधः।।२१।।

यस्य राशेर्ग्रहाः पञ्च [५०]दृष्टा ज्ञेज्ये [५१]द्विनादयः।

[५२]तं लग्नं शुभदं ज्ञेयं चत्वारो वा बलान्वि[५३]ताः।।२२।।

अस्तगाः शत्रुराशिस्थाः स्वनीचस्थाश्च ये ग्रहाः।

न शक्ताः स्वफलं दातुं लग्ने युद्धपराजिताः।।२३।।

आद्यः पञ्चाङ्गदोषश्च द्वितीयः सूर्यसङ्क्रमः।

[५४]सङ्ग्रहः कर्तरीदोषश्चन्द्रः [५५]षष्टाष्टरिःफगः।।२४।।

---

(४७)पु.–लग्नाय। (४८)व.२.३,क.–युताशुभाः।

(४९)पु.–बुधाः। (५०)क.–रष्टा। (५१)व.१–द्विवादयः।

(५२)व.२.३,क.–तल्लग्नं।

(५३)पु.–तम्। (५४)व.१,क.–सग्रहः।

(५५)क.–षष्टाव्ययमृत्युगः, व.३–षष्टान्त्यमृत्युगः।

## ।। एकविंशतिदोषनिरूपणम्।।      (अध्यायः३२)

गण्डान्तः पापषड्वर्गो भृगुः षट्कं कुजाष्टकम्।

उदयास्तांशयोः [५६]शुद्धिरहितो दुर्मुहूर्तजः।।२५।।

दम्पत्योरष्टमं लग्नं राशेर्विषघटी [५७]भवेत्।

कुनवांशो वारदोषः खार्जूरिकसमाङ्घ्रि[५८]जः।।२६।।

ग्रहणोत्पात[५९]भं [६०]क्रूरं विद्ध[६१]र्क्षं क्रूरसंयुतम्।

अकालगर्जितं वृष्टिर्महापातः सवैधृतिः।

महादोषा अमी [६२]चैषां कालं वक्ष्ये पृथक् पृथक्।।२७।।

पञ्चाङ्गशुद्धिः शुद्धीनां गुणानामाद्यकारणम्।

चित्तशुद्धिर्यथा नृणां श्रेष्ठा [६३]शस्ता गुणाधिका।।२८।।

---

(५६)व.१-शुद्धिः रतोदुष्टमुहूर्तज। (५७)व.३-तथा।

(५८)व.३-जम्।

(५९)व.१-सं, व.२-नं। (६०)व.२.३-क्रूर।

(६१)पु.-र्क्षे।

(६२)क.-चैव।

(६३)पु.-शक्ता, व.१-सत्त्व।

## ।। एकविंशतिदोषनिरूपणम्।।  (अध्यायः३२)

पञ्चाङ्ग[६४] शुद्धिरहिते लग्नोत्क[६५]र्षो निरर्थ[६६]कः।।२९।।[६७]

प्राक् पश्चात्सूर्यसङ्क्रा[६८]न्ति[६९]र्नाड्यः षोडश षोडश।

त्याज्याः शोभनकार्येषु षडशीत्यां हरेः [७०]पदम्।।३०।।

यत्कृतं मङ्गलं तत्र नाशमायात्यसंशयम्।

[७१]चन्द्रे ग्रहेण संयुक्ते दोषः सङ्ग्रहसंज्ञकः।।३१।।

तस्मिन्सङ्ग्रहदोषेऽपि विवाहं नैव कारयेत्।

सूर्ये [७२]ण संयुतश्चन्द्रः [७३]सदा दारिद्र्यदुःखदः।।३२।।

---

(६४)पु.,क.–दोषदिवसे। (६५)व.३–र्षां, पु.–र्ष। (६६)पु.–काः।

(६७)व.१–(अधिकम्) पञ्चाङ्गशुद्धिदिवसे कृतं सर्वं तु शोभनम्।

पञ्चाङ्गदोषसहिते कृतं सर्वं विनश्यति।।

(६८)क.–न्ते। (६९)व.१.३,क.–र्नाड्य।

(७०)व.१.२.३–पदे।

(७१)पु.–चन्द्रो।

(७२)पु.–वा।

(७३)व.१–सापत्नं कुरुते सदा।

## ।। एकविंशतिदोषनिरूपणम्।। (अध्यायः ३२)

कुजेन [७४]मरणं व्याधिं करोति सहितः शशी।

सौम्येन सहितश्चन्द्रो दम्पत्यो[७५]रनपत्यता।।३३।।

सदा दौर्भाग्यदश्चन्द्रो गुरुणा यदि संयुतः।

शुक्रेण संयुतश्चन्द्रः सापत्नं कुरुते सदा।।३४।।

यदा सौरेण संयुक्तः प्रव्रज्यां कुरुते सदा।

सैंहिकेयेन संयुक्तः सततं कलहप्रदः।।३५।।

[७६]केतुना यदि संयुक्तस्त्वतुलं [७७]दुःखदः शशी।

पापद्वयेन संयुक्तो दम्पत्योर्निधनप्रदः।।३६।।

[७८]तुङ्गस्थो मित्रराशिस्थः शुभयुक्तः शुभप्रदः।

एवंविधः क्रूरयुतस्तत्र सम्पूर्णदः शशी।।३७।।

---

(७४)व.१–चरुजं। (७५)व.३,क.–र्निरपत्यताम्।

(७६)क.–(समाक्षरलोपः) श्लोकः क्र.–३६।

(७७)व.१–दोषदः।

(७८)पु.–तुङ्गस्थ।

तस्मात्सङ्ग्रहदो[७९]षोऽयं [८०]विवाहे परिवर्जयेत्।।३८।।

वक्रावक्रगयोर्लग्नाद् द्वितीयद्वादशस्थयोः।

[८१]असाध्वोः कर्तरी ज्ञेया त्वन्यथा नैव कर्तरी।

कर्तरी मृत्युदा क्रोधाद्दम्पत्यो[८२]र्गलकर्तरी।।३९।।

कर्तरीदोष[८३]संयुक्तं लग्नं सर्वगुणान्वितम्।

अपि [८४]सौम्यग्रहोपेतं त्याज्यं तद्दग्धकाष्ठवत्।।४०।।

चन्द्रस्य कर्तरी तद्वच्छुभ[८५]दृष्टा न दोषदा।

पापयोः कर्तरी [८६]कर्त्र्योर्नीचशत्रुग्रहा[८७]स्तयोः।।४१।।

द्वयोरस्तगयोर्वापि कर्तरी नैव [८८]दोषदा।

लग्नात् षष्ठाष्टरिःफ[८९]स्थे [९०]चन्द्रदोषः स एव हि।।४२।।

---

(७९)व.१-षेऽपि। (८०)व.१-विवाहं। (८१)व.२-असाध्या।

(८२)व.१-लग्न। (८३)व.१-दुष्टं यल्लग्नं।

(८४)क.-सर्वगुणोपेतं, व.१-सौम्यो गुरुपेतं तत्त्याज्यं।

(८५)व.१-दृष्ट्या, व.३-दृष्ट। (८६)पु.-कत्रा। (८७)व.२-लयोः।

(८८)व.१-दुष्यति। (८९)क.-स्थः। (९०)व.२-चन्द्रो, क.,व.३-चन्द्रे।

## ।। एकविंशतिदोषनिरूपणम्।। (अध्यायः३२)

अनेक[९१]दोषेण युतं लग्नं [९२]कोटिगुणान्वितम्।

बलिभिर्बुधशुक्रेज्यैः संयुक्तमपि [९३]तं त्यजेत्।

विप्रं यथा वेदयुतं महापातकदूषितम् ।।४३।।

नीचराशिगते चन्द्रे साक्षान्नीचस्थितेऽपि वा।

चन्द्रे षष्ठाष्टरिःफस्थे दोषो नास्ति न संशयः।।४४।।

पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीचतुष्टयम्।

उद्वाह[९४]व्रतयानेषु गण्डान्तं निधनप्रदम्।।४५।।

सिंहकर्कटयोश्चापकीटयोर्मीनमेषयोः।

गण्डान्तमन्तरालं तन्नाडिका निधनप्र[९५]दा।।४६।।

---

(९१)व.३-दोषसंयुक्तं।

(९२)व.२-(समाक्षरलोपः)श्लोकः क्र.-४३ब तः श्लोकः क्र.४४अ।

(९३)व.१.३,क.-तत्।

(९४)व.१-जन्मयात्रासु, व.२.३,क.-जन्मयानेषु।

(९५)व.३-दाः, पु.-प्रदां।

सार्पेन्द्रपौष्णधिष्ण्या[९६]नां षोडशां[९७]शाः ससन्धयः।

[९८]तत्र तद्दस्रभाग्योऽयं षोडशांशः स्वकः स्वकः।।४७।।

गण्डान्तं त्रितयं घोरं भसन्धित्रितयं तथा।

निन्दितं शुभकार्येषु विषसंयुक्तदुग्धवत्।।४८।।

सर्वसौम्यग्र[९९]होपेतं लग्नं सर्वगुणान्वितम्।

दोष[१००]त्रये[१०१]ण दुष्टं [१०२]तत् त्याज्यं [१०३]क्षौद्रं यथा तथा।।४९।।

त्रिंशद्भा[१०४]गैर्लग्नमानं होरा तस्यार्धसम्भ[१०५]वा।

लग्नत्रिभागो द्रेक्काणो नवमांशो नवांशकः।।५०।।

---

(९६)व.२-नि। (९७)व.३-शाभ, व.१-शक, पु.-शांशसन्धयः।

(९८)व.१-तत्रात्त्वशभाद्योग। (९९)व.१-हैर्युक्तं।

(१००)व.१-द्व। (१०१)व.२-न।

(१०२)व.१-यत्।

(१०३)व.३,क.-क्ष्वेडं, व.१.२-श्द्वोडं।

(१०४)व.१-गाल।

(१०५)व.२-वाः।

द्वादशांशो द्वादशांशस्त्रिंशांश [१०६]स्त्रिंशदंशक:।
[१०७]षड्वर्गस्य विभागोऽयं [१०८]यद्वर्गो [१०९]य: स तस्य तु।।५१।।
सिंह[११०]स्योर्क: कर्क[१११]टस्य शशी [११२]भौमेऽजकीटयो:।
सौम्य: कन्यामिथुनयोर्गुरुश्चापान्त्यराशयो:।।५२।।
तुलावृषभयो: शुक्र: सौ[११३]री मृगभकुम्भयो:।
योऽधिपो यस्य राशे[११४]श्च नवांशस्यैव सोऽधिप:।।५३।।
[११५]होरेऽर्केन्द्वोरो[११६]जराशौ युग्मभे चन्द्रसूर्ययो:।
लग्नपञ्चनवक्षेत्रना[११७]था: [११८]द्रेक्काणपा: क्रमात्।।५४।।

---

(१०६)पु.-स्त्रिंशज: स्मृत:, व.३-दराज:।
(१०७)व.१-यद्वर्गस्य, व.३-षड्वर्गस्या। (१०८)व.१.३-षड्वर्गो, क.-यद्वर्गे। (१०९)व.१.३,क.-यस्य तस्य यत्, व.२-यस्य तस्य तु।
(११०)व.३-स्या, व.१.२-स्था। (१११)व.१-टेश:।
(११२)व.२-सोमा, व.१.३,क.-भौमो।
(११३)व.१-रिर्मकर, व.२-रीमृगभू, पु.-मृगन। (११४)व.१-स्तु।
(११५)पु.-होरेऽर्कन्दौ, क.-होरेर्केद्धोरो। (११६)पु.-ओज।
(११७)पु.-था। (११८)व.२-द्रेष्काणपा:।

## ।। एकविंशतिदोषनिरूपणम्।।    (अध्यायः३२)

[११९]अजो मृगस्तुलाकर्किनवांशाद्याः क्रियादिषु।

लग्नराशिमुपक्रम्य द्वाद[१२०]शांशेश्वराः क्रमात्।।५५।।

वक्रा[१२१]र्क्रीज्यज्ञशु[१२२]क्राणां [१२३]बाणेष्वेभाद्रिमार्गणाः।

स्युर्भा[१२४]गास्त्वो[१२५]जराशौ [१२६]ते [१२७]युग्मभे [१२८]तु विपर्य[१२९]यात्।।५६।।

षड्वर्गशुभ[१३०]जः श्रेष्ठः पापः पापग्रहोद्भवः।

दुर्लभाः शुभषड्वर्गा [१३१]उत तेषां नवांशकाः।।५७।।

एकस्मिन्पापवर्गेऽपि षड्व[१३२]र्गो मङ्गलप्र[१३३]दः।।५८।।

---

(११९)व.१-(पाठभेदः) तुलामिथुनकन्यांशा धनुराश्यर्धसंयुताः।

(१२०)व.१-शासे, पु.-शैश्वरा। (१२१)व.१-र्कें। (१२२)व.३-क्रेण।

(१२३)व.१-बाणोष्वाज्ञाद्रि। (१२४)व.१-गविषमे। (१२५)व.१-राशौ।

(१२६)व.१-युग्मे। (१२७)व.१-राशौ। (१२८)व.१-दै।

(१२९)व.२-येत्। (१३०)व.१-दः। (१३१)व.१-रुत्ते।

(१३२)व.१-र्गा।

(१३३)व.१-दाः।

## ।। एकविंशतिदोषनिरूपणम्।।    (अध्यायः३२)

पापवर्गैः प्रदुष्टं [१३४]तल्लग्नं गुणगणोत्कटम्।

त्यजेद्यथा हव्यक[१३५]व्यप्यनधीतं द्विजं तथा।।५९।।

भृगुः षट्को महादोषलग्नाषष्टगते सिते।[१३६]

त्यजेद्यथा पुरोडाशं [१३७]वायसोप[१३८]हतं तथा।।६०।।

नीचगे [१३९]तत्तुरीये वा शत्रुक्षेत्रगतेऽपि वा।

भृगुः[१४०]षड्[१४१]कोत्थितो दोषो नास्ति तत्र न संशयः।।६१।।

लग्नादष्टमगे भौमे [१४२]दोषेऽप्यष्टकुजः समः।

तेन दोषेण दुष्टं तल्लग्नं [१४३]सर्वगुणान्वितम्।।६२।।

---

(१३४)व.१-य, पु.-त। (१३५)व.१-व्या व, व.२,क.-व्येऽ।

(१३६)व.१-(अधिकम्)तेन दोषेण दृष्टं यल्लग्नं लक्षगुणान्वितम्।

(१३७)व.१,क.-पो। (१३८)व.१-मसो हतम्। (१३९)क.-तंत्तुरीये।

(१४०)व.२-षट्। (१४१)व.१-कस्तथा।

(१४२)व.२-(समाक्षरलोपः)श्लोकः क्र.६२ब तः

श्लोकः क्र.६१क (...तेन पर्यन्तम्)।

(१४३)व.१-लक्ष।

## ।। एकविंशतिदोषनिरूपणम्।।       (अध्यायः३२)

पञ्चे[१४४]ष्टिकं शुभैर्युक्तं [१४५]जामित्रगुणसंयुतम्।

त्यजेद्यथा कुल[१४६]सतीं [१४७]पर[१४८]पुरुषरतां तथा।।६३।।

अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा।

कुजाष्टमोद्भवो दोषो न किञ्चिदपि विद्यते।।६४।।

स्वस्वेंऽशे नोदया[१४९]स्वांशौ वीक्षितौ वाथ संयुतौ।

लग्नं [१५०]वास्तग्रहं तत्र [१५१]तदंशनेक्षितौ युतौ।।६५।।

[१५२]राश्यंशो मित्र[१५३]सौम्येन वीक्षितौ वा[१५४]पि संयुतौ।

उदयास्तांशयोः शुद्धिस्त्रिविधा मङ्गलप्र[१५५]दा।

त्रिःप्रकारेण सा शुद्धिर्न चेल्लग्नं च निन्दितम्।।६६।।

---

(१४४)व.१–ष्ट। (१४५)क.–यामित्र, व.३–योमित्र।

(१४६)व.१–पतिः, व.३–सती। (१४७)व.१–परिपूर्णरतं स्त्रियम्।

(१४८)क.–पुंस। (१४९)व.१.२–स्तांशो।

(१५०)पु.–वास्तुगृहं, व.१–चाष्टगृहं।

(१५१)व.२–तदंशे, व.१–तत्र दीशैतैवेक्षितौ, व.३–तद्वत्तदीशेनेक्षितौयुतौ।

(१५२)व.१–राशीश, व.३–राश्यंशौ। (१५३)व.१–सौम्यैश्च।

(१५४)व.३,क.–थ, व.२–(लोपः)पि संयुतौ। (१५५)व.२–दाः।

## ।। एकविंशतिदोषनिरूपणम्।। (अध्यायः३२)

[१५६]अपि पञ्चे[१५७]ष्टिकं लग्नमनेकगुणसंयुतम्।

त्यजेद्यथा शुनाघ्रान्तं तथा हव्यं घृतं [१५८]कृतम्।।६७।।

[१५९]आदित्यादिषु वारेषु ये मुहूर्ताश्च निन्दिताः।

[१६०]तेन दोषेण दृष्टं तल्लग्नं गुणविभूषितम्।।६८।।

शुभग्रहैस्त्रिभिर्युक्तं सर्वदोषविवर्जितम्।

त्यजे[१६१]त्पुष्पफलोपेतं व्यालाक्रान्तं तरुं [१६२]तथा।।६९।।

दम्पत्योरष्टमे लग्ने राशौ [१६३]वापि तदंशके।

तदीशे वा लग्नगते तयोमृत्युर्न संशयः।।७०।।

---

(१५६)व.३,क.-(लोपः)श्लोकः क्र.६७क तः श्लोकः क्र.६८।

(१५७)व.१-ष्ट। (१५८)व.१-स्रुतं।

(१५९)व.१-(लोपः)श्लोकः क्र.६८क-ड।

(१६०)व.१-(पाठभेदः/पुनरोक्तिः)श्लोकः क्र.६९अ ब :-

अपि पञ्चेष्टकं लग्नमनेकगुणसंयुतम्।

(१६१)क.-तस्य। (१६२)क.-यथा। (१६३)पु.-वाथ।

कालकूटाख्यदोषोऽयं [१६४]तेन दोषेण दूषितम्।।७१।।

लग्नं कोटिगुणोपेतमपि सौम्यग्रहैर्युतम्।

[१६५]तत् त्यजेत् कालकूटाख्यं [१६६]विषवद्वा प्रयत्नतः।।७२।।

तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे।

यदा लग्नगते [१६७]नित्ये [१६८]निःसत्त्वं कलहं द्वयोः।।७३।।

[१६९]जन्मन्यष्टम[१७०]लग्नेशे मिथो [१७१]मित्रौ व्यवस्थितौ।

जन्मराश्यष्टम[१७२]र्क्षोत्थदोषो [१७३]नश्यति भावतः।।७४।।

[१७४]दृष्टं स्वजन्मलग्नं [१७५]तज्जन्मराशिरनिष्ट[१७६]दम्।

लग्नगस्तु तयोः स्थाना[१७७]च्छुभा[१७८]न्युपचयानि वै।।७५।।

---

(१६४)व.२,क.–स्तेन। (१६५)पु.–(लोपः) तत्, व.२–तं।

(१६६)व.३–विषं यद्वत्। (१६७)व.१–सत्यं, व.२–नित्यं।

(१६८)व.१–निश्चितं कलहस्तयोः। (१६९)व.१–जन्मैशा।

(१७०)व.१–राशीशौ। (१७१)व.१–मित्रो, पु. शस्त्रा।

(१७२)व.१–र्क्षस्थो,र्क्षोत्थं। (१७३)व.१–न स्या त्स्वभावतः।

(१७४)व.२.३,क.–इष्टं। (१७५)व.१–यज्ज। (१७६)व.१.२.३–दः।

(१७७)व.२–वुभावुपचयानिचौ। (१७८)पु.भान्यपजयानि वै।

## ।। एकविंशतिदोषनिरूपणम्।।  (अध्याय: ३२)

वि[१७९]यद्बाणा ५०  वेददस्रा २४  खरामा ३० [१८०]व्योमसागरा:४०।

वेदचन्द्रा [१८१]१४  चन्द्रदस्रा २१  खरामा ३० व्योमबाहव:२०।।७६।।

नेत्राग्नयो ३२ व्योमगुणा: ३० शून्यदस्रा २० गजेन्दव:१८।

[१८२]क्ष्माबाहवो २१ वियद्दस्रा २० शक्रा १४ श्चेन्द्रा १४ खभूमय:१०।।७७।।

वेदचन्द्रा १४ स्तर्कबाणा ५६ वेददस्रा: २४ खबाहव:२०।

[१८३]व्योमेन्दवो१० व्योमचन्द्रा१० [१८४]पुराणा १८ स्तर्कभूमय:१६।।७८।।

---

(१७९)व.१–षद्। (१८०)व.१–(लोप:)व्योमसागरा:(श्लोक: क्र.७६) त:

व्योमगुणा:(श्लोक: क्र.७७अ)।

(१८१)पु.–२४। (१८२)व.२–(लोप:)श्लोक: क्र.७७क  त:

श्लोक: क्र.७८ब  एवं  श्लोक: क्र. ७८क (व्यमेन्दवो)।

(१८३)क.–(लोप:) व्योमेन्दवो १०।

(१८४)पु.–स्त्रिपरां, व.२–स्मृतय, क.–नागभू।

## ।। एकविंशतिदोषनिरूपणम्।।      (अध्यायः ३२)

वेदाक्षिश्च २४ खरामाः ३० स्युर्दस्र[१८५]क्षा [१८६]तु घटिका [१८७]इमाः।

आभ्यः परस्तात्क्रमशश्चतस्रो विषनाडिकाः।।७९।।

ऋक्षाद्यन्तघटीमानं विषमानेन ताडितम्।

[१८८]षष्टिभिर्हरते लब्धं पूर्वऋक्षेण योजयेत्।।८०।।[१८९]

विषनाडीदोषदुष्टं लग्नं सर्वगुणान्वितम्।

शुभैः सर्वैश्च संयुक्तमपि पञ्चे[१९०]ष्टिकं त्यजेत्।

त्यजेद्यथा सन्नि[१९१]पातज्वर[१९२]लग्ननरोत्तमम्।।८१।।

तुलामिथुनकन्यांशाश्चापान्त्यार्धेन संयुताः।

एते नवांशकाः श्रेष्ठा यदि नान्त्यांशका अपि।।८२।।

---

(१८५)व.३-भात्, क.-भा। (१८६)क.,व.३-(लोपः)तु।

(१८७)व.२-क्रमाः।

(१८८)क.-षष्टिर्द्धि। (१८९)व.१.३-(लोपः)श्लोकः क्र.-८०।

(१९०)व.१-ष्टदं भवेत्।

(१९१)पु. पातद्वार, व.३-पातं ज्वर, व.१-पातस्वर।

(१९२)व.१-दग्धं भिषग्वरः।

## ।। एकविंशतिदोषनिरूपणम्।। (अध्याय: ३२)

अन्त्यांशका अपि श्रेष्ठा यदि वर्गोत्तमाह्वया:।

अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशका:।।८३।।

कुनवांशकदुष्टं तल्लग्नं सर्वगुणान्वितम्।

त्यजेद्यथा कुनृपतिं [१९३]नीतिबाह्यं च सेवका:।।८४।।

शैलाक्षश्रुतय: सूर्ये चन्द्रे षड्[१९४]वेदपर्वता:।

[१९५]भौमे बाणाग्निनेत्राणि सौम्ये वेदाक्षिवायव:।।८५।।

गुरुवारेऽ[१९६]ग्नि[१९७]चन्द्रेभा: शुक्रे [१९८]नेत्राग्नि[१९९]बाहव:।

शनौ चन्द्रेभत[२००]र्का: स्यु: [२०१]कुलिका यम[२०२]घण्टकम्।।८६।।

---

(१९३)पु.–नाति। (१९४)व.३–भेन्दु। (१९५)व.२–सौमे।

(१९६)व.१–(अधिकम्)१।३।८। (१९७)व.१–चेन्द्रभा, व.२–चन्द्रेणा।

(१९८)व.१–(अधिकम्)२।७।३। (१९९)व.३–वह्नय:।

(२००)व.१–र्काश्च १।८।६। (२०१)क.–कुलिको।

(२०२)व.३,क.–कण्टकम्।

## ।। एकविंशतिदोषनिरूपणम्।।      (अध्यायः ३२)

अर्धप्रहर[२०३]संज्ञास्तान् मङ्गलेषु विवर्जयेत्।[२०४]

यम[२०५]घण्टे त्वर्थहानिर्यामा[२०६]र्धे कार्यनाश[२०७]नम्।।८७।।

वारदोषेण दुष्टं तल्लग्नं सर्वगुणान्वितम्।

त्यजेद्यथा पुरोडाशं वायसोपहतं [२०८]तथा।।८८।।

[२०९]समाङ्घ्रिजेन दोषेण दुष्टमेकार्गलस्य च।

अपि पञ्चे[२१०]ष्टिकं लग्नं शुभैः सर्वैः समन्वि[२११]तम्।।८९।।

---

(२०३)पु.-संज्ञता, व.१-संज्ञास्तं।

(२०४)व.१-(अधिकम्)प्रहरार्धप्रमाणेन कुलिके निधनं भवेत्।

(२०५)क.-कण्टक, व.३-कण्टके। (२०६)व.१-र्धः।

(२०७)व.१-नः। (२०८)क.-यथा।

(२०९)पु.-सामाम्बुजेन, व.१-समाद्रिज्ञेण, व.२-सामाद्रियेण।

(२१०)व.१-ष्टकं। (२११)व.३,क.-तैः।

## ।। एकविंशतिदोषनिरूपणम्।। (अध्यायः३२)

महागुणगणैः सर्वैः सम्पूर्णमपि [२१२]जृम्भितम्।

त्यजेद्यथा महा[२१३]भोग[२१४]संदष्टं नृपसत्तमम्।।९०।।

ग्रहणोत्पातनक्षत्रदूषितं लग्नमुत्तमम्।

[२१५]गुणोद्यमणिमालाभिः[२१६]सज्वल[२१७]न्तं समन्ततः।।९१।।

मणिहेममयं [२१८]हर्म्यं भूताक्रान्तमिव त्यजेत्।।९२।।

क्रूरविद्धं च यद्धिष्ण्यं क्रूराक्रान्तं च कृत्स्नभम्।

ग्रहणोत्पातभं [२१९]यद्वत्तद्वदेव परित्यजेत्।।९३।।

---

(२१२)पु.–लम्भितम्, व.१.२–जम्भितम्, क.–जृम्भतम्।

(२१३)व.१.३,क.–भोगि। (११४)व.१–दष्टाः सदृष्टं।

(२१५)व.२–गुणौघ, व.१–गुणाद्य। (२१६)व.२–सद्वल।

(२१७)व.३,क.–समंततः, व.१–तत्समं ततः।

(२१८)पु.–रम्यं, व.३,क.–हर्म्य।

(२१९)पु.–यत्र तद्वदेव, क.–यद्ववदेव।

## ।। एकविंशतिदोषनिरूपणम्।।    (अध्यायः३२)

[२२०]सत्कृत्स्नभं शुभैर्विद्धं [२२१]पाप एव न शोभ[२२२]नम्।

क्रूरवि[२२३]द्धयुतं धिष्ण्यं निखिलं नैव पादतः।।९४।।

अकालमेघध्वनिना वृष्ट्या वा दूषितं च यत्।

तल्लग्नं शुभसंयुक्त[२२४]मिष्टखेटैस्तु पञ्चभिः।।९५।।

अन्यैरपि गुणैर्युक्तं सर्वदोषविवर्जितम्।

त्यजेद[२२५]नर्घमाणिक्यं कलङ्कोपहतं यथा।।९६।।[२२६]

महावैधृतिपाताभ्यां दूषितं लग्नमुत्तमम्।

शुभषड्वर्गसम्भूतं शुभैः सर्वैः समन्वितम्।।९७।।

---

(२२०)व.१-न कृत्सभं। (२२१)व.१.३-पाद।

(२२२)पु.-नः।

(२२३)व.१,क.-द्धं।

(२२४)व.१-द्रष्टदैः पञ्चभिर्युतम्।

(२२५)व.१-त्यर्घ।

(२२६)व.१-(पुनरोक्तिः)श्लोकः क्र.९६अ,ब,क।

## ।। एकविंशतिदोषनिरूपणम्।।    (अध्यायः३२)

नानागुणमणि[२२७]व्रातं प्रभाभिः परिमण्डितम्।

महादोषपरित्यक्तमपि योगोत्तमोत्तमम्।

[२२८]राजावधूतपुरुषं यद्व[२२९]त्तत्सम्परित्यजेत्।।९८।।

हन्त्येकोऽपि महादोषो गुणलक्षं न चेद्गु[२३०]णः।

तद्विरो[२३१]धात्पञ्चगव्यघटं मद्य[२३२]लवो यथा।।९९।।

[२३३]।। इतिश्रीकश्यपब्रह्मर्षिविरचितायां महासंहिताया-मेकविंशतिदोषनिरूपणं द्वात्रिंशोऽध्यायः।। ।। ३२।।

---

(२२७)व.१,पु.-तत्, व.३-प्रात। (२२८)व.१-निर्धूतपुरुषराज्ञां।

(२२९)व.१-सर्वं। (२३०)व.१-णम्। (२३१)व.३-धी।

(२३२)पु.-घटो।

(२३३)पु.,व.२,क.-इत्येकविंशतिदोषनिरूपणानि।।,

व.१-(लोपः)

व.३-इत्येकविंशतिदोषनिरूपणानि द्वात्रिंशोऽध्यायः।।

## ।। त्रयस्त्रिंशतितमोऽध्यायः ।।

## ।। विवाहाध्यायः ।।

पञ्चाङ्ग[१]दोषगे लग्ने सौम्य[२]केन्द्रगते गुणाः।

ते सर्वे नाशमायान्ति [३]यथाग्नौ शलभा इव।।१।।[४]

सङ्क्रान्तिदोषगं लग्नं स्वगुणात्सौम्यखेट[५]जात्।

गुणानन्या[६]न्बहून् [७]हन्ति [८]व्याघ्रे गोसमितिं यथा।।२।।

[९]चन्द्रे सङ्ग्रहदोषे तु लग्नं सौम्यग्रहोद्भवान्।

गुणान्हन्ति बहूनन्यान्वृकोऽजसमितं यथा।।३।।

---

(१)व.२-दोषलग्नेशेसौम्ये।

(२)व.१-क्रेन्द्रादयो, व.१-क्रेन्द्रगता। (३)क.-तथा।

(४)व.१-अत्रे श्लोकः क्र.१००,१०१...क्रमेण लिखिताः सन्ति।

(५)व.१-कान्, व.३-जान्।

(६)व.३-(समाक्षर-लोपः)श्लोकः क्र.२क तः श्लोकः क्र.४ब।

(७)व.१-हन्त्यवग्रहो वृष्टिसंहति यथा। (८)क.-व्याघ्रो।

(९)व.१-(लोपः)श्लोकः क्र.-३।

कर्तरीदोष[१०]गं लग्नं स्वगुणान्सौम्यसम्भवान्।

[११]बहूनन्यान्हन्ति यथावग्रहो वृष्टिसंह[१२]तिम्।।४।।

लग्नात्षष्ठाष्टरि:फस्थैश्चन्द्रे लग्नं भवेद्यदि।

हन्ति सर्वगुणान् [१३]सौम्यो [१४]पानान्नानि विषं यथा।।५।।

गण्डदोषगते लग्ने [१५]गुणा: सौम्यग्रहोद्भ[१६]वा:।

ते सर्वे विलयं यान्ति ग्रीष्मे [१७]यद्वज्जलाशया:।।६।।

पापषड्वर्गगे लग्ने गुणा: सर्वे लयं ययु:।

शुभग्रहोद्भवा यद्वत्क्षय[१८]रोगेऽपि धातव:।।७।।

---

(१०)व.२-जं। (११)व.३-गुणान्हन्ति बहूनन्यान्। (१२)व.३-ति।

(१३)व.१.३-सौम्यन्, व.२-सौम्ये।

(१४)व.२पानात्तानि, व.१-हन्यान्नाति, क.-पानान्नाति, व.३-पापान्नानि।

(१५)व.३-(समाक्षरलोप:)श्लोक: क्र.-६ब त: श्लोक: क्र.-७अ।

(१६)व.२-वम्। (१७)व.१-कुसरितो यथा। (१८)व.३-रोगोऽहि।

[१९]लग्नात्षष्ठगते शुक्रे यदि लग्नं भवेत्तदा।

व्यर्थाः सर्वे गुणास्तद्वद्विदृशां चन्द्ररश्मयः।।८।।[२०]

लग्ना[२१]दष्टमगे भौमे यदि लग्नं भवेत्ततः।

गुणवृन्दान्बहून्हन्ति खलः परगुणा[२२]न्यथा।।९।।

उदयास्तांशयोः शुद्धिर्हीने लग्नं भवेद्यदि।

गुणौघं [२३]हन्ति तत्सर्वमनृतं सुकृतं यथा।।१०।।

दुर्मुहूर्तो लग्नगतः शुभखेटोद्भवान्गुणान्।

हन्ति सर्वगु[२४]णास्तद्वद्[२५]द्रारिद्र्यं गुणसञ्चयान्।।११।।

---

(१९)व.१-श्लोकः क्र.८ पाठाद्बहिर्लिखितम्।

(२०)पु.-९००(इतः पर्यन्तं श्लोकः संख्या)।

(२१)व.१-षष्टगते।

(२२)व.१-नपि।

(२३)पु.-हन्तत्सर्व।

(२४)क.-णां।

(२५)व.१-पापानीव हरस्मृतिः।

## ।। विवाहाध्यायः ।। (अध्यायः ३३)

विषनाडीभवो दोषो लग्नगः सकलान्गुणान्।

हन्ति यद्वद्धनचयं [२६]कितवोऽतिनिषादतः।।१२।।

दम्पत्योरष्टमं लग्नं राशिर्वा यदि लग्न[२७]तः।।

[२८]गुणान्हन्त्यखिला[२९]न्सर्वान्कुराजा स्वजनान्यथा।।१३।।

कुनवांशे लग्नगते [३०]लग्नं खेटोद्[३१]भवान् [३२]गुणान्।

[३३]महद्गुणा अपि स्वस्य नाशं यान्त्यन्न(न्य)दूषणात्।।१४।।

वारदोषगते लग्ने शुभकेन्द्रगते गुणाः।

[३५]अन्येऽपि नाशमायान्ति [३६]लोभः सर्वगुणा[३७]नि च।।१५।।

---

(२६)व.२–कितवोऽनिधिपाततः, व.१–रिपवो निमिषार्धतः।

(२७)व.१.२.३–गः। (२८)व.१–शुभान्।

(२९)व.१–सौम्या राजास्त्रीस्वजनं यथा।

(३०)व.२–(समाक्षरलोपः) श्लोकः क्र.१४ब तः श्लोकः क्र.१५ब।

(३१)व.३,क.–भवा। (३२)व.१.३,क.–गुणाः। (३३)पु.,क.,व.२–महान्गुण।

(३४)पु.–निचस्वस्य, क.–निचस्यस्वनाशं। (३५)व.१–अन्ये विनाश।

(३६)व.१–रोगः। (३७)व.१–इव।

## ।। निखिलोत्पातशान्त्यध्यायः।। (अध्यायः४८)

आमध्याह्नात्तु विप्राणां [१९६]नेष्टो राजोपजीविनाम्।
तृतीयया[१९७]मे वैश्यानां जलजानामनिष्टदम्।।६१।।
चतुर्थे चोरनाशं च सन्ध्यायां हन्ति [१९८]सङ्क[१९९]रान्।
[२००]आद्ये [२०१]यामे सस्यहानिर्द्वितीये [२०२]च पिशाचकान्।।६२।।
[२०३]अर्धरात्रे तु तुरगान् तृतीये लिपिलेखकान्।
चतुर्थयामे निर्घात[२०४]पातं हन्तीतरान् जनान्।।६३।।
[२०५]भीमगम्भीरशब्दः [२०६]स्यात् [२०७]कृतस्तत्र तदीश्वरम्।।६४।।

[२०८]।। इति निर्घातलक्षणम्।।

---

(१९६)पु.,व.२,क.–नेष्ट। (१९७)व.३–मै। (१९८)व.३,क.–शङ्क।
(१९९)पु.–रात्, व.२–रा।
(२००)व.२–(लोपः)श्लोकः क्र.६२क तः श्लोकः क्र.६३अ पर्यन्तम्।
(२०१)व.३–याम्ये। (२०२)व.१–तु।
(२०३)पु.–अल्पार्धरात्रे, व.१–हन्तिनिर्घातपातश्च। (२०४)व.१–पाते।
(२०५)क.,व.३–भीमजर्जर, व.१–भीमरुर्र, व.२–भीरुगरशब्दः।
(२०६)व.१–स्यान्न, व.२–स्थान। (२०७)पु.–कतस्त तन्नदीश्वरम्।
(२०८)पु.,क.,व.१.२.३–।। इति निर्घातलक्षणम्।।

## ।। निखिलोत्पातशान्त्यध्यायः ।। (अध्यायः ४८)

दिग्दाहः [२०९]पीतवर्णश्चेत् क्षितीशानां भयप्र[२१०]दः।

देशनाशोऽग्निवर्णो [२११]वारुणवर्णोऽ[२१२]निलप्रदः ।।६५।।

धूम्रः [२१३]सस्यविनाशाय कृष्णः शस्त्रभयप्रदः।

प्राग्दाहः क्षत्रियाणाञ्च [२१४]परेशानामभीष्टदः ।।६६।।

आग्नेय्यां युवराजस्य शिल्पानाम[२१५]शुभप्रदः।

पीडां व्रजन्ति याम्ये च [२१६]मूर्खवैश्या नराधमाः ।।६७।।

---

(२०९)पु.,व.२–पीतवर्णश्च। (२१०)व.२–दाः।

(२११)व.३–सावर्णो, क.–तु रक्त, व.१–नुण, व.२–रुण।

(२१२)व.२–जल। (२१३) पु.–शाम।

(२१४) पु.–।।२।। पत्रें ३९, पुनानगरात् प्राप्तो हस्तलिखितग्रन्थोऽत्र पूर्णः

(अपूर्णो हस्तलिखितग्रन्थः)।

(२१५)व.३–शुभः। (२१६)व.१–मूर्ष।

## ।। निखिलोत्पातशान्त्यध्यायः ।। (अध्यायः४८)

नैर्ऋत्यां दिशि चोराश्च पुनर्भूः प्रम[२१७]दागणः।

[२१८]प्रतीच्यां तु कृषिकरा वायव्यां पशुजातयः।।६८।।

सौम्यां विप्रानुरीशान्यां वैश्याः पाखण्डिनो जनाः।

दिग्दाहो यः स्वर्णनिभो जन्तूनां मङ्गलप्रदः।।६९।।

पञ्चदिग्दाहदिवसा राष्ट्रविद्रावणप्रदाः।।७०।।

[२१९]।। इति दिग्दाहलक्षणम्।।

सितेन रजसा [२२०]छन्नादिग्रामवनपर्वताः।

यथा यथा [२२१]भवन्त्येते निधनं यान्ति भूमिपाः।।७१।।

---

(२१७)व.३-दाङ्गनाः।

(२१८)व.१.३,क.-(लोपः)श्लोकः क्र.६८अ तः श्लोकः क्र.६९ब पर्यन्तम्।

(२१९)व.१.३,क.-।। इति दिग्दाहलक्षणम्।।,

व.२-(लोपः)।। इति दिग्दाहलक्षणम्।।

(२२०)व.१-छत्रा। (२२१)व.३-भयत्येते, क.-भवन्त्यतो।

## ।। निखिलोत्पातशान्त्यध्यायः ।। (अध्यायः४८)

धूम्रः समुद्भवो यस्यां दिशि तस्यां विधीयते।

तत्र तत्रस्थजन्तूनां हानिदः शस्त्रकोप[२२२]दः ।।७२ ।।

मन्त्रीजनपदानां च व्याधिदश्चासि[२२३]तो रजः।

[२२४]अर्कोदये विजृम्भन्ति गगनस्थगयन्नि[२२५]व।।७३ ।।

दिनद्वयं चैकदिनमत्युग्रो भयदो रजः।

रजो भवेदेकरात्रं नरहो [२२६]च निरन्तरम्।।७४ ।।

परचक्रा[२२७]भिगमनं द्विरात्रं सततं यदि।

क्षामडामरमात[२२८]ङ्कं त्रिरात्रं सततं यदि।।७५ ।।

[२२९]ईतिदुर्भिक्षमतुलं यदि रात्रिचतुष्टयम्।

निरन्तरं पञ्चरात्रं महाराजविनाशनम्।।७६ ।।

---

(२२२)व.३-नः, क.-तः। (२२३)व.३-तं।

(२२४)व.१.२-अर्क्कोदये।(२२५)व.१.३,क.-च।

(१२६)क.-चेन्निरन्तरम्। (२२७)व.२,क.-पिगमनं।

(२२८)व.१.२.३-ङ्क। (२२९)व.२.१-इति।

ऋतावन्यत्र शिशिरात्सम्पूर्णफलदो रजः।।७७।।

[२३०]।। इति रजोलक्षणम्।।

भूभारखिन्ननागेन्द्रशेष[२३१]विश्रामसम्भ[२३२]वः।

[२३३]भूकम्पः सोऽपि जगता[२३४]मशुभाय भवेत्ततः।।७८।।

यामक्रमेण भूकम्पो [२३५]द्विजादी[२३६]नामनिष्टदः।

[२३७]अनिष्टदं क्षितीशानां सन्ध्ययो[२३८]रुभयोरपि।।७९।।

अर्यमाद्यानि चत्वारि द्रस्त्रेन्द्वदितिभानि च।

[२३९]वाय[२४०]व्यं [२४१]मण्डलं त्वेतत्तस्मिन्कम्पो भवेद्यदि।।८०।।

---

(२३०)व.१.२.३, क.–।। इति रजोलक्षणम्।।

(२३१)व.२–निःश्वास। (२३२)क.–व, व.३.२–वाः। (२३३)क.–भूकम्प।

(२३४)व.२–प्रशुभाय। (२३५)व.२–द्विजातीना। (२३६)व.३–नां।

(२३७)व.३–अनिष्टक्षितीशानां। (२३८)व.१.२.–नुभयोरपि।

(२३९)क.–(लोपः)श्लोकः क्र.–८०क तः श्लोकः क्र.८१ब पर्यन्त।

(२४०)व.३–व्य।

(२४१)व.३–मण्डल।

## ।। निखिलोत्पातशान्त्यध्याय: ।। (अध्याय:४८)

नृप[२४२]सस्यवणि[२४३]क्वेश्याशिल्पवृष्टिविनाश[२४४]क: ।।८१ ।।

[२४५]पुष्यद्विदै[२४६]वा भरणी पितृभाग्याग्निभानि च।

आग्ने[२४७]यं मण्ड[२४८]लं [२४९]त्वेतत्तस्मिन्कम्पो भवेद्यदि।

नृप[२५०]वृष्ट्यर्घनाशाय हन्ति [२५१]शाबरसङ्करान्।।८२।।

अभिजिद्[२५२]धातृवैश्वेन्द्रवसुवैष्णवमित्रभम्।।८३।।

माहेन्द्रमण्ड[२५३]लं चैतत् तस्मिन्कम्पो भवेद्यदि।

राजनाशाय रोगाय हन्ति मार्द[२५४]जदर्दुरान्।।८४।।

मूलाहिर्बुध्न्यवरुणपौष्णार्द्रासार्पभानि च।

वारुणं मण्डलं [२५५]त्वेतत्तस्मिन्कम्पो भवेद्यदि।।८५।।

---

(२४२)व.२-शस्य। (२४३)व.३-ग्। (२४४)व.१,क.-का।

(२४५)व.३-विपुष्याद्दैशक। (२४६)व.१-व।

(२४७)व.३-य। (२४८)व.३-ल।

(२४९) व.१.३-त्वेन, व.२-चेतत्। (२५०)व.१.३,क.-षष्ट्यर्घ।

(२५१)व.३,क.-सावतरङ्कणान्, व.१-सावतं क्रमात्। (२५२)क.-धात्रि।

(२५३)व.१-ले चेत्तस्मिन्कम्पो।(२५४)व.३-न दुर्दरान्। (२५५)क.-त्वेतत्र।

## ।। निखिलोत्पातशान्त्यध्यायः।। (अध्यायः४८)

राज्यनाशकरो [२५६]हन्ति पौन्ड्रचीन[२५७]पुलिन्दिकान्।

प्राये[२५८]ण निखिलोत्पाताः क्षितीशा[२५९]नामनिष्ट[२६०]दाः। ।८६।।

षड्भिर्मासैश्च [२६१]भूकम्पो द्वाभ्यां दाहःफलप्रदः।

[२६२]अनुक्ता पञ्चभिर्मासैस्तदा[२६३]नीं फल[२६४]दं रजः।।८९।।

[२६५]।। इति भूकम्पलक्षणम्।।

[२६६]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहिता- यानिखिलोत्पातशान्त्यध्यायोऽष्टाचत्वारिंशः।। ।।४८।।

---

(२५६)व.१.३-र्हन्ति। (२५७)व.३-पुनः दिकान्, व.२-पुनन्दिकान्।

(२५८)व.१.२.३-न। (२५९)क.-नां। (२६०)व.१-दा, व.२-दाम्।

(२६१)व.३-भूकम्प। (१६२)व.३-अनुक्ताः। (२६३)व.३-नीः फलदं।

(२६४)क.-दो।

(२६५)व.१.२.३,क.-।। इति भूकम्पलक्षम्।।

(२६६)व.१.२.३,क.-।। इति निखिलोत्पातशान्त्याध्यायः।।

## ।। एकोनपञ्चाशत्तमोऽध्याय: ।।

## ।। मिश्रकाध्याय: ।।

अथात: सम्प्रवक्ष्यामि मिश्रकाध्यायमुत्तमम्।

तस्मिन्सर्वगुणोपे[१]तं राजा[२]चारं समा[३]सत: ।।१।।

[४]कुलीनो धार्मिक: शूरो नीतिज्ञ: [५]स्मृतिमान् शुचि:।

सत्यवाक् सत्यसम्पन्न: श्रीमान्वृद्धोपसेवक: ।।२।।

अलुब्धो व्यसनो मन्त्रगोप्ता सप्ताङ्गसंयुत:।

उपायसंयुत: शक्ति[६]त्रयात्मा गुणभूषण: ।।३।।

प्रारम्भलक्षणं [७]पूर्वद्रव्यसम्पदत: परम्।

देशकालविभागं [८]च [९]विपत्पात[१०]निवारणम्।।४।।

---

(१)व.२-तो। (२)क.-वारं। (३)व.२-युत:।

(४)व.१.-कुलिनो।

(५)व.१-शुचिमाच्छुचि:, व.२-श्रुतिमान्छुति:, व.३-स्मृतिमान् शुचि:।

(६)व.३-प्रयात्मा। (७)व.२-पूर्वे, व.३-पूर्वं।

(८)क.-ज्ञ:। (९)व.३-द्विषत्पात।

(१०)क.-न्नि।

## ।। मिश्रकाध्यायः।।            (अध्यायः४९)

कार्यस्य सिद्धिः सप्ताङ्गो [११]मन्त्रपञ्चागमुच्यते।

[१२]स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च।।५।।

सामभेदौ दानदण्डौ चत्वारोऽपाय[१३]वर्तिनः।

उत्साहमन्त्र[१४]प्रभवस्ति[१५]स्रो ज्ञेयास्तु शक्तयः।।६।।

सन्धिश्च विग्रहो यानमासनं संश्रयस्ततः।

द्वैधीभावो गुणैः षड्भिरेतै[१६]र्मुक्तः क्षितीश्वरः।।७।।

एवंलक्षणसंयुक्तः सेव्यमानस्तु सेवकैः।

राजोन्नतिं सोऽपि [१७]सदा चिन्तयेन्मन्त्रिभिः सह।।८।।

सूर्योदये [१८]प्राक्सन्ध्यायां श्रीकामी त्यक्तनिद्रकः।

गीत[१९]तूर्यरवैः सार्धं शय्यामपि परित्यजेत्।।९।।

---

(११)व.३–मतः। (१२)व.३–स्वास्य, व.२–श्वाम्यु।

(१३)व.१–चान्नतः, व.२–वान्नरः, क.–वर्तनः। (१४)क.–प्रच।

(१५)व.३–त्रा, व.२–श्रौ। (१६)व.१.३,क.–युक्तः।

(१७)व.१–सदाचित्तमन्त्रिभिः सदा।

(१८)व.१–शक्तं ध्यायां। (१९)व.१–तुर्य।

।। मिश्रकाध्यायः।।            (अध्यायः४९)

वचांसि शृण्वन्मङ्गलपाठकानां विलोकयेत्।

[२०]ब्राह्मणाग्न्यर्कगोहेमघृततोयधराधिपान्।।१०।।

ततो मूत्रपुरी[२१]षे तु वाग्मी कुर्यादुदङ्मुखः।

गन्धलेपक्षयकरं शौचं च [२२]विधिपूर्वकम्।।११।।

प्राङ्[२३]मुखोदङ्मुखो [२४]वापि दन्तधानमाचरेत्।

वितस्तिमात्रकाष्ठेन [२५]सत्त्वचापारितेन च।।१२।।

शिरीषलोध्रपन[२६]सनिम्बजम्बूकदम्बकैः।

[२७]कुलजाङ्कोल[२८]बकुलैर्लक्ष्मीवृद्धिर्भवेदलम्।।१३।।

---

(२०)व.२-(पृष्ठलोपः/अप्राप्यपृष्ठ) श्लोकः क्र-१०ब ततः

श्लोकः क्र.-२४क पर्यन्तम्।

(२१)व.३-षो। (२२)क.-विप्र। (२३)व.१-मुखौदङ्मुखौ।

(२४)क.-चापि। (२५)व.३-सधचापारितेन च, क.-सर्वकापाटिजं नत।

(२६)क.-सा। (२७)व.३-कुटजा, क.-कुटजो।

(२८)क.-बकुलौ, व.१-घकुलैर्।

[२९]भाण्डारकरवी[३०]राम्लनीपक्रमुकदाडिमैः।

करञ्जकोविदारा[३१]र्कैं [३२]रत्नवृद्धि[३३]र्भवेदिह।।१४।।

अपामार्गवटप्लक्षखदिरोदुम्बरार्जुनैः।

बिल्वपुन्नाग[३४-३५]बकुलैरायुर्वृद्धिर्भवेद् ध्रुवम्।।१५।।

श्रीक[३६]ण्टचतपा[३७]म्बष्टनारि[३८]केरविभीतकैः।

[३९]कङ्कुष्टशाल[४०]नारङ्गनिचुलैरतुलं [४१]यशः।।१६।।

---

(२९)व.३-भाण्डिर। (३०)व.३-रामनीधक्रमुकुन्दाडिमैः। (३१)व.१-क्कैं।

(३२)व.३,क.-रत्न। (३३)व.१,क.-भ।

(३४)व.३-(स्थानभ्रष्टं-पुनर्लिखितं) *श्लोकः क्र.१५-बिल्वपुन्नाग* पश्चात्

*दीपावलितिथौवसेत् ....................सिंहस्थे* पर्यन्तम्।

(३५)व.१,क.-ककुभम्। (३६)व.१.२-वनुप, व.३-च पत, क.-टं नुत।

(३७)व.३,क.-(लोपः)म्व। (३८)व.३-केल।

(३९)व.३-कङ्कुष्ट्व। (४०)क.-नारिङ्ग।

(४१)व.१.२-जसः।

पलाशाश्वत्थजम्बीरमातु[४२]लङ्गकपित्थकैः।

अगस्तितालहिन्तालकङ्ककाष्ठैश्च निःस्वता।।१७।।

[४३]तिन्तिणीकशमी[४४]खण्डमध्वामलक [४५]वञ्जुलैः।

विकङ्क[४६]ताव्याघ्रपाद[४७]सर्ज्जकृष्ण्यैर्य[४८]शः क्षयः।।१८।।

[४९]हरीतकी[५०]विष्णुनाग[५१]कतकोद्[५२]दल[५३]तापनैः।

[५४]कार्यासाढकिवा[५५]ग्रूचीवलाश्लेष्मा[५६]तकैर्गदः।।१९।।

भल्लातकीदेवदारु [५७]मदयन्तीक्षु[५८]पादकैः।

[५९]तृणाङ्गुलाश्मलोहाद्यैः शत्रुभ्यः साध्वसं तथा।।२०।।

---

(४२)व.३-लिङ्ग। (४३)क.-चिचिणी, व.३-तित्रिणां। (४४)व.१.३-षण्ड।

(४५)क.-मञ्जुलैः। (४६)व.३-त। (४७)व.३,क.-सर्ज।

(४८)व.१.३-शक्षयः। (४९)व.३-हरि। (५०)व.१-विष्ट।

(५१)क.-वेतको। (५२)व.३-दाल। (५३)क.-पापनैः।

(५४)व.३-कार्यासादकिवा। (५५)व.३,क.-ग्रूविवलाशौषातकैर्गदी। (५६)व.१-तकैर्गदः। (५७)व.१-मदम्पती।

(५८)व.३-पालकैः। (५९)क.-तृणागुला।

।। मिश्रकाध्यायः।। (अध्यायः४९)

शृण्वन् हरिकथा[६०]लापं सन्ध्यादि[६१]नियमं चरेत्।

श्वेतवृषभ[६२]दूर्वेभदानतीर्थाम्बुमृत्तिका।।२१।।

धारयित्वा सहोमाज्यवेक्षणं दर्पणेऽपि वा।

नत्वा देवद्विजगुरून् दत्त्वा गां वत्ससंयुताम्।।२२।।

लब्ध्वा तेभ्यः स्वस्ति[६३]वाक्यं [६४]तिथिश्रवणपूर्वकम्।

[६५]कुर्याद्वचांसि भिष[६६]जां [६७]सम्यग्ज्ञाप्य तनुस्थितिम्।।२३।।

शुक्ल[६८]माल्याम्बरधरः सर्वाभरणभूषितः।

भृत्यशिष्याप्तवाक्य[६९]ज्ञां [७०]मन्त्रः पर्यायिकैः सह।।२४।।

---

(६०)व.३-लाप। (६१)व.१-नियमा। (६२)व.३-दूर्वातदान।

(६३)व.१.२,क.-वाकां। (६४)व.३-(लोपः) तिथि।

(६५)क.-कुर्यादवांत्यिभिषजां। (६६)व.३-जी।

(६७)व.२,क.-सम्यर्ज्ञप्य।

(६८)व.२,क.-वस्त्राम्बर। (६९)व.१-ज्ञ।

(७०)व.१.२,क.-मन्त्रिश्च यायिकैः सह।

सभां प्रविश्य [७१]राज्यस्य [७२]वृद्धिं धर्मेण चिन्तयेत्।

ततो मध्याह्निकं कृत्वाग्रेऽ[७३]शनपूर्वकम्।।२५।।

पुत्राद्यैः सह भुञ्जीत शृण्वन् [७४]गाथां हरीशयोः।

[७५]इष्टालापांश्च निर्वर्त्य गजाश्वा[७६]दींश्च वीक्षयेत्।।२६।।

सायं सन्ध्यादिकं कृत्वा [७७]सतां प्राग् विनिवेशयेत्।

ततो राजा विलासिन्यः कुर्यात् सन्ध्यां बलिक्रि[७८]याम्।।२७।।

[७९]तैजसेषु च वा रात्रि[८०]ष्वेकस्मिन्न[८१]पि रात्रिषु।

[८२]तत्तद्राज्यानुसारेण पञ्चस्वपि च सप्तसु।।२८।।

---

(७१)क.,व.३-राज्ञैश्च। (७२)व.३, क.-वृद्धि। (७३)व.१-शर।

(७४)व.१-गाथा। (७५)क.-रष्टालापांश्च, व.२-दुष्ट्वागवां च।

(७६)व.२.३,क.-दीश्च। (७७)व.१.२-सभामुप, व.३-सताप्राग्र।

(७८)व.३-या।(७९)व.१-तेजेशेषु च वा रात्रे।

(८०)क.-ष्टेकस्मिन्न, व.१-ष्वेकस्मिन्न।

(८१)व.१-पर।

(८२)व.३-ततः, व.१-तत्त।

।। मिश्रकाध्यायः।।                (अध्यायः४९)

तेषु कार्यान्यष्टदल[८३]पद्मान्यन्यै[८४]र्विचित्रितैः।

नीराजये[८५]त्तं मन्त्रैश्च सह मङ्गलपाठकैः।।२९।।

पूर्वव[८६]च्चिन्तयेद्राज्यं प्रेषयेद् गुप्तचारकान्।

[८७]अन्तः[८८]पुरं सुप्रविशेन्निय[८९]म्य त्वङ्गरक्षकान्।।३०।।

तासां मनोरथान्कृत्वा [९०]प्राग्वृत्तं समनुस्मरेत्।

एवमायुः श्रियं [९१]स्वर्गकामी प्रतिदिनं चरेत्।।३१।।

भूपते[९२]र्यस्य [९३]यस्याश्वा स एव विजयी रणे।

श्रीमानसावतस्तस्मात् कार्यमश्वादिरक्षणम्।।३२।।

---

(८३)क.-पमान्वन्यै, व.२-एव दलयग्न। (८४)व.३-चित्रितैः, क.-र्विचितैः।

(८५)व.१.२-द। (८६)व.२-न्नयेद्राज्यं।

(८७)व.२,क.-अन्तपुर। (८८)व.२,क.-पुर।

(८९)क.-मं। (९०)क.-प्रावितं, व.२-प्राञ्छतं, व.३-प्राग्वतं।

(९१)व.२-स्वर्गं। (९२) व.२-यस्य, व.३,क.-सन्ति।

(९३)व.२-सन्त्यश्वा।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः४९ )

[९४]सूर्ये स्वात्यर्क्षसम्प्राप्ते [९५]जायन्ते [९६]बहवो रुजः।
यदा यदा रोगजननमश्वानामथवा तथा।।३३।।
स लोकपालरेवन्तपूजाहोमं तु कारयेत्।
भानुवारेऽ[९७]जसङ्क्रान्तावयने विषुवद्द्वये।।३४।।
दिनक्षये व्यतीपाते द्वादश्यामश्वभे तथा।
ऐशान्यामष्टभिर्हस्तैश्चतुर्भि[९८]र्वाथ मण्डपम्।।३५।।
चतुर्द्वारविधानं तु तोरणाद्यैरलङ्कृ[९९]तम्।
तन्मध्ये वेदिकां तस्य पञ्चविंशति[१००]मानतः।।३६।।
मण्डपस्य [१०१]बहिः कुण्डं प्राच्यां पूर्वोक्तलक्षणम्।
वरयेत् [१०२]पूर्ववद् विप्रान् स्वस्तिवाचनपूर्वकम्।।३७।।

---

(९४)क.-सर्व स्वात्यर्क। (९५)क.-जयन्ते।

(९६)व.१-बहवोनिजः, व.२-बहवोनुह्वः। (९७)व.३, क.-च।

(९८)क.-वार्थ, व.३-वाथ। (९९)व.२-ताम्।

(१००)व.१-मांशतः, क.-मांसतः।

(१०१)क.-वह्निः। (१०२)व.३-(अधिकम्)तु।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः ४९ )

सूर्यपुत्रं हया[१०३]रूढं पञ्च[१०४]वक्त्रं [१०५]दशावरम्।

[१०६-१०७]रक्तवर्णाङ्कुशं [१०८]खड्गं [१०९]रैवतं द्विभुजं स्मरेत्।।३८।।

सूर्यपुत्र नमस्तेऽस्तु नमस्ते पञ्चवक्त्रक।

नमो गन्धर्वदेवाय [११०]रैवन्ताय नमो नमः।।३९।।

मन्त्रेणानेन [१११]रेवन्तं गन्ध[११२]वस्त्राक्षतादिभिः।

विधिवद् वेदिकामध्ये [११३]तन्दुलोपरि पूजयेत्।।४०।।

परितः स्वस्वमन्त्रैश्च लोकपालांस्तु पूजयेत्।

प्राग्व[११४]न्मन्त्रजपान् पञ्च [११५]रैवन्तं च समन्ततः।।४१।।[११६]

---

(१०३)व.२–दशा। (१०४)क.–वाकं।

(१०५)व.३–दशां वरम्, व.२–दशाचरम्।

(१०६)व.२–(लोपः) श्लोकः क्र.–३०क–ड। (१०७)व.३–रक्ता।

(१०८)व.२,३.–खड्ग। (१०९)व.३–रैवन्त। (११०)व.२.३–रेवन्ताय।

(१११)क.–रैवन्त। (११२)व.१.२–र्वश्चाक्षता। (११३)व.१.– तण्डुलो।

(११४)व.३–दं मजपान्, व.१–गजयां। (११५)व.१–
रौद्रशाक्तेयवैष्णवाः।

(११६)व.१.–(अधिकम्) सगाणपत्यं सौराश्च रैवन्तस्य समं ततः।।

## ।। मिश्रकाध्यायः ।।  (अध्यायः४९)

ऋग्वेदादीन् यजु(चतु)र्वेदान् जपेद् द्वारेषु पूर्वतः।

पूर्णकुम्भानुक्तवर्णा[११७]न् गन्धवस्त्राद्यलङ्कृता[११८]न्।।४२।।

पञ्चत्वक्पल्लवोपेतान् पञ्चामृतसमन्विताम्।

द्वारेषु स्थाप्य तल्लिङ्गैर्मन्त्रैः कुर्यात्तदर्चनम्।।४३।।

[११९]रेवन्तपूजामाचार्यः कृत्वा गृह्यविधानतः।

संस्थापयेद् व्याहृतिभिस्तस्मिन्कुण्डे हुताशनम्।।४४।।

ततस्तस्याज्यभागान्तमुख्याहुतिम[१२०]तन्द्रितः।

अग्नये स्वाहेति हुत्वा घृतेनादौ प्रयत्नतः।।४५।।

रेवन्तपूजामन्त्रेण वाद्यन्तप्रणवेन च।

पलाशसमि[१२१]दाज्येन पृथगष्टोत्तरं शतम्।

आचार्यो जुहुयाद् व्रीहि[१२२]स्तिलान् व्याहृतिभिस्ततः।।४६।।

---

(११७)क.-वर्णानां च। (११८)व.२-म्।

(११९)क.-रैवन्तं। (१२०)व.१.३,क.-अतिन्द्रितः।

(१२१)व.३-धा।

(१२२)व.३-तिलान्।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः ४९ )

एकरात्रं त्रिरात्रं वा नवरात्रमथाऽपि [१२३]वा।

अनेन विधिना कुर्यादेकभक्तो जितेन्द्रियः ।।४७।।

जपादिपूर्वकं सम्यक् कर्ता पूर्णाहुतिं हुनेत्।

ततो मङ्गलघोषैश्च सुनैवेद्यं समर्पयेत्।।४८।।

ततस्ते हुतशेषेण सह कुम्भोदकेन च।

प्रादक्षिण्यं व्रजन्तोऽ[१२४]श्वान् जपन्तो बलिमुत्तमम्।।४९।।

जीमूतस्ये[१२५]त्यनूवाकान् [१२६]चतुर्दिक्षु विनिक्षिपेत्।

आचार्याय ततो दद्याद् दक्षि[१२७]णा निष्कपञ्चकम्।।५०।।

अर्धं वा तद[१२८]र्धं वा यथा वित्तानुसारतः।

ब्राह्मणेभ्यो [१२९]जापकेभ्यः आचार्याय प्रदापयेत्।।५१।।

---

(१२३)व.२-च। (१२४)व.२-श्च जपन्तो बलि, क.-श्वान्बलिं।

(१२५)व.१-योत्पनूवाकान्, व.३-त्यक्तवाकान्, व.२-ति तु वाकान्।

(१२६)व.२.३, क.-चतुरो दिक्षु विक्षिपेत्। (१२७)व.३-णां।

(१२८)व.१.३-र्द्धं।

(१२९)व.३,क.-याचकेभ्यः।

## ।। मिश्रकाध्यायः ।।            (अध्यायः४९)

पृथक् पृथक् यथाशक्त्या विशिष्टेभ्यः प्रदापयेत्।

ब्राह्मणान्भोजये[१३०]च्छक्त्या शान्तिवाचनपूर्वकम्।।५२।।

एवं यः कुरुते सम्यगश्वशान्तिमनुत्त[१३१]माम्।

रोगेभ्योऽ[१३२]श्वाः प्रमुच्यन्ते [१३३]वर्धन्तेऽ[१३४]श्वा दिने दिने।।५३।।[१३५]

[१३६]इषो सितचतुर्दश्यामिन्दुक्षयदिने तथा।

[१३७]ऊर्जादौ [१३८]स्वातिसंयुक्ते तदा दीपावलि[१३९]र्भवेत्।।५४।।

तैले लक्ष्मीर्जले गङ्गा दीपावलितिथौ वसेत्।

[१४०]अलक्ष्मीः परिहारार्थमभ्यङ्गस्नानमाचरेत्।।५५।।

---

(१३०)व.२-तत्र। (१३१)व.३,क.-मम्। (१३२)व.२-श्व।

(१३३)व.३,क.-वर्धते। (१३४)व.१.२.३-च

(१३५)व.३-(अधिकम्) ।। श्रीः।।

(१३६)व.१-इषे, व.२-इर्ष। (१३७)व.२-कजीदो।

(१३८)क.-स्वानरायुक्ते।

(१३९)व.२-भवेत्।

(१४०)व.१-अलक्ष्मी।

## ।। मिश्रकाध्यायः ।। (अध्यायः४९)

इन्दुक्षयेऽपि सङ्क्रान्तौ वारे [१४१]पातेर्दिनक्षये।

तत्राभ्यङ्गं न दोषाय प्रातः पापापनुत्तये।।५६।।

सिंह[१४२]स्थे भास्करे चन्द्रे रोहिणी सहिताष्टमी।

[१४३]अर्धरात्रियुता यत्र जयन्ती नाम सा तथा।।५७।।

मासि भाद्रपदे [१४४]कृष्णे रोहिणीसहिताष्टमी।

मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठ[१४५]र्क्षसंयुते।

रात्रौ तस्मिन्दिने [१४६]कुर्याज्जेष्ठायाः परिपूजनम्।।५८।।

अर्धरात्रयुतां यत्र [१४७]माघे कृष्णचतुर्दशी।

शिवरा[१४८]त्रिव्रतं तत्र सोऽश्वमेधफलं लभेत्।।५९।।

---

(१४१)क.,व.२-याते। (१४२)क.-स्थभास्कर। (१४३)व.१.३-अर्द्ध।

(१४४)क.,व.२-कृष्ण। (१४५)क.-र्क्षं।

(१४६)व.१.२-कुर्यात् ज्येष्ठायाः।

(१४७)क.-मासे।

(१४८)व.३-त्री।

## ।। मिश्रकाध्यायः ।।            (अध्यायः४९)

आषाढसित[१४९]पञ्चम्यामामं [१५०]प्राश्य उपोषितः।

अर्चये[१५१]त्षण्मुखं [१५२]देवं ऋणरोगविमुक्तये।।६०।।

तथैव कार्त्तिके शुक्ले चतुर्थ्यां नागपूजनम्।

पयः प्रदानात्सर्पेभ्यो भयलोभविमुक्तये।।६१।।

मासि भाद्रपदे [१५३]शुक्ले चतुर्थ्यां गणनायकम्।

पूजयेन्मोदकाहारैः सर्वविघ्नोपशान्तये।।६२।।

माघशुक्ले च सप्तम्यां योऽर्चयेद्भास्क[१५४]रं नरः।

आरोग्यश्रियमाप्नोति रोगी रोगात्प्रमुच्यते।।६३।।

व्यञ्जनोपान[१५५]हच्छत्रदध्यन्नं करपत्रि[१५६]काम्।

वैशाख्यां विप्रमुख्येभ्यो धर्मप्रीत्या प्रयच्छति।।६४।।

---

(१४९)व.१.२-पञ्चम्या।

(१५०)व.२-मासंप्राश्य तु योषितः, क.-भाद्राश्यदुपेषितः।

(१५१)व.२,क.-न्वरामुखं। (१५२)व.३-देवं ऋणरोष, क.-देवं ऋणेरोग।

(१५३)क.-शुक्ल। (१५४)व.२-रत्नतः। (१५५)व.२,क.-हाछत्र।

(१५६)व.३-कम्।

विमानकनकच्छत्र[१५७]चामराप्सरसेवितम्।

दिव्यान्नपान[१५८]सम्पूर्णं स नरः स्वर्गभोगभाक्।।६५।।

[१५९]अश्वयुग्मासि शुक्लायां नवम्यां भक्तितोऽर्चयेत्।

लक्ष्मीं सरस्वतीं [१६०]शक्रं धनवान् [१६१]विजयी भवेत्।।६६।।

कार्त्तिक्यां कृत्तिकायोगे [१६२]चोपोष्य वृषमुत्सृजेत्।

[१६३]स्वर्गभाङ् मुक्तिमाप्नोति [१६४]पुरारिध्वजदर्शनात्।।६७।।

हिमाद्रिविन्ध्ययोर्मध्ये भूमिः सूर्यसुतस्य च।

विन्ध्याद्रिगङ्गयोर्मध्ये या भूमिः सा बुधस्य च।।६८।।

विन्ध्यगोदाव[१६५]रीमध्ये सुरार्चितवसुन्धरा।

गोदावरीकृष्ण[१६६]वेण्योर्मध्ये काव्यवसुन्धरा।।६९।।

---

(१५७)व.२,क.–वामरा। (१५८)व.२,क.–सम्पूर्ण।

(१५९)व.१–अश्वयुग्मास, क.–अश्वयुङ्मासि। (१६०)व.१.२.३–शस्त्रं।

(१६१)व.२,क.–विजयो। (१६२)क.–चोपोत्र्य। (१६३)व.३–स्वर्गभाक्।

(१६४)व.१.२–मुरारि। (१६५)व.२–रि।

(१६६)क.–वेश्यो, व.१.२–वेण्या।

## ।। मिश्रकाध्यायः ।। (अध्यायः४९)

या वेण्यालङ्कयोर्मध्ये धरासुतवसुन्धरा।

समुद्र[१६७]मुद्रितक्षोणी[१६८]नाथौ सूर्य[१६९]निशीश्वरौ।।७०।।

[१७०]यमघण्टां [१७१]तोक्ष्यषु युग्मेषु [१७२]कन्या[१७३]कीटातुलाधरा।

कुलीरमृग[१७४]सिंहाः स्यु[१७५]श्चैत्राद्याः शून्यराशयः।।७१।।

तुलामृगौ प्रतिपदि तृतीया[१७६]यां [१७७]मृगनक्रौ।

पञ्चम्यां बुधराशी द्वौ सप्तम्यां [१७८]चापचन्द्र[१७९]भौ।।७२।।

---

(१६७)क.-(त्रुटितम्-लोपः) लक्षोणी......,

व.२-मुदितः क्षोणि, व.३-मुद्रितक्षोणि।

(१६८)क.-नापौ। (१६९)क.-नीशीश्चरी, व.२-निशाश्वरैः।

(१७०)व.२-यकयौ, व.३-घटीद्यत्यो।

(१७१)व.३-क्ष नृयुग्म, व.२-र्क्षमनृयुग्मे।

(१७२)व.२-युत्यादिटनुलाधरा। (१७३)व.३-कीटतुलाधराः।

(१७४)क.-सिंहाः स्युश्। (१७५)व.२-चैत्राद्याः।

(१७६)व.३-या। (१७७)व.१-मृगार्कजौ, व.३-मृगाङ्कभे।

(१७८)व.२-वा चन्द्रणेन च। (१७९)व.३-भे।

## ।। मिश्रकाध्यायः ।।  (अध्यायः४९)

नवम्यां हरि[१८०]कीटौ [१८१]द्वौ [१८२]चैकादश्यां गुरोर्गृहे।
त्रयोदश्यामन्त्यवृषौ दिनदग्धाश्च राशयः।।७३।।

मासदग्धा दिनदग्धा राशयो वर्जयेच्छुभे।
अष्टमी नवमी चैत्रपक्षयोरुभ[१८३]योरपि।।७४।।

एकादशी च तिथयो मासशून्याश्च पञ्च च।
वैशाखे द्वादशी शून्या पक्षयोरुभयोरपि।।७५।।

[१८४]ज्येष्ठत्रयोदशी शुक्लकृष्णपक्षे चतुर्दशी।
आषाढे कृष्णपक्षेऽपि षष्ठी चैवाथ सप्तमी।।७६।।

श्रावणे च द्वितीया तु तृतीया पक्षयोर्द्वयोः।
[१८५]प्रौष्ठपद्यां सिते पक्षे द्वितीया प्रथमा तथा।।७७।।

---

(१८०)क.–ककौ। (१८१)व.१.–द्वा।

(१८२)व.१.३–वे।

(१८३)व.१–योः पुरा, व.३–योपुरा।

(१८४)व.१.२.३–ज्येष्ठा।

(१८५)व.२,क.–प्रौष्टपद्यं, व.३–प्रौष्टपद्या।

।। मिश्रकाध्यायः।।            (अध्यायः४९)

सिते पक्षे ऽ [१८६]प्याश्वयुजे दशम्येकादशी [१८७]परे।

पक्षे [१८८]चतुर्थी तिथ[१८९]यः पञ्चमी षट् तथैव च।।७८।।

कार्त्तिके मास्यमावा[१९०]स्या सिते पक्षे चतुर्दशी।

पौषमासे पौर्णमासी वामावा[१९१]स्या तथैव च।।७९।।

माघे पक्षद्वयोर्मासे सप्तमी चाष्टमी सिते।

नवमी दशमी चैव शून्याख्यास्तिथयश्च याः।।८०।।

अभुक्तमूलजं [१९२]पित्र्य[१९३]मभुक्तपितृधिष्ण्य[१९४]भम्।

[१९५]पुत्रीमपि त्यजेद् यद्वा [१९६]पितात्यर्थं समाष्टकम्।।८१।।

---

(१८६)व.२,क.-याश्वयुजे, व.१-याप्याश्वयुजां। (१८७)व.१-तथा।

(१८८)व.३-चतुर्थ। (१८९)पु.-यो, क.,व.३-ये।

(१९०)व.१.२-श्या।

(१९१)व.२-श्या। (१९२)व.२-पित्र्यं, व.३-पुत्र।

(१९३)व.२-अभुक्ता, क.-सभुक्त, व.३-मभुक्ता।

(१९४)व.१.३,क.-जम्। (१९५)व.२-पुत्र।

(१९६)व.२,क.-पितात्पर्थं।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः४९ )

[१९७]ज्येष्ठामूलभयोरन्तरा[१९८]लयामोद्भवः शिशुः।

अभुक्तमूलजः सोऽपि [१९९]सार्पपितृभयोरपि।।८२।।

[२००]मूलाद्यपादजौ हन्ति पितरं तु द्वितीय[२०१]जः।

[२०२]मातरं [२०३]स्वतृतीयोऽर्थान्सुहृदं तु तुरीयजः।।८३।।

फलं [२०४]तदेव [२०५]सार्पर्क्षे [२०६]प्रतीपा त्वन्त्यपादजः।

तद्दोषशमनार्थाय शान्तिं कुर्यात्प्रयत्नतः।।८४।।

ईशानभागे पूर्वे वा [२०७]उत्तरे वा स्व[२०८]सद्मनः।

मण्डपं चतुरस्त्रं [२०९]च चतुर्हस्तप्रमाणतः।।८५।।

---

(१९७)व.३,क.–ज्येष्ठ। (१९८)व.२–लं यमोद्भवः। (१९९)क.–सार्ध।

(२००)व.१–मूलाद्यः। (२०१)व.३–जम्। (२०२)व.२–मातरः।

(२०३)व.१–च स्वतृतीयोर्थं। (२०४)क.–तदैव। (२०५)व.१–सार्पर्क्ष।

(२०६)व.३–प्रतीपात्वत्यपादतः,

व.१–प्रतीपात्वं न्यपादतः, व.२–प्रतीपात्वं न्यपादजः।

(२०७)व.२–नुत्तरे। (२०८)क.–स्वराङ्घ्रितः, व.२–स्वसप्तघ्रितः।

(२०९)व.२–(लोपः)च।

## ।। मिश्रकाध्यायः ।।　　　　　(अध्यायः४९)

चतुर्द्वारसमायुक्तं तोरणाद्यैरलं[२१०]कृतम्।

गोमयेन [२११]वानुलिप्ते[२१२]न [२१३]चतुरस्त्रे च मण्डपम्।।८६।।

पूर्वोक्तलक्षणोपेतं कुण्डमीशानतो बहिः।

सुवर्णेन [२१४]प्रमाणेन तदर्धोऽर्धेन वा पुनः।।८७।।

यथा वित्तानुसारेण प्रति[२१५]मां [२१६]निर्ऋतेः सुधीः।

उदुम्बरवटाश्वत्थप्लक्षा[२१७]म्रत्वक् [२१८]सपल्लवम्।।८८।।

शतौषधीमूलशङ्खनवरत्नानि मृत्तिका।

पञ्चामृताम्बुसद्बीजं कुङ्कुमं रोचनं फलम्।।८९।।

---

(२१०)व.२–कृताम्। (२११)व.३–नानु।

(२१२)क.–तु। (२१३)व.१.२–चतुरस्त्रं।

(११४)पु.–प्रमाणैव, व.३,क.–प्रधानेन।

(२१५)व.१–मा।

(२१६)व.१–निर्ऋतः, व.२,क.–निर्ऋते।

(२१७)व.३–क्षत्वक्।

(२१८)व.१.२,क.–पल्लवम्।

## ।। मिश्रकाध्यायः ।।　　　　(अध्यायः४९)

[२१९]कुष्ठं [२२०]मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम्।

[२२१]वचार्कचोरकं [२२२]मुस्ता [२२३]सर्वौषध्यो दशैव हि।।९०।।

गजाश्वरथवल्मी[२२४]कसङ्गमस्थानसम्भवा।

[२२५]क्षुद्रगोरजनगरद्वार [२२६]तश्चाष्टमृत्तिका।।९१।।[२२७]

तिलमाषव्रीहि[२२८]यवा गोधूमानि प्रियङ्गवः।

चणकैः सहिताश्चाष्टौ सद्बीजाख्यानि सर्वदा।।९२।।

---

(२१९)व.१-कुष्टं। (२२०)व.३-मांसं।

(२२१)व.१-वचाचम्पक। (२२२)व.२-मुला।

(२२३)व.२.३,क.-सर्वो। (२२४)व.१-कं।

(२२५)व.३-द्रद, व.१-ह्रद। (२२६)व.१.३-तश्चाष्ट।

(२२७)व.३-(पुनरोक्तिः) श्लोकः क्र.९०क (पञ्चामृताम्बुसद्बीजं.....)

तः श्लोकः क्र.९१ड (..... सर्वोषध्या दशैव हि) पर्यन्तम्।

(२२८)क.-जवा।

।। मिश्रकाध्यायः ।।　　　　(अध्यायः४९)

[२२९]ब्राह्मणाः श्रोत्रियाश्चाष्टौ [२३०]द्वादशास्त्वथ [२३१]षोडश।

ततस्तान्वरयेत्कर्ता स्वस्तिवाचनपूर्वकम्।।९३।।

[२३२]ईशानादिचतुष्कोणे [२३३]कलशान् जलपूरितान्।

पूर्वोक्तद्रव्यसंयुक्तान्स्थापयेद्रक्तवर्णकान्।।९४।।

[२३४]शतच्छिद्रं बृहत्कुम्भं स्थापये[२३५]त्तन्दुलोपरि।

स्थापयेन्मण्डपे मध्ये खड्ग[२३६]चर्माग्रदंष्ट्रि[२३७]णः।।९५।।

मोषुणश्चेति मन्त्रेण निर्ऋतिं [२३८]चार्चयेत्ततः।

शुक्लाक्षताम्बरैः षोडशोपचा[२३९]रांश्च कारयेत्।।९६।।

---

(२२९)व.१–ब्राह्मणान् श्रोत्रियांश्चष्टौ, व.२–ब्राह्मणान् श्रोत्रियान् वाष्टौ।

(२३०)व.१–द्वादशां। (२३१)क.–षोडशः, व.१–षोडशात्।

(२३२)क.–इनादि।

(२३३)व.१–ऽष्टव्रणान् जलपूरितान्, व.२–ष्वजलान्जलपूरितान्,

व.३–ष्वव्रणान् जलपूरितान्।

(२३४)व.१–शता। (२३५)व.३–तण्डुलोपरि। (२३६)क.–वर्माग्र।

(२३७)व.१.२.३–णाम्। (२३८)व.२–वार्चये। (२३९)व.२–रान् च।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः४९ )

दधिमध्वाक्षतैः  कुम्भास्त्वस्त्रैस्तल्लिङ्गमन्त्रकैः।

[२४०]गन्ध[२४१]पुष्पैश्च  धूपाद्यैरर्चयेत्कुश[२४२]पूर्वकैः।

रुद्रेण  क्रमशो  भद्रा  [२४३]अग्निसूक्तेन  भक्तितः।।९७।।

आनो भद्रा  अनेनैव  [२४४]पूर्वसूक्तेन  चार्चयेत्।

प्रसिद्धा  [२४५]रुद्रसूक्त[२४६]स्य  ऋषिच्छन्दोऽधि[२४७]दैवताः।।९८।।

भद्रा  अग्नेश्च  सूक्तस्य  [२४८]आद्यर्चो द्विजगत्यकाः।

ततो  [२४९]दशर्चोऽनुष्टुभ्यो  वाम[२५०]देवोऽग्निदेवताः।।९९।।

---

(२४०)क.-(लोपः) श्लोकः क्र.९८ प्रथमः  पङ्क्तिः (दधिमध्वा...)।

(२४१)व.१-पुष्पैः सुधूपाद्यै। (२४२)व.१-कूर्चकैः।

(२४३)व.१.२-अग्ने। (२४४)व.३-पूर्षसूक्तेन, व.१.२-पुरुषसूक्तेन।

(२४५)व.२-न्रुद्र। (२४६)व.२-ख्य, व.१-श्च।

(२४७)व.१-देवता, व.३-देवताः।

(२४८)व.१-आद्यबोद्धिजगत्यकाः, क.-आद्यबोधिजगत्यका।

(२४९)क.-दशेर्वेति, व.२-दशेर्वोनु, व.३-दशेर्चेति।

(२५०)व.१-देवाग्नि।

## ।। मिश्रकाध्यायः ।।           (अध्यायः४९)

आनो भद्राश्च सूक्तस्या[२५१]द्याः पञ्च सप्त ऋषीन्।

जगत्यश्च विराट् सप्त शेषास्तिस्रस्त्वनुष्टु[२५२]भः।।१००।।

[२५३]रपुगणश्च पुत्र[२५४]श्च [२५५]गौतमश्च [२५६]रवी उभौ।

[२५७]देवताश्च तथा [२५८]विश्वेदेवास्तत्रैव कीर्तिताः।।१०१।।

चतुर्थ[२५९]र्चोऽनुष्टुभः पुरुषसूक्त[२६०]स्य आदितः।

द्वौ [२६१]ऋचौ [२६२]त्रिष्टुभौ ज्ञेयौ ऋषिर्नारायणः स्मृतः।।१०२।।

देवता परमपुरुषः सूक्तं नारायणात्मकम्।

मोषूणस्त्विति मन्त्रस्य ऋषिः पुस्कण्ड[२६३]संज्ञितः।।१०३।।

---

(२५१)व.१.३-द्यः। (२५२)व.३-भाः।

(२५३)व.३-रघुगणश्च, व.१-नारद्यगणय, व.२-नरंद्यगणय।

(२५४)व.१-(लोपः)श्च। (२५५)व.१-स्वर्गेति मश्वेषं।

(२५६)व.३-र्ऋषी। (२५७)व.१-दैवताश्च, क.-देचर्तश्च।

(२५८)व.२.३,क.-विश्वदेवास्। (२५९)व.१-वो।

(२६०)व.३-स्यादितः। (२६१)व.२-हवौ।

(२६२)व.१.२, पु.-नुष्टुभौ। (२६३)व.३-संज्ञिता।

।। मिश्रकाध्यायः ।। (अध्यायः४९)

निर्ऋतिर्देवता तस्य गायत्री[२६४]क्लेश[२६५]मोचनी।

[२६६]यत्सूक्तं यदी[२६७]शश्चोक्तं तदीशा[२६८]चार्यको जपेत्।।१०४।।

मूलं प्रजा[२६९]मीति मन्त्रस्य [२७०]द्वयस्योत्कणको ऋ[२७१]षिः।

निर्ऋतिर्देवता त्रिष्टुप्छन्दो दोषापमोचनी।।१०५।।

[२७२]मूलं प्रजामीत्यष्ट शक्त्याचार्यको [२७३]जपेत्।

दुर्गाश्च ग्रहविघ्ने[२७४]शलोकपालांश्च पूजयेत्।।१०६।।

स्वगृह्योक्तविधानेन कुण्डेऽग्निं स्थापयेत्ततः।

[२७५]प्रजापतये स्वाहेति मखान्ते जुहुयाद्यमम्।।१०७।।

---

(२६४)व.३-(पुनर्लेखनम्)गायत्री।(२६५)व.१.२-मोचिनी।

(२६६)व.१.२-यमुकं। (२६७)व.३-(लोपः) शश्चोक्तं तदी।

(२६८)व.२,क.-वार्जको, व.३-वार्यको।

(२६९)व.२.३-मिति। (२७०)व.२-द्वयं। (२७१)क.,व.२-षि।

(२७२)क.-शूल। (२७३)व.१-यजेत्।

(२७४)क.-न्द्रा।

(२७५)व.३-प्रजापत्यये।

## ।। मिश्रकाध्यायः ।।　　　　(अध्यायः४९)

मूलाय स्वाहा प्रजापतये[२७६]त्युपहोममन्त्रौ।

पलाश [२७७]समिदाज्येन [२७८]त्वनेनाष्टसहस्रकम्।।१०८।।

अथवाष्टोत्तरशतं प्रत्येकं जुहुयात्ततः।

[२७९]मूलं प्रजामित्यष्टभिर्वाकै[२८०]र्मन्त्रद्वयेन [२८१]वा।।१०९।।

सावित्र्यसौम्यनैर्ऋत्यमन्त्रैरश्वत्थसम्भवैः।

समिद्भिश्च तिलव्रीही[२८२]न् हुत्वा व्याहृतिभिस्ततः।।११०।।

पूर्णाहुतिं च जुहुयाज्ज[२८३]पादीनां च पूर्वकम्।

ततो मङ्गलघोषैश्च स्नानकर्म समाचरेत्।।१११।।

आद्य[२८४]पादेऽपितुर्गण्डे [२८५]त्रयाणामभिषेचनम्।

[२८६]इतरत्र शिशोर्मातुरभिषेकं च कारयेत्।।११२।।

---

(२७६)व.३,क.-(अधिकम्)स्वाहा। (२७७)व.३-समिद्याज्येन।

(२७८)व.१.२-तेनैनाष्ट। (२७९)व.१-मूल। (२८०)व.३-र्मन्त्रे।

(२८१)व.३-च। (२८२)व.१-जुहुत्वा। (२८३)व.३-यादिनां।

(२८४)व.३-पाते। (२८५)क.-नृपाणा।

(२८६)व.३-दत्तरत्न।

## ।। मिश्रकाध्याय:।।　　　　( अध्याय:४९ )

[२८७]धारयित्वा [२८८]बृहत्कुम्भं शतच्छिद्रं समाहित:।
अभिषेकं तत: कुर्याद[२८९]नेनैव तु कर्मणा।।११३।।
निर्ऋति: प्रीयतामिति अनेनैव तु वाच[२९०]येत्।
आचार्याय वृषं [२९१]लोहपिण्डं दद्यात्सदक्षि[२९२]णम्।।११४।।
आचार्येभ्यो ब्राह्मणेभ्यो दद्याच्छक्त्या च दक्षिणाम्।।११५।।
श्रोत्रियाय विशिष्टाय ब्राह्मणाय कुटुम्बिने।
वस्त्रालङ्कारसंयु[२९३]क्तां धेनुं दद्यात्पय[२९४]स्विनीम्।।११६।।
ब्राह्मणान् भोजयेत्पश्चाद्व्ययलोभविवर्जित:।
[२९५]एवं य: [२९६]कुरुते [२९७]शान्तिं गण्डदोषात्प्रमुच्यते।।११७।।

---

(२८७)क.-वारयित्वा। (२८८)व.२,क.-बृहद् कुम्भं।

(२८९)व.१.२,क.-नैनैव। (२९०)क.,व.३-रेत्। (२९१)व.२-लोहं।

(२९२)व.२,क.-णाम्। (२९३)व.२-क्त, व.१-क्तं।

(२९४)व.१-श्विनीम्, व.२-स्विनी। (२९५)पु.-(लोप:)एवं य:।

(२९६)क.,पु.,व.२-शान्तिकं।

(२९७)व.२-शान्ति:, व.३,क.-शान्ति।

।। मिश्रकाध्यायः ।।　　　　(अध्यायः४९)

एतत्सर्वं सार्पभेऽपि समानं किञ्चिदुच्यते।

सर्पेभ्यः स्वाहेति मन्त्रं [२९८]मखान्ते जुहुयात्ततः।।११८।।

आश्लेषाभ्यः स्वाहा दन्दशूकेभ्यः स्वाहेत्युपहोमः।

[२९९]मन्त्रौ [३००]सर्पेभ्य इत्यष्टौ [३०१]वाक्यैः कार्यं तु पूर्ववत्।।११९।।

[३०२]तेषामास्तिक ऋषि[३०३]स्त्रिषु सर्पाश्च देवताः।

नमोऽस्तु [३०४]सर्पेभ्यो [३०५]इत्युपचारांश्च कारयेत्।।१२०।।

षष्ठाष्टरिःफगश्चन्द्रः क्रूरैश्च युतवीक्षितः।

जातस्य मृत्युदः [३०६] सद्य अष्ट[३०७]वर्षैः शुभेक्षितः।।१२१।।

---

(२९८)क.–मखन्ति। (२९९)व.१–मन्त्रैः, (३००)व.१.३–(अधिकम्)इदं।

(३०१)क.–वाक्यं। (३०२)व.२–तेषां मास्तीक, क.–तेषामस्तिक।

(३०३)व.१.२–स्त्रिष्टुप्सर्पाश्च, क.–स्त्रिष्टप्सर्पाश्च।

(३०४) व.१.३–सर्पेभ्य।

(३०५)व.२–पयः धाराश्च कारयेत्।

(३०६)व.३–सद्यः, व.२–सप्त।

(३०७)व.१–वर्षे।

## ।। मिश्रकाध्यायः ।।          (अध्यायः४९)

शशिवन्मृत्यु[३०८]दाः सौम्याश्चे[३०९]द्वक्राः क्रूरवीक्षिताः।

शिशोर्जातस्य मासेन [३१०]लग्नसौम्येषु निर्जिते।।१२२।।

यस्य जन्मनि धिष्ण्येषु [३११]सूर्यार्कीन्दुकुजेष्वपि।

[३१२]जातं पितृ[३१३]जनित्री च [३१४]भ्रातापि [३१५]निधनं गतः।।१२३।।

पापेक्षि[३१६]तो युतो [३१७]भौमो [३१८]लग्नगो न शुभेक्षितः।

मृत्युदस्त्वष्टमस्थोऽपि सौरिणार्केण वा युतः।।१२४।।

पापान्वितः [३१९]शशी धर्मद्यून[३२०]लग्नगतो यदि।

शुभैरवीक्षितयुतस्तदा मृत्युप्रदः [३२१] शिशुः।।१२५।।

---

(३०८)व.२.३,क.-दा। (३०९)व.२,क.-वक्रः।

(३१०)व.१-लग्ने, व.३-लग्नात्, क.-लग्ना।

(३११)व.३-सौर्येकेन्दु, व.२-सूर्यार्केन्दु। (३१२)व.३-जातः।

(३१३)क.-नेत्रीक, व.२-निस्त्री च। (३१४)व.२,क.-त्रतापि।

(३१५)क.-निधना। (३१६)व.२-ते। (३१७)क.-सौम्य।

(३१८)व.२-लग्ने। (३१९)व.२-शशि।

(३२०)व.२-लग्ने गता। (३२१)व.१.२-शिशोः।

## ।। मिश्रकाध्याय:।।            (अध्याय:४९)

सन्ध्यायां चन्द्रहोरा[३२२]द्यैर्गण्डान्तं निधनाय वै।

प्रत्येकं चन्द्रपापैश्च केन्द्रगै[३२३]स्तु विनाशद:।।१२६।।

[३२४]आरभ्य मण्डला[३२५]र्धात्तु मानात्सन्ध्या त्रिनाडिका।

तथैवार्धोदयात्पूर्वं प्रात: सन्ध्या त्रिनाडिका।।१२७।।

चक्रे पूर्वापरार्धेषु क्रूरसौम्येषु कीट[३२६]भै:।

[३२७]लग्नगे निधनं याति लग्नस्थाभि[३२८]मुखैरधै:।।१२८।।

लग्नसप्तम[३२९]गौ पापौ चन्द्रोऽपि क्रूरसंयुत:।

यदा त्ववीक्षित: सौम्यै: शीघ्रान्मृत्युर्भवेत्तदा।।१२९।।

[३३०]क्षीणे शशिनि लग्नस्थे पापै: केन्द्राष्टसंस्थितै:।

यो जातो मृत्युमाप्नोति सोऽचिरायुर्न संशय:।।१३०।।

---

(३२२)व.१.२–यां। (३२३)व.१–स।

(३२४)व.१.२–अरि (आरभ्य स्थाने)।

(३२५)व.१–र्द्धास्तत्, व.२–र्द्धास्ता, क.–र्द्धास्त। (३२६)व.१–भे।

(३२७)व.२,क.–लग्ने। (३२८)व.२–मुखे रधै:, क.–मुखै रथै:।

(३२९)व.२–गो। (३३०)व.२–जीर्णे।

## ।। मिश्रकाध्यायः ।।　　　　(अध्यायः ४९)

पापयोर्मध्यगश्चन्द्रो लग्ना[३३१]द्व्धान्त्यसप्तमः।

अचिरान्मृत्युमाप्नोति यो जातः [३३२]स शिशुस्तदा।।१३१।।

पापद्वयमध्यगते लग्ने [३३३] चन्द्रसमाश्रिते।

सप्ताष्टगेन पापेन मात्रा सह मृतः शिशुः।।१३२।।

रवौ पापान्विते ग्रस्ते यदा लग्नं समाश्रिते।

अष्टमस्थेन भौमेन शस्त्रकृन्मरणं तयोः।।१३३।।

शनैश्चरार्कभौमेषु रिःफधर्माष्टमेषु [३३४]च।

शुभैरवीक्ष्यमाणेषु यो जातो निधनं गतः।।१३४।।

पापेक्षितयुतास्त्वेते योगाश्चोक्तफल[३३५]प्रदाः।

सौम्येक्षितयुतास्तेऽपि सर्वथा [३३६]विफलप्रदाः।।१३५।।

एकोऽपि [३३७]ज्ञेज्यशुक्राणां लग्नात्केन्द्रगतो यदि।

अरिष्टं निखिलं हन्ति तिमिरं भास्करो यथा।।१३६।।

---

(३३१)व.१-द्वादश, व.२-द्वाद्वान्त्य। (३३२)क.-(लोपः)स।

(३३३)व.२-चनद्रं, व.१-चन्द्रे। (३३४)व.२-वा। (३३५)व.२-प्रदः।

(३३६)व.२-विफला। (३३७)व.१.२-ज्ञार्य।

## ।। मिश्रकाध्यायः ।। (अध्यायः४९)

एक एव बली जीवो लग्नस्थो रिष्टसञ्च[३३८]यः।

हन्ति पापचयं भक्त्या [३३९]प्रणामः शूलिनो यथा।।१३७।।

एक एव हि लग्नेशः केन्द्रसंस्थो बलान्वितः।

अरिष्टं निखिलं हन्ति पिनाकी त्रिपुरं यथा।।१३८।।

शुक्लपक्षे क्षपाजन्मलग्ने सौम्यनिरीक्षिते।

विपरी[३४०]ते कृष्णपक्षे तथारिष्टविनाश[३४१]नम्।।१३९।।

यस्य जन्मनि तुङ्गस्थाः स्वक्षेत्रस्थापिते ग्रहाः।

चिरायुषं [३४२]शिशुजा[३४३]तं [३४४]कुर्वन्त्यष्टमगा यदि।।१४०।।

दक्षः सुरूपः [३४५]सुभगो मतिमान्भूषणप्रियः।

अङ्गनावल्लभः शूरो नरो जातश्च दस्रभे।।१४१।।

---

(३३८)व.१-यम्। (३३९)व.२.३,क.-प्रणाम। (३४०)पु.-त।

(३४१)नः। (३४२)व.१-शिशुं।

(३४३)व.२-तां।

(३४४)क.-(अधिकम्)तं।

(३४५)व.१.२-शुभगो।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः४९ )

[३४६]कामोपचारकुशलः सत्यवादी दृढ[३४७]व्रतः।

[३४८]लघुभुक्सत्यवान्धीर[३४९]स्त्वरोगो याम्यधिष्ण्यजः।।१४२।।

तेजस्वी [३५०]मतिमान्दान्तो बहुभुक्प्रमदाप्रियः।

[३५१]गम्भीरकुशलो मानी शुचिर्वह्निभसम्भवः।।१४३।।

[३५२]शूरसुस्थिरधीर्मानी भोगभाक्सुरतप्रियः।

[३५३]प्रियवाक् चतुरो दक्षस्तेजस्वी ब्राह्मधिष्ण्यजः।।१४४।।

उत्साही चपलो भीरुर्धनी सामप्रियः शुचिः।

आगमज्ञः शुचिर्विद्वान्पटुः सौम्यर्क्षसम्भ[३५४]वः।।१४५।।

---

(३४६)व.२.३,क.–कामोद्यचार। (३४७)व.२–व्रतम्।

(३४८)व.२–लसुभुक्तु , व.१–लघुभुक्तु। (३४९)व.१–स्त्वरोगी।

(३५०)व.१–सारवान् दाता।

(३५१)व.१–(लोपः)श्लोकः क्र.१४४क तः श्लोकः क्र.१४६ब पर्यन्तम्।

(३५२)व.२–शूरं।

(३५३)व.२–(लोपः)श्लोकः क्र.१४५क पश्चात्त श्लोकः क्र.१४६क पर्यन्तम्।

(३५४)व.२, क.–वम्।

## ।। मिश्रकाध्यायः।।            (अध्यायः४९)

अविचारपरः [३५५]शूरः क्रयविक्रयनैपुणः।

[३५६]गर्वी हिंस्रश्चण्डरतिः कृतघ्नः शिवधिष्ण्यजः।।१४६।।

दुर्मेधावान्दर्शनीयः स्त्रीप[३५७]रः श्लेष्म[३५८]लोचनः।

[३५९]सहिष्णुरल्पसन्तुष्टः शीघ्रगोऽदितिधिष्ण्यजः।।१४७।।

[३६०]सुभगः पण्डितः शूरो [३६१]दयालुर्धार्मिको धनी।

कला[३६२]भिज्ञः सत्यरतः कामी पुष्यर्क्षजोऽलसः।।१४८।।

धूर्तः शूरः क्रूरचेष्टः परदाररतः शठः।

[३६३]अवक्रो व्यसनी दान्तः सार्पनक्षत्रजो नरः।।१४९।।

[३६४]शूरः स्थूलहनुः [३६५]कोपी [३६६]वक्ता क्लेशसहः प्रभुः।

[३६७]सुरगुरावनुरतस्तेजस्वी पितृधिष्ण्यजः।।१५०।।

---

(३५५)व.१.२-(अधिकम्) परः।(३५६)व.१-मर्षी, व.२-मर्या।

(३५७)व.१-र। (३५८)क.-लोटनः। (३५९)व.१-सर्वाहनुरल्प।

(३६०)व.१-शुभगः। (३६१)व.१-क्रिपालु। (३६२)व.१.२-विज्ञः।

(३६३)व.१-आवक्र। (३६४)सूरः। (३६५)क.-कोपि।

(३६६)व.१,क.-वक्रात्केश। (३६७)व.२-सुरगुर्वनरतः, व.१-शूरगुर्वानुरतः।

## ।। मिश्रकाध्यायः ।।            (अध्यायः४९ )

द्युतिमान्नटनो दाता नृपः शास्त्रविशारदः।

कार्याकार्यविचारज्ञः पूर्वाभाग्यर्क्षसम्भवः।।१५१ ।।

जितशत्रुः सुखी भोगी प्रमदामदनः कविः।

कलाभिज्ञः सत्यरतः सुविद्वानर्यमर्क्षजः।।१५२।।

मेधावी तस्करोत्साही परकार्यरतोऽ[३६८]टनः।

परंतपः कार्यकुशलः स्त्रीलोलः सूर्यधिष्ण्यजः।।१५३।।

[३६९]चित्रमाल्याम्बरधरः कामशास्त्रविशारदः।

[३७०]द्युतिमान्धनवान्भोगी पण्डितस्त्वष्ट्र[३७१]धिष्ण्यजः।।१५४।।

धार्मिकः प्रियवा[३७२]क्यार्थः क्रयविक्रयनैपुणः।

कामी [३७३]चरसुतो [३७४]दाता [३७५]विद्यावान्मारुतर्क्षजः।।१५५।।

---

(३६८)व.२,क.–नटः। (३६९)क.–चित्रि।

(३७०)क.–क्रमिमान्। (३७१)क.–जो नरः।

(३७२)व.१–क्यर्थः। (३७३)क.–वरयुतो।

(३७४)व.१–दान्तो, व.२–दान्ते।

(३७५)व.२–विवादोन्।

## ।। मिश्रकाध्यायः ।।            (अध्यायः४९)

अल्प[३७६]सूर्या[३७७]परः [३७८]श्लक्ष्णो [३७९]मायापटुररिन्दपः।

जितेन्द्रियोऽ[३८०]र्थवांल्लुब्धो [३८१]विशाखी ऋक्षसम्भवः।।१५६।।

आढ्यः [३८२]क्षुधानुरटनो विदेश[३८३]स्थोऽङ्गनाप्रियः।

नृपार्चितश्छन्नपापः पिङ्गलो मैत्रधिष्ण्यजः।।१५७।।

बहुव्ययपरः [३८४]क्लेशसहः [३८५]कामी दुरासदः।

क्रूरचेष्टो [३८६]मृषाभाषी धनवान्निन्द्रधिष्ण्यजः।।१५८।।

हिंस्रो मानी धनी भोगी पर[३८७]कार्यप्रतारकः।

[३८८]मिथोऽपचारी स्त्रीलोलः श्लक्ष्णो निर्ऋतिधिष्ण्यजः।।१५९।।

---

(३७६)व.२,क.–सूर्पा। (३७७)क.–पर। (३७८)क.–श्लक्षो।

(३७९)क.–गायोपसि, व.२–प्रायोपमिररिन्दपः।

(३८०)व.२,क.–र्घ। (३८१)व.१.२–विशाखा।

(३८२)व.१.२–क्षुधालु। (३८३)व.२,क.–गता प्रियः।

(३८४)व.१–क्लेशः सहः। (३८५)व.२–कामीदुरामचचचदः।

(३८६)व.२–तृषा। (३८७)व.१–कार्ये। (३८८)व.२–मिथ्यो।

## ।। मिश्रकाध्यायः ।।                (अध्यायः४९)

सुकलत्रः कामचारः कुशलो [३८९]दृढसौहृदः।

[३९०]क्लेशयुग्वीर्यवान्मानी तोयनक्षत्रसम्भवः ।।१६०।।

कृतज्ञो धार्मिकः शूरो बहुमित्रो विनीतवान्।

सुकलत्रः सुपुत्राढ्यो [३९१]वैश्वदेवर्क्षसम्भवः ।।१६१।।

[३९२]उदारः [३९३]वीरः [३९४]श्रुतवान् श्रीमान्वक्ता धनान्वितः।

कार्यकृत्सुरताभिज्ञो धार्मिकः श्रवणर्क्षजः ।।१६२।।

धार्मिको व्यसनी लुब्धो नृत्यगीताङ्गनाप्रियः।

सामैकसाध्यस्तेजस्वी वीर्यवान् वसुधिष्ण्यजः ।।१६३।।

प्रजावान्धार्मिको वक्ता जितशत्रुः सुखी प्रभुः।

स्वसहोत्स्या(त्सा)ग्रजः कामी [३९५]ह्याहिर्बुध्न्यर्क्षसम्भवः ।।१६४।।

---

(३८९)क.-विदृशोद्भिदः, व.२-विदृशोसुहृदः। (३९०)व.१.२-शुक्लेश।

(३९१)व.२,क.-वेश्व। (३९२)क.-दारः, व.१-उदारो।

(३९३)व.२-(लोपः)वीर, व.१-वीरः, क.-पारः।

(३९४)व.१-सुतवान्।

(३९५)व.१-वाहिर्।

## ।। मिश्रकाध्यायः ।।            (अध्यायः४९)

रूपवान्धनवान्भोगी   पण्डितोऽ[३९६]न्यजनार्थभुक्।

कामी [३९७]दुर्गार्चितः शूरः पौष्णजः परदेशगः ।।१६५।।

जन्मभे   जन्मसमये   पापग्रहसमन्विते।

गुणाश्च  निर्गुणाः सर्वे  गुणायुक्ते  गुणाः शुभाः ।।१६६।।

[३९८]स्तेनः स्तेनाधिपो  [३९९]वापि  तच्चि[४००]त्तो  लोलु[४०१]पोऽटनः।

स्त्रीलोलश्चपलो  दक्षो   मानी   च   प्रथमांशजः ।।१६७।।

भोक्ता  शूरः  कार्यदक्षो  सहिष्णुर्वीर्यवान्प्रभुः।

परंतपः  कार्यदक्षो  द्वितीयद्वादशांश[४०२]जः ।।१६८।।

[४०३]पण्डितो  विबुधानीको  मान्यो गुणविभूषणः।

सौभाग्यसत्यसम्पन्नस्तृतीयद्वादशांशजः ।।१६९।।

---

(३९६)व.२-न्यत्यज्ञनार्थभुक्। (३९७)व.२-दुर्गन्धितः।

(३९८)व.२-हस्तेनस्तेनाधिपो। (३९९)व.२-चापि।

(४००)व.१-त्ता। (४०१)व.१.२-पाटनः।

(४०२)व.२-कः।

(४०३)व.१.२-(लोपः)श्लोकः  क्र.-१६९।

## ।। मिश्रकाध्यायः ।।            (अध्यायः४९)

कलत्रधन[४०४]पुत्री च श्रीमान् स्त्रीविजितः सुखी।

भूषणाढ्योऽलसो मानी कर्कटद्वादशांशजः।।१७०।।

नृपो नृपोपमो वापि श्रीमान्भोगी जितेन्द्रियः।

नीतिज्ञः कार्यकुशलो बन्धुद्विट् पञ्चमांशजः।।१७१।।

परकार्येषु निरतः परगाथानुवादकः।

स्त्रीनिर्जितो नटो भोगी चपलो वृश्चिकांशजः।।१७२।।

[४०५]प्रेष्यो[४०६] नटो कलाभिज्ञो स्त्रीलोलो लिपिलेखकः।

कार्यवान् चपलो [४०७]भीरुर्वदान्यो धनुरंशजः।।१७३।।

पापाभिनिरतः पापकर्मणामधिपोऽथवा।

स्त्रीलोलश्चार्थवान्भोगी वक्ता च मकरांशजः।।१७४।।

जीवहिंसा[४०८]परः क्रोधी परदाररतोऽटनः।

बन्धुद्विट् [४०९]हार्यकुशलः कलाभिज्ञो घटांशजः।।१७५।।

---

(४०४)व.१ पुत्रांश्च, व.२-पुत्रान् च। (४०५)व.१-प्रेक्षो।

(४०६)व.१.२-टनः। (४०७)व.१-भीतुर्।

(४०८)व.२-परा। (४०९)व.१-ह्वनु।

## ।। मिश्रकाध्यायः ।।            ( अध्यायः४९ )

धीमान्भोगी कलाभिज्ञः [४१०]श्रीमान्व[४११]क्ताङ्गनाप्रियः।

[४१२]गृहीतवचनः शूरो दाता मीनांशसम्भवः।।१७६।।

रम्यैरेकोनपञ्चाशदध्यायैः कश्यपाह्व[४१३]या।

संहिता निर्मिता सम्यक् कश्यपब्रह्म[४१४]णाह्वया।।१७७।।

[४१६]

[४१५]।। इति श्रीकश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रिकाध्याय एकोनपञ्चाशत्तमः।। ।।४९।।

---

(४१०)व.२–सामान्। (४११)व.१,क.–वक्राङ्गना। (४१२) क.–गृहतं। (४१३)व.१–याः। (४१४)व.१–णोह्वया।

(४१५)व.१–।। आदितः श्लोकः।। इति श्रीमन् कश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रकाध्यायः समाप्तः।।,

व.२–।। आदितः श्लोकः।। इति श्रीमन् कश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रकाध्यायः।।,

क.–इति कश्यपब्रह्मर्षिविरचितायां महासंहितायां मिश्रिकाध्याय समाप्तः।।

(४१६)व.१–शुभमस्तु संवत १७८५ वैशाख पुरुषोत्तम मासे शु.५ गुरौ।, व.२–।। समाप्तः।। १५०१, क.–श्रीरामः शुभम् प्रवीरे ३०।

# तृतीयो विभागः

## द्वितीयं परिशिष्टम्

## ज्योतिषशास्त्रीयग्रन्थेषु कश्यपोक्तश्लोकानां सङ्ग्रहः

# तृतीयो विभागः
# द्वितीयं परिशिष्टम्

## ज्योतिषशास्त्रीयग्रन्थेषु कश्यपोक्तश्लोकानां सङ्ग्रहः

---

**१) अथ बृहत्संहिताया भटोत्पलविवृतौ (उद्धृतकश्यपवचनानि)-**

(भटोत्पलटीका लेखनकालः ख्रि.-१०००समीपे), ग्रन्थकर्ता- आचार्यो वराहमिहिरः। टीकाकर्ता - भटोत्पलः (उत्पलः)। सम्पादकः- अवध विहारि त्रिपाठी, वाराणसी।, प्रकाशकः- डायरेक्टर, रीसर्च इन्स्टीट्युट,वारणसी संस्कृत विश्वविद्यालय, वारणासी। सरस्वती -भवन-ग्रन्थमाला ग्रन्थक्र.-९७। संस्करणम्- प्रथमम्, ख्रि.-१९६८ , शकाब्दः-१८९०।

---

(१) शतं शतं तु वर्षाणामेकैकस्मिन् महर्षयः।

नक्षत्रे निवसन्त्येते ससाध्वीका महातपाः।।

-बृहत्संहिताद्वितीयभागः, भूमिकायाम् पृ. क्र.-१८

पृ. क्र.-४, अ.-१३, श्लोकः क्र.४

(२) अष्टोत्तरं हस्तशतं विस्तारान्नृपमन्दिरम्।

कार्यं प्रधानमन्यानि तथाष्टाष्टानि तानि तु।।

विस्तारं पादसंयुक्तं दैर्घ्यं तेषां प्रकल्पयेत्।

एवं पञ्च नृपः कुर्याद् गृहाणां च पृथक् पृथक्।।

-पृ.-५६८ (अ.-५२,श्लो.-४)

(३) चतुःशालागृहेष्वेवमुच्छ्रायो व्याससम्मितः।

विस्तारं द्विगुणं दैर्घ्यमेकशालयुतस्य च।।

-पृ.-५७१ (अ.-५२,श्लो.-११)

(४) दूर्वावीरणसंयुक्ताः सानूपा मृदुमृत्तिकाः। कृति

तत्र व्यासः शुभा वृक्षाः सुगन्धिफलशाखिनः।।

–पृ.–६५६ (अ.–५४,श्लो.–२)

(५) अशोकचम्पकारिष्टपुन्नागाश्च प्रियङ्गवः।

शिरीषोदुम्बराः श्रेष्ठाः पारिजातकमेव च।।

एते वृक्षाः शुभा ज्ञेयाः प्रथमं तांश्च रोपयेत्।

देवालये तथोद्याने गृहेषूपवनेषु च।।

–पृ.–६५६ (अ.–५४,श्लो.–३)

(६) द्राक्षातिमुक्तको जम्बूबीजपूरकदाडिमाः।

कदलीबहुलाशोकाः काण्डरोप्याश्च वापयेत्।।

अन्येऽपि शाखिनो ये च पुष्पिताः फलितास्तथा।

गोमयेन प्रलिप्ताश्च रोपणीया विवृद्धये।।

–पृ.–६५७ (अ.–५४,श्लो.–४–५)

(७) अजातशाखा ये वृक्षाः शिशिरे तांश्च रोपयेत्।

जातशाखाश्च हेमन्ते रोपणीया विधानतः।।

सुस्कन्धाः शाखिनो ये तान् प्रावृट्काले तु रोपयेत्।।

–पृ.–६५८ (अ.–५४,श्लो.–६)

(८) अन्तरं विंशतिर्हस्ता वृक्षाणामुत्तमं स्मृतम्।

मध्यमं षोडश ज्ञेयमधमं द्वादश स्मृतम्।।

–पृ.–६५९ (अ.–५४,श्लो.–१२)

(९) शाखाविटपपत्रैश्च छायया विहिताश्च ये।

येऽपि पर्णफलैर्हीना रूक्षाः पत्रैश्च पाण्डुरैः।।

शीतोष्णवर्षवाताद्यैर्मूलैर्व्यामिश्रितैरपि।

शाखिनां तु भवेद्रागो द्विपानां लेखनेन च।।

चिकित्सिकेषु कर्तव्या ये च भूयः पुनर्नवाः।

शोधयेत् प्रथमं शस्त्रैः प्रलेपं दापयेत् ततः।।

कर्दमेन विडङ्गैश्च घृतमिश्रैश्च लेपयेत्।

क्षीरतोयेन सेकः स्याद् रोहणं सर्वशाखिनाम्।।

–पृ.–६६० (अ.–५४,श्लो.–१५)

(१०) अजाविङ्कानां द्वौ प्रस्थौ शकृच्चूर्णं च कारयेत्।

तिलानामाढकं दद्यात् सक्तूनां प्रस्थमेव च।।

गोमांसशतमेकं स्याद् द्वे सार्धे सलिलस्य च।

सप्ताहमुषितैरेतैः सेकं दद्याद् वनस्पतेः।।

स भवेत् फलपुष्पैश्च पत्रैश्चाङ्कुरितैर्वृतः।।

–पृ.–६६१ (अ.–५४,श्लो.–१७–१८)

(११) इष्टापूर्तादिभिर्यज्ञैर्यावत् कुर्वन्ति मानवाः।

अग्निष्टोमादिपशुभिरिष्टं यज्ञं प्रकीर्तितम्।।

वापीकूपतडागादिदेवतायतनानि च।

स्वर्गस्थितं सदा कुर्यात् तद्दानं पूर्तसंज्ञितम्।।

देवानामालयः कार्यो द्वयमप्यत्र लभ्यते।।

–पृ.–६६६ (अ.–५५,श्लो.–२)

(१२) हरितोज्ज्वलतोयाढ्या वाप्यः पक्षिभिरावृताः।

वनोपवनमालिन्यो नित्यमुत्फुल्लितद्रुमाः।।

हंसकारण्डवाकीर्णाः कोकिलालापनादिताः।

षट्पदागीतमधुरा नृत्यद्भिः शिखिभिर्युताः।।

तत्र देवा रतिं यान्ति सान्निध्याद् नित्यसंस्थिताः।।

-पृ.-६६८ (अ.-५५,श्लो.-८)

(१३) पुरानुसारप्रासादाः कर्तव्याः शुभलक्षणाः।

नात्युच्चा नातिनीचाश्च समदिक्सूत्रसूत्रिताः।।

चतुःषष्टिं कोष्ठकानां मध्ये च तत्र विन्यसेत्।

द्वारं च मध्यमं श्रेष्ठं समदिक्स्थं प्रशस्यते।।

विस्तारद्विगुणोत्सेधः कटिरंशे तृतीयके।

विस्तारार्धेन तद्गर्भो भित्तयोऽन्यास्तथान्तरे।।

गर्भाच्चतुर्थभागे च द्वारं तद्द्विगुणोच्छ्रितम्।

द्वारोच्छ्रायचतुर्भागो विस्तारः शाखयोः स्मृतः।।

उदुम्बरस्तथैवोक्तः शाखामानेन नित्यशः।

धनत्वं पादमानेन शाखायोश्च प्रकीर्तितम्।।

एकशाखास्त्रिशाखा वा पञ्च सप्त नवापि वा।

द्वारिकास्तत्र शस्यन्ते द्वारिभिर्या अकुण्ठिकाः।।

शाखाचतुर्थभागेऽत्र प्रतिहारौ तु कारयेत्।

प्रमथैर्विहगैश्चैव जीवजीवजलोद्भवैः।।

श्रीवृक्षस्वस्तिकैः पद्मैर्हंसैश्चैव मनोरमैः।

पत्रान्तरे लताशुभैर्ग्रहैर्वैनायकादिभिः।।

देवं सपिण्डिकं स्थाप्यं द्वाराष्टं शोभितं शुभम्।

द्वौ भागौ प्रतिमा कार्या तृतीयाश्चैव पिण्डिका।।

सव्रणद्रोणिकाभागो वामे पार्श्वे विधीयते।

निर्माल्यञ्च निवेद्यं च बलिपूजापमार्जनम्।।

–पृ.–६७०–६७१(अ.–५५,श्लो.–११ तः १६)

(१४) द्वात्रिंशद्धस्तविस्तीर्णं चतुर्द्वारं षडश्रिकम्।

भूमिकास्तत्र कर्तव्या विचित्रकुहरान्विताः।।

द्वादशोपर्युपरिगा वर्तुलाण्डैः समायुताः।

प्रासादो मेरुसंज्ञः स्याद् निर्दिष्टो विश्वकर्मणा।।

–पृ.–६७२ (अ.–५५,श्लो.–२०)

(१५) त्रिंशद्धस्तास्तु विस्तीर्णः प्रासादोऽयं द्वितीयकः।।

–पृ.–६७२(अ.–५५,श्लो.–२१)

(१६) अष्टभौमश्च कैलासो हस्ताष्टाविंशतिः स्मृतः।

षडश्रिः शिखरोपेतः प्रासादस्तु तृतीयकः।।

–पृ.–६७२ (अ.–५५,श्लो.–२१)

(१७) गवाक्षजालसंयुक्तो विमानश्चैकविंशतिः।

षडश्रिरष्टभौमश्च प्रासादः स्याच्चतुर्थकः।।

नन्दनस्तु षडश्रिः स्याद् द्वात्रिंशद्धस्तविस्तृतः।

षड्भौमः षोडशाण्डस्तु प्रासादः पञ्चमो मतः।।

–पृ.–६७३ (अ.–५५,श्लो.–२२)

(१८) वर्तुलस्तु समुद्गः स्यात् पद्मः पद्माकृतिस्तथा।

हस्ताष्टकं तु विस्तीर्णो भूमिका शृङ्गभूषिता।।

–पृ.–६७३ (अ.–५५,श्लो.–२३)

(१९) गरुडो गरुडाकारः पक्षपुच्छविभूषितः।

नन्दी तथाकृतिर्ज्ञेयः पक्षादिरहितः पुनः।।

कराणां षड्चतुष्कास्तु विस्तीर्णौ सप्तभूमिकौ।

दशभिर्द्विगुणैरण्डैर्भूषितौ कारयेत् तु तौ।।

–पृ.–६७३ (अ.–५५,श्लो.–२४)

(२०) कुञ्जरो गजपृ.ाभो हस्ताः षोडश विस्तृतः।

गुहराजो गुहाकारो विष्कम्भात् षोडश स्मृतः।।

त्रिचन्द्रशाला वलभी तयोः कार्या सुलक्षणा।

दशमैकादशावेतौ प्रासादौ द्वौ प्रकीर्तितौ।।

–पृ.–६७४ (अ.–५५,श्लो.–२५)

(२१) वृषो द्वादशाहस्तस्तु समवृत्तैकभूमिकः।

शृङ्गैणैकेन संयुक्तः प्रासादः परिकीर्तितः।।

हंसो हंसाकृतिर्ज्ञेया हस्ता द्वादश विस्तृतः।

एकभूमिकया युक्तः पक्षपुच्छाद्यलङ्कृतः।।

घटः कलशरूपस्तु विस्तीर्णोऽष्टकरः स्मृतः।।

–पृ.–६७४–६७५ (अ.–५५,श्लो.–२६)

(२२) शिखरैर्बहुभियुक्तश्चतुर्द्वारविभूषितः।

रुचिरैश्चन्द्रशालैश्च बहुभिः परिवारितः।।

चतुरस्त्रः पञ्चभौमः षाड्विंशद्धस्तविस्तृतः।

सर्वतोभद्र इत्युक्तः प्रासादो दशपञ्चमः।।

–पृ.–६७५ (अ.–५५,श्लो.–२७)

(२३) सिंहः सिंहसमाक्रान्तः कोणैर्द्वादशभिर्युतः।

विष्कम्भादष्टहस्तः स्यादेका तस्य च भूमिका।।

वृत्तो वृत्ताकृतिः कार्यः संज्ञातुल्यास्तथापरे।

सान्धकारास्तु सर्वे ते भूमिकैकाः समावृताः।।

एकाण्डरूपिताः सर्वे पञ्चभिश्चतुरस्त्रकः।।

–पृ.–६७६ (अ.–५५,श्लो.–२८)

(२४) द्वादशाङ्गुलकं वक्त्रं ललाटं चतुरङ्गुलम्।

नाशा ग्रीवा तु कर्तव्या तुल्या चैतत्प्रमाणतः।।

शङ्खान्तरं ललाटस्य ज्ञेयमष्टाङ्गुलं पृथु।

हनुद्वयं तु चिबुकमङ्गुलद्वितयं स्मृतम्।।

चतुरङ्गुलिकौ कर्णौ भ्रुवावेव तथा स्मृते।

द्व्यङ्गुलं चाक्षिपुटकं तथा नासापुटौ स्मृतौ।।

कर्णस्त्रोतोऽङ्गुलमितं सुकुमारं तथैव च।

अधरोऽङ्गुलमानं तु तदर्धेनोत्तरं स्मृतम्।

चतुरङ्गुलकं वक्त्रं नासाग्रं द्व्यङ्गुलं स्मृतम्।

नेत्रे द्व्यङ्गुलके दीर्घे तत्त्रिभागेन तारकः।।

दृक्तारा पञ्चमांशेन दूषिकाङ्गुलसम्मिता।

द्व्यङ्गुलं चाक्षिपुटकं तथा नासापुटौ स्मृतौ।।

कर्णस्रोतोऽङ्गुलमितं सुकुमारं तथैव च।

गोच्छा चाङ्गुलिका कार्या तत्समा केशरेखिका।।

द्व्यङ्गुलौ तु स्मृतौ शङ्खावायतौ चतुरङ्गुलौ।

चतुर्दशाङ्गुलः शीर्षो द्वात्रिंशत् परिणाहतः।।

एकविंशत् स्मृता ग्रीवा विस्तारात् स्याद् दशाङ्गुला।

ऊरू जङ्घे चतुर्विंशा जानुनी चतुरङ्गुले।।

द्वादशाङ्गुलिकौ पादौ विस्तारात् तु षडङ्गुलौ।

गुल्फादधोभागगतं चतुरङ्गुलमुन्नतम्।

अङ्गुष्ठं त्र्यङ्गुलं दीर्घं पञ्चैव परिणाहतः।।

शेषाः पादानुसारेण परिमाणं प्रकल्पयेत्।

जङ्घाग्रे परिधिर्ज्ञेयो ह्यङ्गुलानि चतुर्दश।।

ऊरू तद्द्विगुणौ प्रोक्तौ कटिस्तत्त्रिगुणा स्मृता।

अङ्गुलं तु भवेन्नाभी वेधगाम्भीर्ययोरपि।।

नाभीमध्ये परीणाहश्चत्वारिंशद्द्विसंयुतः।

षोडश स्तनयोर्मध्यं कक्ष्ये ऊर्ध्वं षडङ्गुले।।

अष्टाङ्गुलौ स्मृतौ स्कन्धौ बाहू विंशच्चतुर्युतौ।

बाहुमूले षोडश स्याद्धस्ताग्रे द्वादश स्मृतः।।

षडङ्गुलं हस्ततलं सप्त दैर्घ्येण च स्मृतम्।

पञ्चाङ्गुला भवेद् मध्या तर्जन्यार्धाङ्गुलोन्नता।।

अनामिका च तत्तुल्या कनिष्ठा चाङ्गुलोन्नता।

सुरूपास्ताश्च कर्तव्या द्विपर्वाङ्गुष्ठिका स्मृता।।

त्रिपर्वाङ्गुलयः शेषा नखाः पर्वार्धविस्तृताः।

देशवेषयुतान् हस्तान् सौम्यरूपांश्च कारयेत्।।

स्वरूपा लक्षणोपेता प्रतिमा वृद्धिदा भवेत्।।

–पृ.–६८७–६८८ (अ.–५७,श्लो.–२९)

(२५) एकदंष्ट्रो गजमुखश्चतुर्बाहुर्विनायकः।

लम्बोदरःस्थूलदेहो नेत्रत्रयविभूषितः।

नवकुवलयकान्तिमक्षमालां कमलकमण्डलुदर्पणाक्षहस्ताम्।

प्रणमतवरयीनपीठापद्मासन सुखितां परमेश्वरीं वितस्ताम्।।

ब्रह्मा चतुर्मुखो दण्डी कृष्णाजिनकमण्डली।

विष्णुश्चतुर्भुजः शार्ङ्गी शङ्खचक्रगदाधरः।।

श्रीवत्साङ्कः पीतवासा वनमालाविभूषितः।

नरसिंहः स्थूलदेहो रोमावर्तविभूषितः।।

उद्घाटिमुखः स्रग्वी वह्निकान्तिर्बृहद्भुजः।

वराहः सूकरमुखश्चतुर्ब्राहुविभूषितः।।

नीलाञ्जनचयप्रखयो ध्यानशक्तः सुलोचनः।

ईश्वरो जटिलस्त्र्यक्षो वृषचन्द्राङ्कभूषितः।।

उरगेन्द्रोपवीती च कृत्तिवासाः पिनाकधृक्।

चण्डिकाष्टादशभुजा सर्वप्रहरणान्विता।।

त्र्यक्षा सिंहरथा धन्या महिषासुरसूदिनी।

मयूरवाहनः स्कन्दः शक्तिकुक्कुटधारकः।।

सुरूपदेहो विक्रान्तो देवः सेनापतिः शिशुः।

आदित्यस्तरुणः स्रग्वी कवची खड्गधृक् तथा।।

तेजस्वी पङ्कजकरः षड्गर्वश्च किरीटवान्।

ऐरावतश्चतुर्दन्तः श्वेतगात्रो महागजः।।

तदारूढो महेन्द्रस्तु वज्रहस्तो महाबलः।

तिर्यग्ललाटगं नेत्रं तृतीयं तस्य कारयेत्।।

नीललोहितवर्णा च शची तस्य समीपगा।

एवं देवगणाः सर्वे स्वायुधाभरणोज्ज्वलाः।।

कर्तव्याः स्वस्वरूपाश्च सम्पूर्णाः शुभलक्षणाः।

हस्तमात्रा भवेत् सौम्या द्विहस्तान्नधनप्रदा।।

सुभिक्षक्षेमदा पुण्या त्रिहस्ता तु चतुष्करा।

वैकल्यं कुरुते हीना कृशाङ्गी देहनाशिनी।।

मरणं सक्षतायां तु सुदीर्घा वित्तनाशिनी।

वामे मता हन्ति पत्नीं कर्तुर्दक्षिणभागगा।।

ऊर्ध्वदृष्टिर्नेत्ररोगं गोकर्णा स्यादधोमुखी।

सुरूपा सुप्रभागैव सर्वाभरणभूषिता।।

स्वायुधैश्च समायुक्ता कर्तव्या प्रतिमा शुभा।

–पृ.–६९५–६९६ (अ.–५८,श्लो.–५७)

(२६) सुरदारुः शमीवृक्षो मधूकश्चन्दनस्तथा।

प्रतिष्ठार्थं ब्राह्मणानामेते प्रोक्ताः शुभावहाः।।

अरिष्टाश्वत्थखदिरब्ल्विाः क्षत्रियजातिषु।

जीवकः खदिरश्चैव सिन्धुकः स्यन्दनस्तथा।।

वैश्यानां शुभदाः प्रोक्तास्तिन्दुकः केसरस्तथा।

सर्जार्जुनाम्रशालाश्च शूद्राणां शुभदाः स्मृताः।।

–पृ.–६९८ (अ.–५८,श्लो.–५७)

(२७) वृक्षवत् प्रतिमा कार्या प्राग्भागाद्युपलक्षिता।

पादाः पादेषु कर्तव्याः शीर्षमूर्ध्वे तु कारयेत्।।

–पृ.–६९८ (अ.–५८,श्लो.–७)

(२८) यार्चा मृद्दारुसम्भूता सायुःश्रीबलदा मता।

सौवर्णी पुष्टिदा ज्ञेया रत्नजा हितकारिणी।।

राजती कीर्तिदा ज्ञेया ताम्रजा जनवर्धिनी।

महत् करोति भूलाभं यार्चा पाषाणनिर्मिता।।

–पृ.–७०२ (अ.–५९,श्लो.–४–५)

(२९) यार्चा शङ्कुहता सा तु प्रधानकुलनाशिनी।

छिद्रेणोपहता या तु बहुदोषकरी मता।।

–पृ.–६८७–६८८ (अ.–५७,श्लो.–२९)

(३०) अनुरागास्थिता रक्ता विरक्ता वेशमानिनी।

मनोदृष्टिनिबद्धेन हृदयेनाकुलीकृता।।

आकारलिङ्गभेदैश्च ज्ञायते याऽनुरागिणी।

विक्षिप्तमन्यचित्तत्वं गुरुगेहेऽप्यगोपनम्।।

आह्लादनं च शब्देन यस्या सा रागरञ्जिता।

अतोऽपरा तु या नारी सा विरक्तेति कीर्तिता।।

–पृ.–८५३ (अ.–७७,श्लो.–३)

(३१) दृष्टिनिक्षेपते तत्र मनसाऽपि विचिन्तयेत्।

मूलैर्न रक्षते सा तु चित्रं चित्रपटे यथा।।

अकस्मात् पुरतो भूत्वा कञ्चिदाश्लिषति भृशम्।

ऊरू नितम्बे नाभिश्च भूषणानि पयोधरौ।।

करजैरुत्किरेन्नाभिमनुरागेण रञ्जिताम्।

जृम्भते ष्ठीवतेऽत्यर्थं वाग्दुष्टानि ददाति सा।।

कुमारालिङ्गनं चैव दशनैरधरं दशेत्।

एभिर्विकारैर्विज्ञेया मदनार्त्ता तु कन्यका।।

दर्शनाद्धृष्यते या तु मित्रपक्षं च पूजयेत्।

स्मितं पराङ्मुखं पश्येद् गुणाश्चैवानुकीर्तयेत्।।

–पृ.–८५४ (अ.–७७,श्लो.–४–५)

(३२) दृष्ट्वा न दृश्यते मूढा स्पृष्ट्वा दुर्वचनं वदेत्।

रतिकालावगूढा तु चुम्बिनी मार्जयेन्मुखम्।।

सुप्ता विबुध्यते पश्चाच्छयने तु पराङ्मुखी।

विरक्ता सा स्मृता नारी वर्जनीया प्रयत्नतः।।

–पृ.–८५५(अ.–७७,श्लो.–७–८)

(३३) दुष्टसङ्गरता या तु सा क्षिप्रं नाशयेत् कुलम्।

तीर्थयात्राटनं भेदे परवेश्मसमागमम्।।

देवालये रात्र्यटनं परस्परविलासिभिः।

पितृवेश्मनिवासं च न श्रेयः स्वामिना विना।।

घृतकुम्भोपमा नारी पुरुषं वह्विवर्चसम्।

संश्लेषाद् द्रवते कुम्भस्तद्वत् स्त्री पुंसि भाविता।।

निर्जने तु विविक्ताङ्गं या स्त्री पुरुषमीक्षते।

तस्याः प्रस्विद्यते गुह्यमनुग्राह्येच्छयान्विता।।

–पृ.–८५६ (अ.–७७,श्लो.–११)

(३४) निर्जने तु विविक्ताङ्गं या स्त्री पुरुषमीक्षते।

तस्याः प्रस्विद्यते गुह्यमनुग्राह्येच्छयान्विता।।

परस्परमनोरामै रमयित्वा मनः स्त्रियाः।

गर्भं सम्भरते श्रेष्ठं सुभगं दीर्घजीवितम्।।

दुर्मनस्थौ विरक्तौ च भवेतां सङ्गमे यदि।

तदा विरूपाश्चाल्पायुर्मुक्ताङ्गो दुःखितो भवेत्।।

–पृ.–८५९ (अ.–७७,श्लो.–१५)

(३५) नैव दारुणता तस्याः सज्वालायाः स्वभावतः।

लालायाः साग्निकं वक्तमतः सा शुभदा शिवा।।

–पृ.–९५८ (अ.–८९,श्लो.–७)

(३६) उलूककङ्कप्लवगा गृध्रश्येनादयश्च ये।

मांसाशिनश्च विहगास्तुल्या वायसचेष्टितैः।।

–पृ.–९८८ (अ.–९४,श्लो.–४८)

(३७) क्रोशादनन्तरं यत् स्याच्छुभं वा यदि वाऽशुभम्।

निष्फलं तच्च विज्ञेयं शकुनानां विचेष्टितम्।।

–पृ.–९९३ (अ.–९४,श्लो.–६२)

(३८) सव्यगे तु सुभिक्षं स्यादपसव्ये तु तस्कराः।

लीढे प्रजाः प्रहृष्टाः स्युर्ग्रसनं लोकनाशनम्।।

निरोधे जनहर्षः स्यादारोहे नृपसंक्षयः।

आमर्दितं चापमर्दे स्वयं क्षुभयन्ति पार्थिवाः।।

स्वच्छं वर्णप्रदेशं यदाघ्रातं तद्विघातयेत।

मध्ये तमसि सन्दृष्टे पीडयेद् मध्यदेशजान्।।

दृष्टे तमसि पर्यन्ते सस्यनामीतिजं भयम्।

–पृ.–१३९ (अ.–५,श्लो.–५२)

(३९) दक्षिणो हनुभेदः स्याच्चाग्नेय्यां यदि गच्छति।

सस्यनाशं च कुरुते नृपभङ्गं सुदारुणम्।।

–पृ.–१४९ (अ.–५,श्लो.–८२)

(४०) पूर्वोत्तरेऽपरो भेदो नृपपुत्रभयप्रदः।

–पृ.–१४९ (अ.–५,श्लो.–८३)

(४१) दक्षिणः कुक्षिभेदः स्याद्वामे मोक्षो भवेद्यदि।

राजपुत्रभयं तत्र दक्षिणाशाद्विषां वधः।।

–पृ.–१५० (अ.–५,श्लो.–८४)

(४२) सौम्यायां तु यदा मोक्षो वामकुक्षिविभेदतः।

स्त्रीणां गर्भविनाशाय सौम्याशाधिपतेर्वधः।।

–पृ.–१५० (अ.–५,श्लो.–८५)

(४३) पायुभेदगते राहौ वायवीनैर्ऋताशयोः।

गुह्यरोगभयं विन्द्याद्वामे राज्ञीभयं तथा।।

–पृ.–१५० (अ.–५,श्लो.–८६)

(४४) ग्रासमोक्षौ यदापूर्वे छर्दनं तु तदा भवेत्।

क्षेमहार्दिप्रदं ज्ञेयं सस्यनिष्पत्तिकारकम्।।

–पृ.–१५१ (अ.–५,श्लो.–८७)

(४५) पूर्वेण ग्रसते राहुरपरस्यां विमुञ्चति।

क्षत्तस्करभयं तत्र मोक्षस्तु जरणं स्मृतम।।

–पृ.–१५१(अ.–५,श्लो.–८८)

(४६) यदा प्रकाशो मध्ये स्याद् दुर्भिक्षमरणं तदा।

–पृ.–१५१ (अ.–५,श्लो.–८९)

(४७) पर्यन्ते विमलत्वं स्यात्तमो मध्ये यदा भवेत्।

मध्याख्यदेशनाशः स्याच्छरत्सस्यं विनश्यति।

–पृ.–१५२(अ.–५,श्लो.–९०)

(४८) नाकस्माद्दर्शनं याति विनोत्पातेन सोमजः।

भयवातातपहिमैरर्घवृद्धिक्षयादिभिः।।

–पृ.–१६१ (अ.–७,श्लो.–१)

(४९) रोहिणीं वैश्वदेवं च सौम्यवैष्णववासवान्।

शशिजश्च यदा हन्ति प्रजा रोगैश्च पीडयेत्।।

–पृ.–१६२ (अ.–७,श्लो.–२)

(५०) रौद्रादीनि यदा पञ्चनक्षत्राणीन्दुनन्दनः।

भिनत्ति शस्त्रदुर्भिक्षव्याधिभिः पीड्यते जगत्।।

–पृ.–१६२ (अ.–७,श्लो.–३)

(५१) हस्तादीनि चरन् षड् वै नक्षत्राणीन्दुनन्दनः।

गवामशुभदः प्रोक्तः सुभिक्षक्षेमकारकः।।

–पृ.–१६२ (अ.–७,श्लो.–४)

(५२) भरणी कृत्तिकार्यम्णमहिर्बुध्नं च चन्द्रजः।

चरन् धातुविनाशाय प्राणिनां परिकीर्तितः।।

–पृ.–१६३ (अ.–७,श्लो.–५)

(५३) रेवतीं वारुणं मूलमश्विनीं चोपमर्दयन्।

बुधो वणिग्भिषग्वाहान् जलोत्थांश्च विनाशयत्।।

–पृ.–१६३ (अ.–७,श्लो.–६)

(५४) पूर्वात्रये चरन् सौम्यो भेदं कृत्वा यदि व्रजेत्।

क्षुच्छस्त्रतस्करभयैः करोति प्रणिनां वधम्।।

–पृ.–१६४(अ.–७,श्लो.–७)

(५५) चत्वारिंशत्तथा त्रिंशद्दिनानि द्वौ च विंशतिः।

अष्टादशार्द्धमासं च दश चैकयुतानि च।।

नव च प्राकृताद्यासु सोमजस्तूदितस्तथा।

अस्तं गतः सर्वकालं तिष्ठतीति विनिश्चयः।।

–पृ.–१६६ (अ.–७,श्लो.–१२–१३)

(५६) शनैशचरस्य सूर्यस्य यदृक्षं भोगमागतम्।

धरित्रीतनयेनापि भिन्नं वक्रप्रदूषितम्।।

राहुग्रस्तमथोल्काभिर्हतमुत्पातदूषितम्।

चन्द्रेण पीडितं यच्च प्रकृतेरन्यथास्थितम्।।

तच्चोपहतकं  विन्द्यान्नक्षत्रं हन्ति सर्वदा।

स्ववर्गमन्यथा नित्यं पुष्णाति निरुपद्रवम्।।

–पृ.–२७६ (अ.–१५,श्लो.–३१–३२)

(५७) सितादौ मार्गशीर्षस्य प्रतिपद्दिवसे तथा।

पूर्वाषाढागते चन्द्रे गर्भाणां धारणं भवेत।।

–पृ.–३१९(अ.–२१,श्लो.–६)

(५८) प्रवर्षणे यथा देशं वर्षणं यदि वृश्यते।

वर्षाकालं समासाद्य वासवो बहु वर्षति।।

–पृ.–३३६ (अ.–२३,श्लो.–४)

(५९) अनागतमतीतं वा ग्रहणे पर्व दृश्यते।

गर्भस्रावमनावृष्टिं फलं पुष्पं विनश्यति।।

–पृ.–१२५ (अ.–५,श्लो.–२४)

(६०) चन्द्रार्कयोरेकमासे ग्रहणं न प्रशस्यते।

परस्परं वधं कुर्युः स्वबलक्षुभिता नृपाः।।

–पृ.–१२६(अ.–५,श्लो.–२६)

(६१) उदितास्तमितौ ग्रस्तौ सर्वसस्यक्षयङ्करौ।

सर्वग्रस्तौ यदा पश्येद्दुर्भिक्षं तत्र जायते।।

प्रथमांशे विप्रपीडा क्षत्रियाणां द्वितीयके।

शूद्राणां च तृतीयेंऽशे चतुर्थे मध्यदेशिनाम्।।

वैश्यानां पञ्चमे खांशे षष्ठांशे प्रमदाभयम्।

दस्युप्रत्यन्तकम्लेच्छविनाशः सप्तमांशके।।

येषामंशे भवेन्मोक्षस्तज्जातानां शुभं भवेत।

-पृ.-१३०(अ.-५,श्लो.-२८-३१)

(६२) सौम्यायामागतो विप्रान् पूर्वस्यां क्षत्रजातय:।

वैश्यान् दक्षिणतो राहुर्हन्ति पश्चिमतोऽपरान्।।

-पृ.-१३१ (अ.-५,श्लो.-३२-३४)

(६३) पूर्वे सलिलघाती स्यात् पश्चाद्धान्यकृषीवलान्।

याम्ये जलचरान् हन्ति सौम्ये गोनाशक: स्मृत:।।

म्लेच्छान् यायिनृपान् हन्ति विदिक्स्थ: सिंहिकासुत:।।

-पृ.-१३२ (अ.-५,श्लो.-३२-३४)

(६४) संवत्सरे युगे चैव षष्ट्यब्देऽङ्गिरस: सुत:।

यन्नक्षत्रोदयं कुर्यात्तत्संज्ञं वत्सरं विदु:।।

-पृ.-१७१ (अ.-८,श्लो.-१)

(६५) कार्तिकादिसभा ज्ञेया द्विनक्षत्रविचारिणा।

त्रिभं भाद्रपदे ज्ञेयं फाल्गुने श्रावणे तथा।।

-पृ.-१७५ (अ.-८,श्लो.-२)

(६६) कृत्तिका रोहिणी चोभे संवत्सरतनु: स्मृता।

अषाढाद्वितयं नाभी सार्पं हृत्कुसुमं मघा।।

कूरग्रहहते देहे दुर्भिक्षानलमारुता।

क्षुद्भयं तु भवेन्नाभ्यां पुष्पे मूलफलक्षय:।।

हृदये सस्यहानि: स्यात् सौम्यै: पुष्टि: प्रकीर्तिता।।

-पृ.-१८२(अ.-८,श्लो.-१९)

(६७) त्रिष्वश्विन्यादिषु यदा चरति भृगुनन्दनः।

नागवीथीति सा ज्ञेया प्रथमान्या निबोधत।।

रोहिण्यादिगजा ज्ञेयाऽदित्याद्यैरावती स्मृता।

मघाद्या वृषभा ज्ञेया हस्ताद्या गौः प्रकीर्तिता।।

जारद्गवी विशाखाद्या मूलाद्या मृगवीथिका।

अजवीथी विष्णुभाद्याऽजाद्या तु दहना स्मृता।।

–पृ.–१९५(अ.–९,श्लो.–१)

(६८) नक्षत्राणां त्रयो मार्गा दक्षिणोत्तरमध्यमाः।

उदक्स्थास्तारकाः सौम्यो मध्यमो मध्यमाः स्मृतः।।

दक्षिणा दक्षिणो मार्गो नक्षत्रेषु प्रकीर्तितः।

नक्षत्रात् सौम्यगः सौम्यमार्गस्थो ग्रह उच्यते।।

दक्षिणे दक्षिणो मार्गो मध्ये मध्य इति स्मृतः।

–पृ.–१९८(अ.–९,श्लो.–५)

(६९) भेदयेत् कृत्तिकां शुक्रो बहुतोयं विमुञ्चति।

रोहिण्यां मरणं घोरं गृध्राकुलभयाकुलम्।।

मृगे तु सर्वसस्यानां क्षयं कुर्याद् भृगोः सुतः।

आर्द्रासु च कलिङ्गानां कोशलानां भयावहः।।

पुनर्वसौ विदर्भाणां पीडयत्युशनास्तथा।

पुष्ये पुष्टिं समायान्ति जनाः सस्यानि वृष्टयः।।

आश्लेषासूशना भेदात् पीडयेत् भूजगैः प्रजाः।

मघाभेदकरः शुक्रो महामात्रांश्च पीडयेत्।।

भाग्ये शबरविध्वंसं बहुवृष्टिं प्रमुञ्चति।

आर्यम्णे तु कुरुक्षेत्रं पाञ्चालांश्चोपतापयेत्।।

हस्ते चित्रकरणां तु पीडा वृष्टिक्षयो भवेत्।

सुवृष्टिं कूपकृत्पीडां चित्राभेदं यदा व्रजेत्।।

स्वातिभेदे सुवृष्टिं च वणिग्नाविकभीतिदः।

विशाखायां सुवृष्टिं च मैत्रे मित्रं विरुध्यति।।

ऐन्द्रे पौरविरोधः स्यान्मूले तु भिषजां भयम्।

आप्ये वैश्वे व्याधिभयं वैष्णवे कर्णवेदना।।

धनिष्ठासु कुकर्मस्थान् वारुणे शौण्डिकक्षयम्।

प्रोष्ठपादे पूर्वसक्तानहिर्बुध्न्ये फलक्षयः।।

यायिनां सनृपणां च पौष्णे ज्ञेयं महद्भयम्।

अश्विन्यां हयपीडाकृद् भरण्यां कृषिजीविनाम्।

–पृ.–२०७–२०८(अ.–९,श्लो.–३५)

(७०) कृष्णपक्षे ह्यमावास्या चतुर्दश्यष्टमीषु च।

उदयं भार्गवः कुर्यात्तदा वृष्टिं प्रमुञ्चति।।

–पृ.–२०८(अ.–९,श्लो.–३६)

(७१) प्रागार्द्धं नर्मदायाश्च शोणः शबरमागधाः।

उड्रा वङ्गा कलिङ्गाश्च वाह्लीका यवनाः शकाः।।

काम्बोजा मेकलाः सुह्माः प्राग्ज्योतिषकिरातकाः।

चीनाः सर्वे सुशैलेयाः पार्वता बहिरन्तजाः।।

यमुनाया याम्यकूलं कौशाम्ब्यौदुम्बराणि च।

विन्ध्यारवी च पुण्ड्राश्च वर्द्धमानाश्च पर्वता:।।

श्रीपर्वतश्चेदिपुरं गोलाङ्गूलं तथैव च।

इक्षुमत्याश्रिता ये च जना: शूरा: मदोत्कटा:।।

कान्तारमथ गोपाश्च कन्दरास्तस्करास्तथा।

समरे विषमा: शूरास्तरव: कटुका अपि।।

चतुष्पदा भेषजं च धान्यं वा भिषजस्तथा।

अरण्यवासिव्यालाश्च कार्षका बालकास्तथा।।

गौरपत्यं च किञ्जल्कं पुंसंज्ञा ये च जन्तव:।

सर्वेषां भास्कर: स्वामी तेजस्तेजस्विनामपि।।

–पृ.–२७८(अ.–१६,श्लो.–१–५)

(७२) पर्वता जलदुर्गाश्च कोशलास्तङ्गणा हला:।

स्त्रीराज्यं भरुकच्छश्च तुषारा वनवासिन:।।

मौक्तिकं मणिशङ्खाब्जमौषधं कुसुमं फलम्।

द्वीपा महार्णवे ये च मधुरा लवणादय:।।

गोधूमा: शालय: शृङ्गिकार्षकाश्च यवा अपि।

सोमपा ब्राह्मणा ये च यज्ञज्ञास्तु सुरासवम्।।

स्त्रीसौभाग्यसमेताश्च लास्यहास्येक्षितानि च।

निशाचराधिपश्चन्द्रो हृष्टानां च प्रकीर्तित:।।

–पृ.–२७९(अ.–१६,श्लो.–६–८)

(७३) महेन्द्रविन्ध्यमलया: सिप्रा वेणा महानदी।

गोदावर्या नर्मदाया भीमाया: पश्चिमा दिश:।।

चेदिकाः कौङ्कणा दुर्गा द्रविडा वेत्रवन्नदी।

मन्दाकिनी पयोष्णी च मालती सिन्धुपारकाः।।

पाण्ड्याश्योत्तरदेशस्था विदेहान्ध्राश्मकास्तथा।

भासापराः कुन्तलाश्च केरला दण्डकास्तथा।।

नागराः पौरवाश्चैव कार्षकाः शस्त्रवृत्तयः।

हुताशनाजीविनो ये कुञ्जराः पशुपास्तथा।।

सांग्रमिका नृशंसाश्च सङ्कराश्चोपघातकाः।

कुमारा भूमिजस्योक्ता दाम्भिकास्तस्करास्तथा।।

-पृ.-२८०-२८१(अ.-१६,श्लो.-९-१४)

(७४) चित्रकूटगिरी रम्यो हिमवान् कौशिकी तथा।

मथूरायाश्च पूर्वार्द्धं लोहित्यः सिन्धुरेव च।।

गाम्भीरिका च सरयू रथाख्या गण्डकी नदी।

गान्धर्वा लेखहाराश्च तथोदाराश्च कृत्रिमाः।।

वैदेहाः सर्वजलजाः काम्बोजाश्च सुराष्ट्रिकाः।

गन्धयुक्तिविदो ये च सौगन्धिपदलेपनाः।।

सुवर्णरजतं रत्नं मातङ्गतुरगादि यत्।

पौरा जनपदाः सौम्याः सोमपुत्रवशे स्थिताः।।

-पृ.-२८२(अ.-१६,श्लो.-१५-१९)

(७५) त्रैगर्तसिन्धुसौवीराः शतद्रूमथूरे अपि।

स्रुध्वोदीच्यविपाशाश्च पारताम्बष्ठकास्तथा।।

राजा पुरोहितो मन्त्री माङ्गल्यं पौष्टिकं व्रतम्।

कारुण्यं कर्मसिद्धानां विद्याशोचतपस्विनाम्।।

मत्स्याश्च वाटधानाश्च यौधेयाश्चार्जुनायना:।

सारस्वतजाश्च रमठा हस्त्यश्वध्वजचामरा:।।

शब्दार्थविदुष: पौर नीतिज्ञा शीलसंयुता:।

मांसीतगरकुष्ठं च शैलेयं लवणं रसा:।।

मधुरस्वादवल्लीजं विप्राणां चाधिपो गुरु:।।

–पृ.–२८३(अ.–१६,श्लो.–२०–२४)

(७६) चन्द्रभागां वितस्तां चैरावतीं च पिबन्ति ये।

पुष्करावतकैकेया गान्धारप्रस्थलास्तथा।।

दशार्णा मालवास्तक्षशिला मौक्तिकमेव च।

धनाढ्या: कुञ्चरा अश्वा: प्रस्थलं च विलेपनम्।।

सुरूपसुभगोद्यानकामुका: कामचारिण:।

वेसरा मधुरा हृद्या: सलिलाशयजीविन:।।

तरुणा योषित: क्रीडाविदुषो जनगोष्ठिका:।

चित्राण्डजाश्च कौशेयं पत्रौर्णं काशिकौशिका:।।

पिप्पल्यश्चन्दनं जातीफलमामलकानि च।

गन्धपत्रस्य लोघ्रस्य शुक्रश्चाधिपति: स्मृत:।।

–पृ.–२८५(अ.–१६,श्लो.–२५–२९)

(७७) अर्बुदो रैवतगिरि: सौराष्ट्राभीरकास्तथा।

सरस्वतीपश्चिमाशा प्रभासं कुरुजाङ्गलम्।।

आनर्तशूद्रा विदिशा खलतैलिकनीचका:।

वेदस्मृती सौकरिका: मलिनश्च महीतरम्।।

दु:शीलशाकुना हीना: पशुबन्धनकास्तथा।

पाखण्डिनश्च वैतण्डा निर्ग्रन्था: शबरा: कृशा:।।

विरूपा: कटुतिक्तानि रसायनविषादिन:।

पुलिन्दास्तस्करा: सर्पा महिषोष्ट्रखरा: शुनी।।

चणका वातला वल्ला: पुंस्त्वसत्त्वविवर्जिता:।

काकगृध्रशृगालानां वृकाणां च प्रभु: शनि:।।

–पृ.–२८६(अ.–१६,श्लो.–३०–३३)

(७८) बुभुक्षितास्तीक्ष्णरेषा विभिन्ना: कुलपांसना:।

नीचा म्लेच्छोत्सादकाश्च गर्तस्था: पारदारिका:।।

सत्यधर्मविहीनाश्च गिरिस्था: कन्दराश्रिता:।

प्रतापसत्यहीनाश्च शृगालादा महाशना:।।

तिलाश्च बाहुयुद्धज्ञा माषाश्चौरा: खराश्चरा:।

यज्ञान् हिंसन्ति ते नित्यं राहुस्तेषामधीश्वर:।।

–पृ.–२८७(अ.–१६,श्लो.–३४–३६)

(७९) प्राकाराभ्युच्छ्रिता: शृङ्गगिरिस्था विजिगीषव:।

प्रत्यन्तवासाभिरता: परच्छिद्रविशारदा:।।

मूर्खा विज्ञानहीनाश्च निर्मर्यादा नरास्तथा।

परदाररता नीचा: केतोरिति विनिर्दिशेत्।।

–पृ.–२८७(अ.–१६,श्लो.–३७–३८)

(८०) सर्वग्रहेभ्य: शीघ्रेन्दुस्ततस्तस्यैव चात्मज:।

भार्गवो रविभौमौ च जीवो मन्द: शनैश्चर:।।

शीघ्रगा मन्दगाश्चैते काले त्वेकर्क्षगामिन:।

ततो योगो भवेदेषां यतोऽशत्वैकमाश्रिता:।।

उपर्युपरिसंस्थास्ते दृश्यन्ते युगपत् स्थिता:।

भेदोल्लेखांशुमर्दाश्चापसव्यश्च तथापर:।।

चतुष्प्रकार: संयोगो युद्धे तु दिविचारिणम्।।

–पृ.–२९२(अ.–१७,श्लो.–२–३)

(८१) भूमिपुत्रादय: सर्वे यस्यामस्तमिते रवौ।

दृश्यन्तेऽस्तमये वापि यत्र यान्ति रवेस्तत:।।

दुर्भिक्षं शस्त्रकोपं च जनानां मरकं(णं?) भवेत्।

अन्योन्यं भूमिपा: सर्वे विनिघ्नन्ति प्रजास्तथा।।

–पृ.–३१४(अ.–२०,श्लो.–९)

(८२) विहायोक्तं च संस्थानं दृश्यते वै ग्रहा यदा।

तदा न तत्फलं ब्रूयाल्लोके नाशुभदाश्च ते।।

–पृ.–३१४(अ.–२०,श्लो.–२)

(८३) संवर्तसङ्गमौ मध्यौ सम्मोहो भयद: स्मृत:।

कोशश्चानिष्टफलद: समाजाख्य: सुमध्यम:।।

सन्निपाते महावैरमन्योन्यमुपजायते।

–पृ.–३१७(अ.–२०,श्लो.–९)

(८४) शीतमभ्रं तथा वायुश्चन्द्रार्कपरिवेषणम्।

माघे मासि परीक्षेत श्रावणे वृष्टिमादिशेत्।।

फाल्गुने चात्र सङ्घातं वृष्टिस्तनितमेव च।

पुरोवाताश्च ये प्रोक्ता मासि भाद्रपदे शुभम्।।

बहुपुष्पफला: वृक्षा वाता: शर्करवर्षिण:।

शीतवर्षं तथाभ्राणि चैत्रेणाश्वयुजं वदेत्।।

वहन्ति मृदवो वाता: पुर:शीघ्रं प्रदक्षिणा:।

वैशाखे तानि रूपाणि कार्तिके मासि वर्षति।।

-पृ.-३२५(अ.-२१,श्लो.-१९-२२)

(८५) ज्येष्ठस्य शुक्लाष्टम्यां तु नक्षत्रे भगदैवते।

चत्वारो धारणा: प्रोक्ता मृदुवातसमीरिता:।।

नीलाञ्जननिभैर्मेघैविद्युत्स्थगितमारुतै:।

विस्फुलिङ्गरजोधूम्रैश्छन्नौ शशिदिवाकरौ।।

एकरूपा: शुभो ज्ञेया अशुभा सान्तरा: स्मृता:।

अनार्यैस्तस्करैर्घोरै: पीडा चैव सरीसृपै:।।

तत: स्वात्यादिनक्षत्रैश्चतुर्भि: श्रावणादय:।

परिपूर्णा: शुभास्ता: स्यु: सौम्या: शिवसुभिक्षका:।।

स्वातौ तु श्रावणं हन्याद्वृष्टेऽथेन्द्राग्निदैवते।

भाद्रपदे त्ववृष्टि: स्यान्मैत्रे चाश्वयुजे स्मृता।।

ऐन्द्रे तु कार्तिके त्वेवं वृष्टे वृष्टिं निहन्ति च।।

एतेषु यदि नो वृष्टिस्तदा सौभिक्षलक्षणम्।

-पृ.-३३३(अ.-२२,श्लो.-२)

(८६) अन्यदेशाङ्किताः कुम्भा भिद्यन्ते च स्रवन्ति च।

बन्धहीना वितोयाश्च तेऽभियोज्या नृपेण वै।।

–पृ.–३५२(अ.–२४,श्लो.–२७)

(८७) दिनरात्र्यन्तरं सन्ध्या सूर्यास्याद्धं प्रदृश्यते।

यावच्च तावदारभ्य शुभा वाप्यशुभापि वा।।

नभोऽमलं शुभदिशः पद्मारुणसमप्रभाः।

मारुतो वाति सुरभिः सुखदो मृदुशीतलः।।

एषा सन्ध्या शुभा ज्ञेया विपरीताऽशुभा स्मृता।

रूक्षा च सविकारार्का क्रव्यादखरनादिता।।

स्निग्धा दण्डपरीवेषा सुरचापविभूषिता।

क्षिप्रं वर्षप्रदा सन्ध्या जयाऽऽरोग्यविवृद्धिदा।।

–पृ.–३९१(अ.–३०,श्लो.–३०)

(८८) प्राच्यां दिशि प्रदीप्तायां श्रेणीनां भयमादिशेत्।

आग्नेय्यां तु कुमाराणां वैश्यानां दक्षिणे तथा।।

नैर्ऋत्यां च स्त्रियं हन्ति शूद्रान् पश्चिमतस्तथा।

वायव्यायां चौरभयं विप्राणामुत्तरे तथा।।

पाखण्डिवणिजां पीडा ह्यैशानी यदि दीप्यते।

–पृ.–३९४(अ.–३१,श्लो.–४)

(८९) वारुणस्योपरि पृथ्वी सशैलवनकानना।

स्थिता जलजसत्त्वाश्च सक्षोभाश्चालयन्ति ताम्।।

–पृ.–३९५(अ.–३२,श्लो.–१)

(९०) ऐन्द्रश्चानिलजं हन्ति वायव्याश्चापि शक्रजम्।

आप्यो हौतभुजं हन्ति चाग्निर्वारुणसम्भवम्।।

वाय्वग्निमिश्रितो यश्च वेलामण्डलसम्भवः।

दुर्भिक्षव्याधिरोगैस्तु पीड्यन्ते तत्र जन्तवः।।

माहेन्द्रे वारुणे यत्र वेलामण्डलसम्भवः।

सुर्भिक्षक्षेमधर्माणां तत्र वृष्टिः प्रतिष्ठिता।।

–पृ.–४०४(अ.–३२,श्लो.–२६)

(९१) वायव्ये मण्डले नित्यं योजनानां शतद्वयम्।

दशाधिकमथाग्नेय ऐन्द्रे षष्ठ्याधिकं शतम्।।

शतं चाशीतिसंयुक्तं वारुणे मण्डले चलेत्।

–पृ.–४०५(अ.–३२,श्लो.–२८)

(९२) नरेभतुरगाश्वाश्मवृक्षेषु च पतेत् सदा।

ज्वलन्ती चक्रवद् दृश्या त्वशंनी रावसंयुता।।

विद्युत्त्रासकरी भीमा शब्दयन्ती तटत्तटा।

बृहच्छीर्षाऽतिसूक्ष्मा च जीवेषु च पतेत्सदा।।

धनूंषि दश या दृश्या सा च धिष्ण्या प्रकीर्तिता।

ज्वलिताङ्गारसदृशी द्वौ हस्तो सा प्रमाणतः।।

पद्मताम्राकृतिश्चैव हस्तमात्रायता गता।

तिर्यगूर्ध्वमधो याति सोह्यमानेन तारका।।

उल्का मूर्धनि विस्तीर्णा पतन्ती वर्धते तु सा।

तनुपुच्छा नृमात्रा तु बहुभेदसमावृता।।

आयुधप्रेतसदृशी जम्बुकोष्ट्रखराकृतिः।

धूम्रवर्णो तु पापाख्या विशीर्णा या तु मध्यमा।।

ध्वजपद्मभहंसाभा पर्वताश्वसमप्रभा।

श्रीवृक्षशङ्खसदृशी या चोल्का सा शिवप्रदा।।

–पृ.–४०९(अ.–३३,श्लो.–१०)

(९३) नक्षत्राणि ग्रहाश्चैव यद्युल्काध्वस्तधूमिताः।

तद्देशनाथनाशाय लोकानां सम्भ्रमाय च।।

–पृ.–४११(अ.–३३,श्लो.–१७)

(९४) पार्थिवे प्रस्थिते दीप्ता पतत्युल्का महास्वना।

तां दिशं सिद्ध्यते सिद्धिं विजयं लभते चिरात्।।

–पृ.–४१५(अ.–३४,श्लो.–३०)

(९५) सितपीतेन्द्रनीलाभा रक्तकापोतबभ्रवः।

शबला वह्निवर्णाश्चविज्ञेयास्ते शुभप्रदाः।।

ऐन्द्रयाम्यप्यनैर्ऋत्यवारुणाः सौम्यवह्निजाः।

दृश्यादृश्येन भावेन वायव्यः सोऽपि कष्टदः।।

–पृ.–४१६(अ.–३४,श्लो.–३)

(९६) शिशिरे चाषवर्णश्च वसन्ते शिखिसन्निमः।

ग्रीष्मे रजतसङ्काशः प्रावृट्तैलसमप्रभः।।

गोक्षीरसदृशः शस्तः परिवेषः शरत्स्मृतः।

हेमन्ते जलसङ्काशः स्वकाले शुभदः स्मृतः।।

–पृ.–४१६(अ.–३४,श्लो.–४)

(९७) परिवेषाभ्यन्तरगौ द्वौ ग्रहौ यायिनागरौ।

युद्धं च भवति क्षिप्रं घोररूपं सुदारुणम्।।

मण्डलान्तरिताः पञ्च जगतः संक्षयावहाः।

अथ ताराग्रहस्यैव नक्षत्राणामथापि वा।।

परिवेषो यदा दृश्यस्तदा नरपतेर्वधः।

यदि केतूदयो न स्यादन्यथा तद्वदेत् फलम्।।

–पृ.–४२१(अ.–३४,श्लो.–१८)

(९८) अनन्तकुलजाता ये पन्नगाः कामरूपिणः।

तेषां निःश्वाससम्भूतमिन्द्रचापं प्रचक्षते।।

–पृ.–४२३(अ.–३५,श्लो.–२)

(९९) अवृष्टौ वर्षगं कुर्यादैन्द्रीं दिशमुपाश्रितम्।

पश्चिमायां महद्वर्षं करोतीन्द्रधनुः सदा।।

रात्रौ चेद् दृश्यते पूर्वे भयं नरपतेर्भवेत्।

याम्यायां बलमुख्यश्च विनाशमभिगच्छति।।

पश्चिमायां प्रधानस्य सौम्यायां मन्त्रिणो वधः।

स्निग्धवर्णैर्धनैः शुभ्रैर्वारुण्यां दिशि दृश्यते।।

बहूदकं सुभिक्षं च शिवं सस्यप्रदं भवेत्।

–पृ.–४२५(अ.–३५,श्लो.–७)

(१००) बहुवर्णं पताकाढ्यं गन्धर्वनगरं महत्।

दृष्टं प्रजाक्षयकरं सङ्ग्रामे लोमहर्षणम्।।

–पृ.–४२७(अ.–३६,श्लो.–५)

(१०१) याम्ये वातप्रदो ज्ञेय उत्तरे वृद्धिदो रवेः।

उभयोः पार्श्वयोर्भाति सलिलं भूरि यच्छति।।

-पृ.-४२८(अ.-३७,श्लो.-३)

(१०२) मेषे सुवर्णस्थलजा गौधूमाजाविकास्तथा।

ग्रहवर्णर्क्षसंयोगे शोभने सफलं भवेत्।।

-पृ.-४३६(अ.-४०,श्लो.-२)

(१०३) वृषे महिषगोवस्त्रशालयः पुष्पसम्भवाः।

मिथुने धान्यशालूकवल्यः कार्पासशारदम्।।

-पृ.-४३६(अ.-४०,श्लो.-३)

(१०४) कर्कटे फलदूर्वाश्च कोद्रवः कदला तथा।

सिंहे धान्यं सर्वरसाः सिंहादीनां त्वचो गुडाः।।

-पृ.-४३७(अ.-४०,श्लो.-४)

(१०५) कन्यायां मुद्गनीवारकुलत्थाः सकला यवाः।

तुले तु यवगोधूममाषाः सिद्धार्थकास्तथा।।

-पृ.-४३७(अ.-४०,श्लो.-५)

(१०६) अलिनीक्षुरसं सैक्यमाजं लोहं सकांस्यकम्।

धान्यं धनुषि वस्त्राणि लवणं तुरगास्तथा।।

-पृ.-४३७(अ.-४०,श्लो.-६)

(१०७) मकरे सस्यसीसं च सुवर्णगुडधातुजम्।

कुम्भे कुसुमचित्राणि हंसाश्च जलजास्तथा।।

-पृ.-४३८(अ.-४०,श्लो.-७)

(१०८) पद्ममुक्ताफलादीनां द्रव्याणां मीन ईश्वरः।

–पृ.–४३८(अ.–४०,श्लो.–८)

(१०९) चतुःसप्तद्विपञ्चस्थो नवदिग्रुद्रगो गुरुः।।

यस्य राशेस्तदुक्तानां द्रव्याणां वृद्धिदः स्मृतः।।

शुक्रः षट्सप्तमस्थो वा हानिकृद्वृद्धिदोऽन्यगः।

द्व्येकादशदशार्थाष्टसंस्थितः शशिजः शुभः।

पापास्तूपचयस्थाश्च वृद्धिं कुर्वन्ति नान्यथा।।

–पृ.–४३९(अ.–४०,श्लो.–९–१०)

(११०) राशेरनिष्टस्थानेषु पापाश्च सबलाः स्थिताः।

तद्द्रव्याणां नाशकरा दुर्लभास्ते भवन्ति हि।।

–पृ.–४३९(अ.–४०,श्लो.–११)

(१११) इष्टस्थाने स्थिताः सौम्या बलिनो येषु राशिषु।

भवन्ति तद्भवानां च द्रव्याणां शुभदाः स्मृताः।।

–पृ.–४३९(अ.–४०,श्लो.–१२)

(११२) उल्कातिवृष्टिर्ग्रहणे सूर्येन्द्वोः परिवेषणम्।

प्रतिसूर्यादयो येऽन्ये पक्षमासान्तसंक्षये।।

तिथौ निरीक्ष्य चोत्पातान् ब्रूयाल्लोके शुभाशुभम्।

सुभिक्षदुर्भिक्षकृतान् विशेषोऽत्र विचारतः।।

प्रतिमासं विधानज्ञो नान्यस्मिन् दिवसे वदेत्।

अन्यत्र ये भवन्त्येते सर्वे ते नृपदोषदाः।।

–पृ.–४४०–४४१(अ.–४१,श्लो.–१–२)

(११३) राशौ राशौ स्थितः सूर्यः शशी वा मित्रसंयुतः।

अधिमित्रेण सन्दृष्टो यथा लाभप्रदः स्मृतः।।

–पृ.–४४३(अ.–४१,श्लो.–१३)

(११४) अत्रार्कशशिनौ सौम्यैः संयुक्तौ वा निरीक्षितौ।

शुभग्रहस्थानगतौ सद्योऽर्घस्य विवृद्धिदौ।।

विपरीतस्थितावेतौ पापयुक्तौ निरीक्षितौ।

अर्घहानिकरौ प्रोक्तौ मिश्रितौ मध्यमौ स्मृतौ।।

–पृ.–४४४(अ.–४२,श्लो.–१४)

(११५) शालिजातकसिद्धार्थान् कुष्ठं भल्लातकं तथा।

अश्वेषु कण्ठे बध्नीयात् सप्ताहं शान्तिमाचरेत्।।

–पृ.–४६५(अ.–४३,श्लो.–५)

(११६) पौष्टिकैर्विविधैर्मन्त्रैः पुरोधा ज्वलनं हुनेत्।

हुतान्ते भोजयेद्विप्रान् दक्षिणां विपुलां ददेत्।।

–पृ.–४६६(अ.–४३,श्लो.–६)

(११७) अष्टमेऽह्नि पुरस्कृत्य राजा पौरजनैर्वृतः।

गच्छेच्छान्तिगृहं हृष्टः शङ्खतूर्यरवैः सह।।

–पृ.–४६७(अ.–४३,श्लो.–८)

(११८) स्थूलोऽभ्युन्नतकण्ठो यो भद्रः कृष्णगलः स्मृतः।

कृष्णमूर्धा गलान्तं यःस सम्पूर्ण इति स्मृतः।।

करटान्तौ सितौ यस्य कृष्णो बिन्दुर्गले तथा।

स रिक्त इति निर्दिष्टः पीतो गोपीतकः स्मृतः।।

नामानुरूपेण फलं विहगानां विनिर्दिशेत्।।

-पृ.-४७५(अ.-४४,श्लो.-२-३)

(११९) मैथुनं कुरुते यत्र तत्र वै निधिमादिशेत्।

भुक्तं छर्दयते यत्र तत्र काचमधो भवेत्।।

पुरीषं यत्र कुरुते तत्राङ्गारं विनिर्दिशेत्।

-पृ.-४७७(अ.-४४,श्लो.-१२)

(१२०) प्रथमे दर्शने पाकमावर्षात् प्रवदेद् बुधः।

प्रतिदैवसिके वाच्यं दर्शनेऽस्तमये फलम्।।

-पृ.-४७८(अ.-४४,श्लो.-१६)

(१२१) भौमं शान्तिहतं नाशमुपगच्छति मार्दवम्।

नाभसं न शमं याति दिव्यमुत्पातदर्शनम्।।

-पृ.-४८१(अ.-४५,श्लो.-५)

(१२२) क्रियमाणं यदा पत्रं मध्ये स्फुटति भिद्यते।

तदा नृपभयं प्रोक्तं यस्यार्थे वा प्रकल्पितम्।।

सुलक्षणं प्रमाणस्थं सुकरं च हितावहम्।

सुरूपं दर्शनीयं च प्रजानां वृद्धिदं स्मृतम्।।

-पृ.-५३६(अ.-४९,श्लो.-७)

(१२३) उत्पन्नो न पुनश्छेद्यो निष्पन्नो यः प्रमाणतः।

मुष्ट्या भङ्गे म्रियते स्वामी तदग्रे तस्य मातरम्।।

तस्मान्न छेदयेत् खड्गमात्मनोऽशुभदं यतः।

निघर्षणैः प्रमाणस्थः कार्यो येन शुभो भवेत्।।

-पृ.-५३८(अ.-४९,श्लो.-८)

## २) अथ मुहूर्तचिन्तामणावुद्धृतकश्यपवचनानि :-

ग्रन्थः – मुहूर्तचिन्तामणिः। (मुहूर्तचिन्तामणिग्रन्थलेखनकालशकाब्दः-१५२२) (पीयूषधाराटीका लेखनकालः ख्रि.-१६०३, शकाब्दः १५२५), ग्रन्थकर्ता -राम अनन्त भट। पीयूषधाराटीकाकर्ता- गोविन्द नीलकण्ठ भट्ट। मङ्गलाहिन्दीटीकाकर्ता- पं.श्रीकमलाकान्त ठाकुर (मैथिलः)। प्रकाशकः-भारतीय विद्या प्रकाशन वारणसी (भारत)। संस्करणम्- प्रथमम्, ख्रि.-१९९८।

---

**(१) यदाह कश्यपः** -

दारर्त्विग्भूमहंतृंश्च व्यङ्गान्नक्षत्रसूचकान्।
वर्जयेद् ब्राह्मणानेतान्सर्वकर्मसु यत्नतः।।

-पृ.-६। (अ.१,श्लो.२)

**(२) कश्यपोऽपि तथैवाह –**

आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः।
जया सोम्ये गुरौ रिक्ता पूर्णार्कावमृता शुभा।।

– पृ.-११। (अ.१,श्लो.५)
क.सं.-१८.२१

**(३) कश्यपोऽपि** -

षष्ठ्यां दर्शप्रतिपदि द्वादश्यां च दिनक्षये।

कुर्यादामलकस्नानं दशम्यां मूढधीर्नरः।।

पुत्रनाशो भवेत्तस्य त्रयोदश्यां धनक्षयः।

सम्पत्पुत्रक्षयस्तस्य द्वितीयायामसंशयम्।।

सप्तम्यां च नवम्यां च अमायां कुलनाशनम्।

-पृ.-१३। (अ.१,श्लो.७)

-क.सं.-१२.२०,२३-२४

(४) पूर्णः क्षीणोऽपि वा चन्द्रो लग्ने सर्वत्र गर्हितः।

–पृ.–६। (अ.२३,श्लो.३२)
–क.सं.–२२.४३

(५) ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक् शनीनयोः।

द्युनिशार्धे तूभयं स्यात्खण्डिखण्डव्यवस्थयोः।।

–पृ.–२६। (अ.१,श्लो.३३)
–क.सं.–३२.१३

(६) उपवासव्रतोद्वाहयात्राक्षौरोपनायनम्।

तिथिवशान्निखिलं चान्द्रमानेन गृह्यते।।

–पृ.–२७। (अ.१,श्लो.३४–३५)
–क.सं.–११.५

(७) महावैधृतिपाताभ्यां दूषितं लग्नमुत्तमम्।

राजावधूतं पुरुषं यद्वत्तत्सम्परित्यजेत्।।

–पृ.–२८। (अ.१,श्लो.३४–३५)
–क.सं.–३२.९८

(८) विष्कुम्भवज्रयोस्तिस्रः षट् च गण्डातिगण्डयोः।

व्याघाते नव शूले तु पञ्च नाड्यस्तु गर्हिताः।।

–पृ.–२८। (अ.१,श्लो.३४–३५)
–क.सं.–१५.४–५

**(९) (कश्यपस्तु सर्वसाधारण्येन दशैव घटिकास्त्याज्या इत्याह-)**

अष्टमी द्वादशी षष्ठी पक्षरन्ध्रास्तु तासु च।

मङ्गले सर्वदा त्याज्या नूनं हि दश नाडिका:।।

–पृ.–२९। (अ.१,श्लो.३६)
–क.सं.–१२.१९

**(१०) कश्यपसंहितायां–**

मुखे पञ्च गले त्वेका वक्ष्यस्येकादश स्मृता:।

नाभौ चतस्र: षट् कट्यां तिस्र: पुच्छे तु नाडिका:।।

कार्यहानिर्मुखे मृत्युर्गले वक्षसि नि:स्वता।

कट्यामुन्मत्तता नाभौ च्युति: पुच्छे ध्रुवो जय:।।

–पृ.–३५। (अ.१,श्लो.४४)

–क.सं.–१६.४–५

**(११)( नारदकश्यपादिभिरुक्तम्–)**

करणानि बवानि शुभसंज्ञानि षट् क्रमात्।

क्रमायाता क्रमायाता विष्टिर्नेष्टा तु मङ्गले।

– पृ.–३६। (अ.१,श्लो.४४)

–क.सं.–१६.२–३

**(१२)** नवांशुकं समं कृत्वा चिन्तयेच्च शुभाशुभम्।

वसन्ति देवता: कोणे चान्त्यमध्यद्वये नरा:।।

मध्यांशत्रितये दैत्याश्चैवं शय्यासनादिषु।

अर्थप्राप्तिर्देवतांशे पुत्रवृद्धिर्नरांशके।।

हानि: पीडा पिशाचांशे सर्वं प्रान्तेष्वशोभनम्।

शंखचक्राम्बुजच्छत्रध्वजतोरणदत्रिभा:।।

श्रीवत्ससर्वतोभद्रनद्यावर्त्तगृहोपमा:।

वर्धमान: स्वस्तिकेन मृगकूर्मझषाकृति:।।

छेद्याकृतिर्दैत्यभागेऽप्यायुरर्थप्रदा नृणाम्।

खरोष्ट्रोलूककाकाहिजम्बूकाश्च वृकोपमाः।।

त्रिकोणसूर्याकृतयो देवभागेऽप्यशोभनाः।

निन्दितं वसनं दद्याद् द्विजेभ्यः स्वर्णसंयुतम्।।

आशिषो वाचनं कृत्वा त्वन्यद्वस्त्रं च धारयेत्।।

–पृ.–५८। (अ.२,श्लो.११)

–क.सं.–४२.५–११

**(१३)** प्रीत्याक्ष्मापालदत्तं यद्विप्रादेशात्करग्रहे।

निन्द्येऽपि धिष्ण्ये वारादौ धारयेच्च नवाम्बरम्।।

–पृ.–५८। (अ.२,श्लो.१२)
–क.सं.–४२.१२

**(१४)** षट्सप्ताष्टान्त्यशुद्धौ च बलिनः शुभखेचराः।

आयुर्दायकरे योगे कर्तव्या ह्यौषधक्रिया।।

– पृ.–६०। (अ.२,श्लो.१५)
–क.सं.–२२.३४

**(१५)** गुरौ ज्ञे वा लग्नगते शुक्रे कर्मगते विधौ।

आप्यभे जलकार्याणामारम्भः सिद्धिदः स्मृतः।।

–पृ.–६८। (अ.२,श्लो.२५)
–क.सं.–२२.३३

**(१६)** लग्नसंस्थे बुधे चन्द्रे बुधराशौ तु वीक्षिते।

शुभग्रहैश्चतुर्थस्थैर्नाट्यारम्भः प्रशस्यते।।

–पृ.–६८। (अ.२,श्लो.२५)

–क.सं.–२२.३१

**(१७)** दशमैकादशे सूर्ये कुजे वा शुभलग्नगे।

विद्यायुधाभ्यासयुक्तसेवाकर्मापि सिद्धयति।।

–पृ.–६९। (अ.२,श्लो.२६)

–क.सं.–२२.२३

**(१८)** गुरौ लग्नगते शुक्रे बलिन्यापोदये विधौ।

शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः।।

–पृ.–७१। (अ.२,श्लो.२८)

–क.सं.–२२.३७

**(१९)** वसुवायुजनैर्ऋत्यक्षिप्रध्रुवमृदुडुषु।

सीतां स्मृत्वाथ बीजोप्तिरत्युत्कृष्टफलप्रदा।।

–पृ.–७१। (अ.२,श्लो.२९)

–क.सं.–१४.४१

**(२०)** राहुधिष्ण्यात्समारभ्य धिष्ण्येष्वष्टसु निष्फलम्।।

–पृ.७२। (अ.२,श्लो.२९)

–क.सं.–१४.४२

**(२१)** नक्षत्रे यत्र भानुः स्यात्तदाद्यं भत्रिकं त्रिकम्।

सूर्यज्ञशुक्रसौरीणामिन्दुभौमबृहस्पतेः।।

राहोः केतोश्च निर्दिष्टं वदनादौ शुभाशुभम्।

सौख्यार्थनाशः सूर्ये स्यादिन्दौ जलमयी कृषिः।।

भौमेऽग्निदाहो राष्ट्रस्य बुधे बुद्धिविवर्धनम्।

गुरौ लब्धिरभीष्टस्य राज्यं सौभाग्यनन्दितम्।।

भार्गवे कार्यसंपत्तिरैहिकामुष्मिकी भवेत्।

शनेर्मुखाहुतौ ज्ञेयो राज्यभङ्गो धनक्षयः।।

राहोर्मुखाहुतौ हानिः सर्वस्य परिकीर्तिता।

केतोः मुखाहुतौ ज्ञेयं दुर्भिक्षं देशविप्लवम्।।

मरणं प्राणिनां चैव राज्यभङ्गस्तथैव च।

तस्मात्सर्वप्रयत्नेन ग्रहनक्षत्रसंगमे।।

दुष्टे न कुर्याद्धवनमित्याहुर्भार्गवादयः।।

–पृ. ७७ (अ.२,श्लो.३५)

**(२२)** पितृमारुतसर्पान्त्यस्थिरर्क्षेष्विन्दुशुक्रयोः।

न कुर्याद्वारयो रोगमुक्तः स्नानं कदाचन।।

–पृ. ८०। (अ.२,श्लो.४०)

–क.सं.–१४.४४

**(२३)** भाग्ये पुष्पे समैत्रे च लग्ने शुक्रेक्षिते युते।

करणे तैतिलेऽष्टम्यां द्वादश्यां सन्धिरिष्यते।।

–पृ.८१। (अ.२,श्लो.४२)

–क.सं.–२२.३५

**(२४)** भद्रातिथिशनिज्यारवारे चेद्विषमाङ्घ्रिभम्।

त्रिपुष्करं त्रिगुणदं द्विगुणदं द्व्यङ्घ्रिभे मृतौ।।

–पृ.८८। (अ.२,श्लो.५०)

–क.सं.–१४.५०

(२५) भरण्यार्द्रामघाश्लेषामूलं त्रिचरणानि च।

प्रेतक्रियातिदुष्टानि धनिष्ठाद्यं च पञ्चभम्।।

–पृ.८९। (अ.२,श्लो.५१)

(२६) फल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः।

द्वे आषाढे विशाखा च भानि द्विचरणानि च।

एतानि किञ्चिद्दुष्टानि वर्जयेत्सति संभवे।।

–पृ.९०। (अ.२,श्लो.५२)

(२७) अतीतविषये काम्ये न्यूने श्राद्धे महालये।

एतत्सर्वं विचिन्त्याशु कुर्याच्छ्राद्धमतन्द्रितः।।

–पृ.९१। (अ.२,श्लो.५२)

–क.सं.–३४.९–१०

(२८) ज्येष्ठान्त्यमूलयोरन्तरालयामोद्भवः शिशुः।

अभुक्तमूलजः सोऽप्याश्लेषापितृभयोरपि।।

–पृ.९४। (अ.२,श्लो.५४)
–क.सं.–४९.८२

(२९) मूलाद्यपादजो हन्ति पितरं तु द्वितीयजः।

मातरं स्वां तृतीयोऽर्थान्सुहृदश्च तुरीयजः।।

–पृ.९४। (अ.२,श्लो.५५)
–क.सं.–४९.८३

(३०) सुहृदश्च तुरीजयः।।

–पृ.९५। (अ.२,श्लो.५५)
–क.सं.–४९.८३

**(३१)** फलं तदेवं सार्पर्क्षे प्रतीपं त्वन्त्यपादतः।।

–पृ.९२। (अ.२,श्लो.५५)

–क.सं.–४९.८४

**(३२)** सिनीवाली चन्द्रवती नष्टचन्द्रा कुहूर्मता।।

(इति कश्यपोक्तेश्चामावास्याया द्विविधत्वमेवावसीयते।)

–पृ.१०८। (अ.२,श्लो.५७)

– क.सं.–१२.२५

**(३३)** द्विधैवामावास्या।।

–पृ.१०८।(अ.२,श्लो.५७)

–क.सं.–१२.२५

**(३४)** घोराध्वाक्षीमहोदर्यो मन्दा मन्दाकिनी तथा।

मिश्रा राक्षसिका सूर्यसंक्रान्तिश्चार्कवासरात्।।

–पृ.१२२। (अ.३,श्लो.१)

–क.सं.–१९.१

**(३५)** शूद्रतस्करवैश्यक्ष्मादेवभूपगवां क्रमात्।

अनुक्तानाञ्च सर्वेषां घोराद्याः सुखदाः स्मृताः।।

–पृ.१२२। (अ.३,श्लो.१)

–क.सं.–१९.२–३

**(३६)** पूर्वाह्णे नृपतीन्हन्ति विप्रान्मध्यन्दिने विशिः।

अपराह्णेऽस्तगे शूद्रान्प्रदोषे च पिशाचकान्।।

निशि रात्रिंचरान्नाट्यकारानपररात्रके।

गोचारिणश्च सन्ध्यायां लिङ्गिनं रविसंक्रमे।।

–पृ.१२३। (अ.३,श्लो.२–३)

–क.सं.–१९.३–५

**(३७) (अत्र मेषसंक्रान्तौ विशेषमाह कश्यपः-)**

यदा मेषगतः सूर्यो भरण्यादिचतुष्टये।

सस्यवृद्धिर्भवेत्तस्य वृद्धिरार्द्राचतुष्टये।।

मघादिदशके हानिः क्षेमं चानुक्तभेषु च।।

–पृ.१२३। (अ.३,श्लो.२–३)

–क.सं.–१९.५–६

**(३८)** या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।।

–पृ.१२९। (अ.३,श्लो.७)

–क.सं.–१९.१९

**(३९)** स्नानं दानं ग्रहणवत्सौम्ययाम्यायनद्वये।।

–पृ.१२९। (अ.३,श्लो.७)

–क.सं.–१९.१७

**(४०)** सिंहशार्दूलवाराहकुञ्जरा महिषस्तथा।

तुरगश्चाजवृषभकुक्कुटाश्च बवादिषु।।

तिथ्यर्धजेषु संक्रान्तिवाहनानि यथाक्रमात्।।

–पृ.१३७। (अ.३,श्लो.१४–१५–१६–१७)

–क.सं.–१९.७–८

(४१) भयोनिवाहनं बङ्गवाह्लीकविषये खशे।।

–पृ.१३७। (अ.३,श्लो.१४–१५–१६–१७)

–क.सं.–१९.८

(४२) भुशुण्डिभिन्दिपालासिदण्डकोदण्डतोमरान्।

कुन्तपाशाङ्कुशास्त्रेषून्बिभर्ति करणेष्विनः।।

–पृ.१३८। (अ.३,श्लो.१४–१५–१६–१७)

–क.सं.–१९.९

(४३) ताराबलेन शीतांशुर्बलवांस्तद्वशाद्रविः।

बली संक्रमाणस्य वशात्खेटा बलाधिकाः।।

यादृशेनेन्दुना भानोः संक्रान्तिस्तादृशं फलम्।

नरः प्राप्नोति तद्राशेः शीतांशोः साध्वसाधुतः।।

–पृ.१४२। (अ.३,श्लो.१९)

–क.सं.–१९.२३–२४

(४४) यस्मिन्मासेऽर्कसंक्रान्तिर्दर्शान्तात्प्राक्पुरःसरम्।

दर्शमुल्लङ्घ्य भवति स संसर्पोऽधिमासकः।।

आरभ्य शुक्लप्रतिपत्प्रवेशात्संक्रमद्वयम्।

आगामीन्दुक्षयस्यान्तात्प्राङ्न्यूनाख्यस्त्वहर्पतिः।।

स्फुटार्कसंक्रमाद्विद्यान्न्यूनमासाधिमासकैः।

मासौ न्यूनाधिकौ तौ तु सर्वकर्मबहिष्कृतौ।।

–पृ.१४२। (अ.३,श्लो.२०)

–क.सं.–२.३–६

(४५) अपि विद्धो ग्रहः कश्चिन्न ददाति शुभं फलम्।

वामवेधविधानेन त्वशुभोऽपि शुभप्रदः।।

अतस्तद् द्विविधं मूलं(वेधं?)विचार्यैव फलं वदेत्।।

–पृ.१४२। (अ.४,श्लो.१–२–३–४)

–क.सं.–२०.९–१०

(४६) स पुनर्द्विविधोऽपि वेधो ग्रहाधिष्ठितराशितो ज्ञेयः।

यथा सूर्यो जन्मराशेः सकाशात्षष्ठस्थितः शुभः।।

–पृ. १४९। (अ.४,श्लो.५)

(४७) ज्ञातव्यं जन्मराशेस्तु निखिलं यद्बलाबलम्।

हिमाद्रिविन्ध्ययोर्मध्ये वेधजं तद्ग्रहालयात्।।

–पृ.१४९। (अ.४,श्लो.५)

–क.सं.–२०.१–२

(४८) मासादीन्दुः शुभो यस्य तत्पक्षस्तस्य शोभनः।

कृष्णादीन्दौ त्वशुभदे तद्व्यत्ययेऽन्यथा।।

–पृ.१५५। (अ.४,श्लो.८)

–क.सं.–२१.२

(४९) सूर्यादीनां च सन्तुष्ट्यै माणिक्यं मौक्तिकं तथा।

सुविद्रुमं मारकतं पुष्परागं च वज्रकम्।।

नीलगोमेदवैदूर्यं धार्यं स्वस्वदृढक्रमात्।।

–पृ.१५६। (अ.४,श्लो.१०)

क.सं.–२०.१५–१६

**(५०)** प्रवासनष्टे च मृता जया हास्या रतिर्मुदा।

सुप्ता भुक्ता ज्वरा कम्पा सुस्थितिर्नामसन्निभाः।।

–पृ.१६०। (अ.४,श्लो.१५)

–क.सं.–२१.९

**(५१)(उक्तं च कश्यपसंहितायाम्–)**

वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि।

अन्तःपुष्पं भवत्वेव पनसोदुम्बरादिवत्।।

अतस्तु तत्र कुर्वीत तत्सङ्गं बुद्धिमान्नरः।।

–पृ.१६६। (अ.५,श्लो.१पूर्वे)

**(५२)** रोगिणी रविवारे तु सोमवारे प्रतिव्रता।

दुःखिता भौमवारे तु बुधे सौभाग्यसंयुता।।

श्रीसंयुता गुरोर्वारे पतिभक्ता भृगोर्दिने।

मलिना मन्दवारे तु रात्रावपि तथैव च।।

–पृ.१६७। (अ.५,श्लो.१)

–क.सं.–२३.६–७

**(५३)** अष्टमी षष्ठ्यमा रिक्ता द्वादशी संक्रमेऽपि वा।

वैधृतौ व्यतिपाते च ग्रहणे चन्द्रसूर्ययोः।।

विष्ट्यां सन्ध्यासु निद्रायां दुर्भगा प्रथमार्त्तवे।।

–पृ.१६९। (अ.५,श्लो.३)

–क.सं.–२३.४–५

**(५४)** षष्ट्यष्टमीं पञ्चदर्शीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा।

शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्काज्यसितेन्दुजानाम्।।

–पृ.१७२। (अ.५,श्लो.६)

**(५५) (उक्तं च सीमन्ताध्याये कश्यपेन)**

शुक्लपक्षादिदिवसं रिक्तां पर्वस्य मध्यमाम्।

तिथिं त्वक्त्यार्कभूसूनुसुरेज्यानां च वासरे।।

–पृ. १७५ (अ.५,श्लो.८)

–क.सं.–२४.२–३

**(५६)** मासेश्वरे बलोपेते नास्तगे न पराजिते।।

–पृ.१७५। (अ.५,श्लो.८)

–क.सं.–२४.४

**(५७)** चन्द्रोऽपि शुभदो ज्ञेयस्त्यक्त्वा षष्ठाष्टमव्ययान्।।

–पृ.१७५। (अ.५,श्लो.८)

–क.सं.–२४.९

**(५८) (यदाह सीमान्ताध्याये कश्यपः-)**

न नैधने तयोर्लग्ने नैधने शुद्धिसंयुते।

पञ्चभिश्च चतुर्भिर्वा सूर्येन्दुगुरुपूर्वकैः।।

ग्रहैरिष्टैः शुभे लग्ने राशावपि च नैधने।

–पृ.१७५। (अ.५,श्लो.८)

–क.सं.–२४.६–७

(५९) उक्तकाले प्रकर्तव्या द्विजानामखिला: क्रिया:।

अतीतेषु च कालेषु कर्तव्याश्चोत्तरायणे।।

सुरेज्येऽत्यसुरेज्ये वा नास्तगे न च वार्धके।

शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे।।

चन्द्रताराबलोपेते नैधनोदयवर्जिते।

पूर्वाह्णे क्षिप्रनक्षत्रचरस्थिरमृदुडुषु।।

नाममङ्गलघोषैश्च रहस्यं दक्षिणश्रुतौ।।

–पृ.१८०। (अ.५,श्लो.११)

–क.सं.–२५.४–६

(६०) द्वादशीमष्टमीं रिक्तां नन्दां चैव दिनक्षयम्।

सूर्यार्किभौमवारांश्च त्यक्त्वान्यशुभवासरे।।

–पृ.१८५। (अ.५,श्लो.१७)
–क.सं.–२६.२

(६१) जन्मराशिर्विलग्नाभ्यां नैधनेंऽशे च वर्जयेत्।।

–पृ.१८६। (अ.५,श्लो.२७)
–क.सं.–२६.४

(६२) गोऽश्वकुम्भतुलाकन्यासिंहकर्कनृयुग्मगा:।

शुभदा राशयश्चैता न मेषझषवृश्चिका:।।

–पृ. १८६। (अ.५,श्लो.१७)

(६३) चरस्थिरमृदुक्षिप्रनक्षत्रेषु शुभे दिने।

–पृ.१८६। (अ.५,श्लो.१७)

–क.सं.–२६.३

**(६४)** त्रिकोणकेन्द्रत्र्यायेषु शुभैस्त्र्यायारिगैः परैः।

अलग्ननिधनान्त्यारिस्थानस्थेन हिमांशुना।।

–पृ.१८७। (अ.५,श्लो.१८)

–क.सं.–२६.७

**(६५)** वृद्धचन्द्रः स्त्रियं हन्ति पतिं हन्त्यस्तमागतः।

यतोऽस्यामृतरश्मित्वाद् बालोऽपि शुभदः शशी।।

–पृ.१९५। (अ.५,श्लो.२८)

–क.सं.–३२.९–१०

**(६६)** पञ्चवर्षं तिथिं रिक्तां त्वक्त्वान्यदिवसे शुभम्।।

–पृ.१९६। (अ.५,श्लो.२९)

–क.सं.–२७.३

**(६७)** चन्द्रज्ञगुरुशुक्राणां वारलग्नांशकेषु च।।

–पृ.१९६। (अ.५,श्लो.२९)

–क.सं.–२७.३

**(६८)** नैधने शुद्धिसंयुक्ते लग्नराशौ न नैधने।।

–पृ.१९६। (अ.५,श्लो.२९)

–क.सं.–२७.५

**(६९)** दास्रेन्द्वदितिपुष्येन्द्रभेषु हस्तत्रयेऽपि च।

विष्णुत्रये च पौष्णर्क्षे चौलकर्म शुभप्रदम्।।

–पृ.१९६। (अ.५,श्लो.२९)

–क.सं.–२७.४

**(७०)** नवान्नप्राशने चोले व्रतबन्धेऽभिषेचने।

शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि।।

–पृ.१९६। (अ.५,श्लो.२९)

क.सं.–२७.७

**(७१)** ऋतौ वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथा।

विशा मुख्यं च सर्वेषां द्विजानां चोपनायनम्।।

साधारणं च मासेषु माघादिषु च पञ्चसु।।

–पृ.२०७। (अ.५,श्लो.४०)

–क.सं.–२८.८

**(७२)** मैत्रविष्णुत्रये हस्तत्रयर्क्षे चोत्तरात्रये।

धातृद्वयादितीज्यान्त्यदस्रर्क्षेषूपनायनम्।।

–पृ.२०७। (अ.५,श्लो.४०)

–क.सं.–२८.१२

**(७३)** सर्वत्र शुभकृच्छुक्रः षष्ठसप्ताष्टमं विना।।

–पृ.२०७।(अ.५,श्लो.४०)

**(७४) (कश्यपस्तूच्चस्थं लग्नस्थं च चन्द्रं सदैव न्यषेधीत्)**

वर्धमानोऽपि वा चन्द्रः पूर्णो वा यदि तुङ्गगः।

निःस्वं करोति व्रतिनं लग्नगः क्षयरोगिणम्।।

–पृ.२११(अ.५,श्लो.४२)

–क.सं.–२८.३४

(७५) शुभग्रहांशगे चन्द्रे विद्यावान् धनवान् व्रती।

तस्मिन्पापांशसंस्थेति निर्धनोऽखिलदु:खभाक्।।

स्वांशसंस्थे निशानाथे दरिद्र: खलु दुर्जन:।।

–पृ.२१८(अ.५,श्लो.५०)

–क.सं.–२८.२६–२७

(७६) चैत्रमासविसृष्टेषु माघादिषु च पञ्चकम्।।

–पृ.२२६(अ.५,श्लो.६०)

–क.सं.–२९.२

(७७) अथात: संप्रवक्ष्यामि गृहस्थाश्रममुत्तमम्।

य आधारोऽन्याश्रमाणां भूतानां प्राणिनां तथा।।

ऋणत्रयच्छेदकारि धर्मकामार्थसिद्धिदम्।

एतत्सर्वं स्थितं स्त्रीषु शीलवृत्तान्वितासु च ।।

तच्छीलवृत्तलब्धिस्तु सुलग्नवशतो भवेत्।

तस्मात्सम्यग्लग्नशुद्धिं प्रवक्ष्याम्यनुपूर्वश:।।

–पृ.२२४(अ.६,श्लो.१)

–क.सं.–३०.१–३

(७८) लग्नाद्दुश्चिक्यपुत्रास्तकर्मलाभगत: शशी।

गुरुदृष्टस्तयोरेव सम्बन्धं कुरुते सदा।।

– पृ.२२९(अ.६,श्लो.२)

–क.सं.–३०.१०

(७९) लग्नस्थांश्चन्द्रशुक्राभ्यां वीक्षिताः संयुताश्च वा।

कुर्वन्ति कन्यकालाभं यदि गोघटकर्कटाः।।

–पृ.२२४(अ.६,श्लो.१)

–क.सं.–३०.११

(८०) एको लग्नगतः पापः पापोऽन्यः सप्तराशिगः।

आसप्तमाब्दान्मरणं पुरुषस्य न संशयः।।

यद्युदयस्थः क्रूरस्तस्माद्यदि सप्तमो भवेत्पापः।

सप्तभिरब्दैर्मरणं विज्ञेयं तस्य पुरुषस्य।।

–पृ.२३०(अ.६,श्लो.४)

–क.सं.–३०.७

(८१) स्वनीचगः शत्रुदृष्टः पापः पञ्चमगो यदा।

मृतपुत्रां करोत्येव कुलटां वा न संशयः।।

–पृ.२३१(अ.६,श्लो.५)

–क.सं.–३०.९

(८२) पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते।

विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे।।

मासाद्यदिवसं रिक्तामष्टमीं नवमीं तिथिम्।

त्यक्त्वान्यदिवसे गन्धस्रक्ताम्बूलफलान्वितैः।।

सहवृद्धद्विजगणैर्वरयेत्कन्यकां सतीम्।।

–पृ.२३६(अ.६,श्लो.१०)

–क.सं.–३१.२–४

**(८३)** विवाहो जन्मतः स्त्रीणां युग्मेऽब्दे पुत्रपौत्रदः।

अयुग्मे श्रीप्रदः पुंसां विपरीते तु मृत्युदः।।

–पृ.२३८(अ.६,श्लो.१२)

–क.सं.–३२.१

**(८४)** उत्तरायणगे सूर्ये मीनं चैत्रं च वर्जयेत्।

अजगोद्वन्द्वकुम्भालिमृगराशिगते रवौ।।

मुख्यं करग्रहं त्वन्यराशिगे न कदाचन।।

–पृ.२४०(अ.६,श्लो.१३)

–क.सं.–३२.२

**(८५) (कश्यपादिभिः सौरा एव मासा उक्ताः-)**

विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः।

–पृ.२४०(अ.६,श्लो.१३)

**(८६)** गणयेत्कन्यकाधिष्ण्यादावृत्या वरजन्मभम्।

जन्मत्रिपञ्चसप्तर्क्षं हित्वान्यर्क्षं शुभप्रदम्।।

–पृ.२५३(अ.६,श्लो.२४)

–क.सं.–३३.८६–८७

**(८८)** रवेः समो ज्ञो मित्राणि चन्द्रारेज्याः परावरी।

इन्दोर्न शत्रवो मित्रे रविज्ञावितरे समाः।।

समौ कुजस्य शक्रार्कौ बुधोऽरिः सुहृदः परे।

ज्ञस्य चन्द्रो रिपुर्मित्रे शुक्रार्की इतरे समाः।।

गुरोरारेन्दुजा मित्राण्यार्की मध्यः परावरी।

भृगोः समविज्यकुजौ मित्रे ज्ञार्की परौ रिपू।।

शनेर्गुरुः समो मित्रे शुक्रज्ञौ शत्रवः परे।।

–पृ.२५७(अ.६,श्लो.२७–२८)

–क.सं.–३३.९२–९५

**(८९)** स्वगणे चोत्तमा प्रीतिर्मध्यमामरमर्त्ययोः।

मर्त्यराक्षसयोर्वैरमसुरासुरयोरपि।।

–पृ.२५९(अ.६,श्लो.३०)

–क.सं.–३३.७७

**(९०)(तथा जगन्मोहने वसिष्ठकश्यपौ-)**

द्विर्द्वाद्वशं शुभं प्रोक्तं मीनादौ युग्मराशिषु।

मेषादौ युग्मराशौ तु निर्धनत्वं न संशयः।।

आयुष्यसम्पद्हुतभोगसम्पत्पुत्रार्थसम्पत्पतिसौख्यसम्पत्।

सौभाग्यसम्पद्धनधान्यसम्पज्झषादियुग्मे क्रमतः फलानि।।

अजादियुग्मे क्रमतः फलानि वैधव्यमृत्युर्वधबन्धनानि।

वियोगसन्तापमतीव दुःखं वसिष्ठगर्गप्रमुखैः स्मृतानि।।

–पृ.२६२(अ.६,श्लो.३२)

**(९१)** चतुस्त्रिद्वयङ्घ्रिमोत्थायाः कन्यायाः क्रमशोऽश्विभात्।

वह्निभादिन्दुभान्नाडी त्रिचतुःपञ्चपर्वभिः।।

(इति पद्येन कश्यपो नाडीत्रयविचारमभिधायानुपदमेव–)

–पृ.२६८(अ.६,श्लो.३४)

–क.सं.–३३.७८

तत्रैव–

रेखास्त्रिस्रो विरच्याशु दस्रभाद्यानि विन्यसेत्।

एकरेखास्थयोमृत्युर्दम्पत्योर्जन्मधिष्ण्ययो:।।

–पृ.२६८(अ.६,श्लो.३४)

–क.सं.–३३.७९

**(९२)** सिंहकर्कटयोश्चापकीटयोर्मीनमेषयो:।

गण्डान्तमन्तरालं तन्नाडिका निधनप्रदा।।

–पृ.२७९(अ.६,श्लो.४३)

–क.सं.–३२.४६

**(९३)** पूर्णानन्दाख्ययोस्तिथ्यो: सन्धिनाडीचतुष्टतम्।

उद्वाहजन्ममानेषु गण्डान्तं निधनप्रदम्।।

–पृ.२७९(अ.६,श्लो.४३)

–क.सं.–३२.४५

**(९४)** चन्दस्य कर्तरी तद्वच्छुभदृष्टा न दोषदा।।

–पृ.२८२(अ.६,श्लो.४४)

–क.सं.–३२.४१

**(९५)** छिन्नोऽपि विष्णुचक्रेण सुधामयशिरास्तम:।

केशवस्य वरेणासौ तथापि ग्रहतां गत:।।

–पृ.२६८(अ.६,श्लो.४४)

–क.सं.–९.१

(९६) पापयोः कर्त्तरीकर्त्र्योः शत्रुनीचगृहस्थयोः।

यदा त्वस्तगयोर्वापि कर्तरी नैव दोषदा।।

–पृ.२८३(अ.६,श्लो.४४)

–क.सं.–३२.४१–४२

(९७) तुङ्गमित्रस्वराशिस्थः शुभयुक्तः शुभप्रदः।

एवंविधः क्रूरयुतः संपूणफलदः शशी।।

–पृ.२८४(अ.६,श्लो.४५)

–क.सं.–३२.३७

(९८) इष्टं स्वजन्मलग्नं तज्जन्मराशिरनिष्टदः।

लग्नगस्तु तयोः स्थानाच्छुभान्युपचयानि वै।।

–पृ.२८५(अ.६,श्लो.४६)

–क.सं.–३२.७५

(९९) जन्मशाष्टमलग्नेशो मिथो मित्रे व्यवस्थितौ।

जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः।।

–पृ.२८५(अ.६,श्लो.४६)

–क.सं.–३२.७४

(१००) दम्पत्योरष्टमे लग्ने राशौ वापि तदंशके।

तदीशे वा लग्नगते तयोर्मृत्युर्न संशयः ।।

–पृ.२८६(अ.६,श्लो.४८)

–क.सं.–३२.७०

**(१०१)** तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे।

विवाहे लग्नगे नैस्व्यं नित्यं स्यात्कलहो द्वयोः।।

–पृ.२८६(अ.६,श्लो.४८)

–क.सं.–३२.७३

**(१०२)** वियद्बाणा वेददस्राः खरामा व्योमसागराः।

वेदचन्द्राश्चन्द्रदस्राः खरामा व्योमबाहवः।।

नेत्राग्नयो व्योमगुणाः शून्यदस्राः गजेन्दवः।

क्ष्माबाहवो वियद्दस्राः शक्राश्चन्द्राः खभूमयः।।

वेदचन्द्रास्तर्कबाणा वेददस्राः खबाहवः।

व्योमेन्दवो व्योमचन्द्रा धृतयस्तर्कभूमयः।।

वेदाश्विनः खरामाः स्युर्दास्राक्षाद् घटिकाः क्रमात्।

आभ्यः परस्तात्क्रमशश्चतस्रो विषनाडिकाः।।

ऋक्षाद्यन्तघटीनिघ्नाः षष्टिभक्ताः स्फुटाः स्मृताः।

विषनाडीदोषदुष्टं लग्नं सर्वगुणान्वितम्।।

शुभैः सर्वैश्च संयुक्तमपि पञ्चेष्टकं त्यजेत् ।।

–पृ.२८९(अ.६,श्लो.४९–५०–५१)

–क.सं.–३२.७६–८१

**(१०३)** अह्नः पञ्चदशो भागो मुहूर्तोऽथ तथा निशि ।।

–पृ.२८९(अ.६,श्लो.५२)

–क.सं.–१७.५

(१०४) क्रूरविद्धं युतं धिष्ण्यं क्रूराक्रान्तं च कृत्स्नभम्।

मणिहेममयं हर्म्यं भूताक्रान्तमिव त्यजेत्।।

–पृ.२९२(अ.६,श्लो.५६)
–क.सं.–३२.९२–९३

(१०५) क्रूरविद्धयुतं धिष्ण्यं निखिलं नैव पादतः।

अन्यैरपि गुणैर्युक्तं सर्वदोषविवर्जितम्।।

त्यजेदनर्घ्यमाणिक्यं कलङ्कोपहतं यथा।।

–पृ.२९५(अ.६,श्लो.५८)
–क.सं.–३२.९४,९६

(१०६) एकार्गलो दृष्टिपातश्चाभिजिद्रहितानि वै।।

–पृ.३००(अ.६,श्लो.६२)
–क.सं.–१५.९

(१०७) वाह्लीके कुरुदेशे च वर्जयेद्भमुपग्रहम्।।

–पृ.३०१(अ.६,श्लो.६३)

(१०८) शैलाक्षश्रुतयः सूर्ये चन्द्रे षड्वेदपर्वताः।

भौमे बाणाग्निनेत्राणि सौम्ये वेदाक्षिवायवः।।

गुरुवारेऽग्निचन्द्रेभाः शुक्रे नेत्राद्रिवह्निभाः।

शनौ चन्द्रेभतर्काः स्युः कुलिको यमघण्टकः।।

अर्धप्रहरसञ्ज्ञा स्युर्मङ्गलेषु विवर्जयेत्।

वारदोषेण दुष्टं यल्लग्नं सर्वगुणान्वितम्।।

त्यजेद्यथा पुरोडाशं वायसोपहतं तथा।।
–पृ.३०२(अ.६,श्लो.६४)
–क.सं.–३२.८५–८८

(१०९) मासदग्धाश्च तिथयो मध्यदेशे विवर्जिताः।।

–पृ.३०३(अ.६,श्लो.६६)

–क.सं.–३३.२५

(११०) संक्रान्तियातांशकनन्दशेषस्तर्काग्निरूपाष्टयुगैः समेता।

तष्टो ग्रहै रोगहुताशभूपस्तेनो मृतिश्चेति च पञ्चबाणा।।

–पृ.३०८(अ.६,श्लो.७३)

(१११) स्वस्वेशेनोदयास्तांशौ वीक्षति वाथ संयुतौ।

लग्नं वास्तगृहं तत्तदंशेंऽशेनेक्षितं युतम्।।

–पृ.३१०(अ.६,श्लो.७६)
–क.सं.–३२.६५

(११२) राश्यंशौ मित्रसौम्येन वीक्षितौ वाथ संयुतौ।

उदयास्तांशयोः शुद्धिस्त्रिविधा मङ्गलप्रदा।।

–पृ.३११(अ.६,श्लो.७८)
–क.सं.–३२.६६

(११३) अन्त्यांशका अपि श्रेष्ठा यदि वर्गोत्तमाह्वयाः।

अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः।।

–पृ.३१५(अ.६,श्लो.८५)

–क.सं.–३२.८३

(११४) सप्तमस्थानगाः सर्वे ग्रहाः कुर्वन्ति शीघ्रतः।

दम्पत्योर्मरणं यत्स्यादेकस्य च न संशयः।।

–पृ.३१६(अ.६,श्लो.८६)

–क.सं.–३३.४७

(११५) पापयोः कर्त्तरीकर्त्रोः शत्रुनीचगृहस्थयोः।

चास्तगयोर्वापि कर्तरी नैव दोषदा।।

–पृ.३१९(अ.६,श्लो.८८)

–क.सं.–३२.४१–४२

(११६) नीचराशिगते शुक्रे शत्रुक्षेत्रगतेऽपि वा ।

भृगुषट्कोत्थितो दोषो नास्ति तत्र न संशयः ।।

–पृ.३१९(अ.६,श्लो.८८)

–क.सं.–३२.६१

(११७) अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा ।

कुजाष्टमोद्भवो दोषो न किञ्चदपि विद्यते ।।

–पृ.३१९(अ.६,श्लो.८८)

–क.सं.–३२.६४

(११८) नीचराशिगते चन्द्रे नीचांशकगतेऽपि वा ।

चन्द्रे षष्ठारिरि:फस्थे दोषो नास्ति न संशयः ।।

–पृ.३१९(अ.६,श्लो.८८)

–क.सं.–३२.४४

(११९) अब्दायनर्तुमासोत्थाः पक्षतिथ्यर्क्षसम्भवाः।

ते सर्वे नाशमायान्ति केन्द्रसंस्थे शुभग्रहे।।

काणान्धबधिरोद्भूता दग्धलग्नतिथेर्भवाः।

ते दोषा नाशमायान्ति केन्द्रसंस्थे शुभग्रहे।।

अकालजाश्च  नीहारविद्युत्पांस्वभ्रसंभवाः।

परिवेषप्रतिसूर्यशक्रचापध्वजादयः।।

दोषप्रदा मङ्गलेषु कालजाश्चेन्न दोषदाः ।

गुरुरेकोऽपि केन्द्रस्थः शुक्रो वा यदि वा बुधः।।

हरेः स्मृतिर्यथा हन्ति तद्वद्दोषानकालजान् ।

लतोपग्रहचण्डीशचन्द्रजामित्रसंभवान् ।।

तत्केन्द्रगो गुरुर्हन्ति सुपर्णः पन्नगानिव ।।

–पृ.३२०(अ.६,श्लो.८९)

–क.सं.–३३.६७,६४,२१,२२,६९

**(१२०)** काव्ये गुरौ वा सौम्ये वा यदा केन्द्रत्रिकोणगे।

नाशं यान्त्याखिला दोषाः पापानिव हरिस्मृतेः ।।

–पृ.३२०(अ.६,श्लो.९०)

–क.सं.–३३.५८

**(१२१)** वर्गोत्तमगते लग्ने वर्गदोषा लयं ययुः।

चन्द्रे चोपचये वापि ग्रीष्मे कुसरितो यथा।।

–पृ.३२१(अ.६,श्लो.९०)

–क.सं.–३३.७१

**(१२२)** लग्नाद्दुःस्थानगव्योमचरोत्थं दोषसंचयम्।

शुक्रः केन्द्रगतो हन्ति दावाग्निर्विपिनं यथा।।

–पृ.३२१(अ.६,श्लो.९०)

–क.सं.–३३.६०

**(१२३)** बलवान्केन्द्रगः सौम्यो हन्ति दोषशतत्रयम्।

द्यूनं विहाय दैत्येज्यः सहस्रं लक्षमङ्गिराः ।।

–पृ.३२१(अ.६,श्लो.९१)

–क.सं.–३३.५६

**(१२४)** अन्योन्यवीक्षणं सम्यक् सुलग्ने कारयेत्सदा।।

–पृ.३३१(अ.६,श्लो.१०६)

–क.सं.–३३.३७

**(१२६)** एवं गुणगणान् वीक्ष्य लग्नं निश्चित्य यत्नतः ।

सिद्धान्तोक्तेन मार्गेण लग्नकालं प्रसाधयेत् ।।

जलयन्त्रेण तल्लग्नं दद्यात्तेनार्चितो द्विजः।

मुखं वृत्तं द्वादशभिरङ्गुलैश्च षडुन्नतम् ।।

षष्टीर्भजेदहोरात्रे घटिकापात्रमुत्तमम् ।।

माषत्रयत्र्यंशयुतस्वर्णवृत्तशलाकया ।

चतुर्भिरङ्गुलैरामतया विद्धं स्फुटं न्यसेत्।।

रवेरर्धोदयं दृष्ट्वा वाप्यर्धास्तमयं तथा ।

पूर्वोक्तलक्षणं यन्त्रं मन्त्रेणानेन निःक्षिपेत् ।।

–पृ.३३१–३३२(अ.६,श्लो.१०५)

–क.सं.–३३.३०–३५

**(१२७)** अथवा साधयेत्कालं द्वादशाङ्गुलशङ्कुना ।।

–पृ.३३२(अ.६,श्लो.१०५)

–क.सं.–३३.३७

(१२८) यस्यैवाधानलग्नस्थे चन्द्रे वा भृगुनन्दने।

उपैति तस्य जातोऽग्निर्निर्वाणं सततं ज्वलन् ।।

–पृ.३४५(अ.९,श्लो.२)

–क.सं.–४३.६

(१२९) पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते ।

चन्द्रशुद्धियुते लग्ने चाष्टमोदयवर्जिते ।।

–पृ.३४६(अ.९,श्लो.२)

–क.सं.–४४.४–५

(१३०) लग्नस्थे चापगे जीवे मेषे वा सप्तकर्मगे ।

कुजेऽर्के त्रिषडायस्थे चन्द्रे वाग्निर्ज्वलत्यलम् ।।

–पृ.३४६(अ.९,श्लो.३)

–क.सं.–४३.१३

(१३१) अथात: संप्रवक्ष्यामि भूपानामभिषेचनम् ।

सौम्यायने सिते जीवे नास्तगे न च वृद्धगे ।।

–पृ.३४८(अ.१०,श्लो.१)

–क.सं.–४०.१

(१३२) उत्तरात्रयमैन्द्रेषु धातृचन्द्रकरोडुषु ।

सश्रुत्यश्वीज्यपौष्णेषु कुर्याद्राजाभिषेचनम् ।।

–पृ.३५०(अ.१०,श्लो.२)

–क.सं.–४०.५

(१३३) जन्मराशेरुपचये लग्ने शीर्षोदये स्थिरे ।

शुभग्रहेक्षितयुते नृपाणां नेक्षिते परैः ।।

–पृ.३५०(अ.१०,श्लो.२)

–क.सं.–४०.७

(१३४) त्रिलाभस्थः शनिः सूर्यश्चतुर्थे वाम्बरे गुरुः।

यस्याभिषेकः क्रियते तत्र तस्य मही स्थिरा ।।

–पृ.३५१(अ.१०,श्लो.४)
–क.सं.–४०.१४

(१३५) न मन्देन्दुदिने प्राचीं न गच्छेद्दक्षिणां गुरौ ।

सितार्कयोर्न प्रतीचीं नोदीचीं ज्ञारयोरपि ।।

–पृ.३५९(अ.११,श्लो.९)
–क.सं.–३६.७

(१३६) अग्निधिष्ण्यात्सप्त सप्त क्रमाद्धिष्ण्यानि पूर्वतः ।

वाय्वग्निदिग्गतं दण्डं पारिघं तु न लङ्घयेत् ।।

–पृ.३७९(अ.११,श्लो.३६)
–क.सं.–३६.९

(१३७) क्रमादद्वद्धानि स्युः ।।

–पृ. ३८०(अ.११,श्लो.३६)

(१३८) मासीषे शुक्लदशमी सर्वदा विजयाभिधा ।

जयदा सा तु यातॄणां सन्धिर्वा न पराजयः ।।

–पृ.४०९(अ.११,श्लो.७७)

–क.सं.–३६.६०

**(१३९)** निमित्तशकुनादिभ्यः प्रधानो हि मनोजयः ।

तस्माधियासतां नुणां फलसिद्धिर्मनोजयात् ।।

–पृ.४१०(अ.११,श्लो.७८)

–क.सं.–३६.६२

**(१४०)** चित्राण्डं च फलं ततः।।

–पृ.४१४(अ.११,श्लो.८५)

–क.सं.–३६.८६

**(१४१)** सितादौ मार्गशीर्षस्य प्रतिपद्दिवसे तथा ।

पूर्वाषाढागते चन्द्रे गर्भाणां धारणं वदेत् ।।

–पृ.४२२(अ.११,श्लो.९८)

**(१४२)** कार्यसिद्धिर्भवेद्दृश्ये शवे रोदनवर्जिते ।

प्रवेशे रोदनयुतः शवः स्यात्तु शवप्रदः ।।

–पृ.४१०(अ.११,श्लो.७८)

–क.सं.–३६.८९

**(१४३)** ओषधक्लीबबधिरैर्जटिलोन्मत्तपावकैः ।

अभ्यक्ताङ्गारकाष्ठास्थिचर्मान्धचिररोगिभिः ।।

तैलकार्पासलवणगुडतक्रतृणोरगैः ।

पङ्गुकुब्जैकपदमुक्तकेशबुभुक्षितैः ।।

सनग्नमुण्डैर्दुष्टसगतु यात्रा नैव फलप्रदा ।।

–पृ.४२६(अ.११,श्लो.१०२–१०३)

–क.सं.–३६.९०–९२

(१४४) यायी विरुद्धशकुनमादौ दृष्ट्वा प्रयत्नतः ।

प्राणायामत्रयं कुर्याद्द्वितीये द्विगुणं चरेत् ।।

तृतीये पुनरावृत्त्या शान्त्या यायाद्दिनान्तरे ।।

–पृ.४३०(अ.११,श्लो.१०८)
–क.सं.–३६.९७–९८

(१४५) अकारादिषु वर्गेषु दिक्षु प्रागादिषु क्रमात् ।

गृध्रमार्जारसिंहाश्वसर्पाखुगजशाशकाः ।।

दिग्वर्णानामियं योनिः स्ववर्गात्पञ्चमो रिपुः ।

रिपुवर्गं परित्यज्य शेषवर्गाः शुभप्रदाः ।।

साध्यवर्गं पुरः स्थाप्य पृ.तः साधकं न्यसेत् ।

विभजेदष्टभिः शेषं साधकस्य धनं स्मृतम् ।।

व्यत्यभेऽनागतं शेषं साधकस्य ऋणं स्मृतम् ।

धनादिकं स्वल्पमृणं सर्वसम्पत्प्रदम्।।

– पृ.४३५–४३६(अ.१२,श्लो.१)
–क.सं.–३८.३४–३७

(१४६) दत्ते दुःखं तृतीयर्क्षं पञ्चमर्क्षं यशःक्षयम् ।

आयुःक्षयं सप्तमर्क्षं कर्तुर्भाद्यदि सप्तमम् ।।

–पृ.४४४(अ.१२,श्लो.११–१२)

–क.सं.–३८.४०–४१

(१४७) इन्द्राग्न्योर्मथनं गेहं यमग्न्योर्घृतमन्दिरम् ।

पुरीषत्यागसदनं मध्ये राक्षसकालयोः ।।

विद्याजलेशनैऋत्योर्मध्ये च सदनं स्मृतम् ।

रौदनं सदनं नूनं जलाधीशसमीरयोः ।।

नवरत्नालयं मध्ये कुबेरेश्वरयोस्तथा ।

इन्द्रेशयोर्धान्यगृहम् ।।

–पृ.४५४ (अ.१२,श्लो.२१)

–क.सं.–३८.७५–७६

**(१४८)** नन्दा तिथिः शुक्रवारे सौम्ये भद्रा कुजे जया ।

रिक्ता मन्दे गुरोर्वारे पूर्णा सिद्धाह्वया तिथिः ।।

–पृ. १०(अ.१,श्लो.५)

–क.सं.–१८.२२

## ३) अथ अद्‌भुतसागरग्रन्थे (श्रीमद्‌बल्लालसेनविरचिते)

## कश्यप–वचनानि –

**(अद्‌भुतसागरग्रन्थलेखनकालः– शकः १०९० ख्रि.–११६९)**

ग्रन्थकर्ता – श्रीमद्‌बल्लालसेनः। टीकाकर्ता –डॉ.शिवाकान्त झा। कामेश्वर सिंह दरभङ्गा संस्कृत विश्वविद्यालय, दरभङ्गा, बिहार। प्रकाशकः एवं वितरकः– चौखंभा सुरभारती ग्रन्थमाला, वाराणसी। संस्करणम्– प्रथमम्, ख्रि.–२००६।

---

**१) तथा च कश्यपः –**

भौमं शान्तिहतं नाशमुपगच्छति मर्दितुम् ।

नाभसं न शमं याति दिव्यमुत्पातदर्शनम् ।।

–उपोद्‌घाताध्याये पृष्ठ– ११

**२) तथा च कश्यपः -**

सार्पार्धाद्दक्षिणं भानोः श्रविष्ठार्धं तथोत्तरम्।

कदाचिदासीदयनमुत्पातान्नैव शास्त्रतः।।

–पृष्ठ–२४(सूर्याद्भुतावर्त्तः)

**३) काश्यपश्च–**

पर्वता जलदुर्गाश्च कोशलाः पुङ्गणाः हलाः।

स्त्रीराज्यं तरुकर्काद्यास्तुषारा वनवासिनः।।

मौक्तिका मणिशङ्खाब्जमौषधीः कुसुमं फलम्।

द्वीपा महार्णवीयाश्च मधुरा लवणादयः।।

गोधूमाः शालयः शृङ्गिकर्षकाश्च यवा अपि।

सोमपब्राह्मणानाश्च याज्ञिकास्तुरगा रसः।।

स्त्रीसौभाग्यविविक्तानि हास्यलास्येक्षितानि च।

एतेषामधिपश्चन्द्रो ह्यष्टानाञ्च प्रकीर्त्तितः।।

–पृष्ठ–५३ ( राहोरद्भुतावर्त्तः)

**४) काश्यपस्तु–**

बुभुक्षितास्तीक्ष्णकोपा विभिन्नाः कुलपांसनाः।

नीचम्लेच्छादिजातीयाः दरदाः पारदारिकाः।।

सत्यधर्मविहीनाश्च गिरिस्थाः कन्दरास्थिताः।

प्रजाताः सर्वहीनाश्च शृगालादा महाशनाः।।

तिलाश्च बाहुयुद्धज्ञा माषाश्चोराः खराश्वराः।

यज्ञान् हिंसन्ति ये नित्यं राहुस्तेषामधीश्वरः।।

–पृष्ठ–९८

**५) काश्यपश्च–**

उत्तरायणसन्दृष्टो ब्रह्मक्षत्रविनाशनः।

दक्षिणायनगो राहुर्वैश्यशूद्रप्रमर्दनः।।

– पृष्ठ–१०१

**६) काश्यपः–**

कार्तिके कोशला गावः प्रधानाश्चाहिताग्नयः।

बाधन्ते गणमुख्याश्च क्षत्रिया गोमिनस्तथा।।

सुवृष्टिर्जायते चापि शस्यसम्पत् तथोत्तमा।

प्राच्यां दिशि भयं ब्रूयात् क्षेममन्यत्र निर्दिशेत्।।

–पृ.–११६

**७) काश्यपः–**

सौम्यपार्श्वगते विप्रान् पूर्वस्यां क्षत्रजातयः।

वैश्यान् दक्षिणतो राहुर्हन्ति पश्चिमतोऽपरान्।।

–पृ.–११४

**८) काश्यपः–**

पूर्वे सलिलजान् हन्यात् पश्चाद्धन्यात् कृषीवलान्।

याम्ये वरगजान् हन्ति सौम्ये गोनाशकृन्मतः।।

–पृ.–११५

**९) काश्यपस्तु–**

अवमर्दे पापमर्दात् स्वयं संक्षुभ्यते नृपः।

–पृ.–११८

**१०) काश्यपः-**

आरोहे नृपसंक्षयः।

-पृ.-११९

**११) काश्यपः-**

मध्ये तमसि सन्दृष्टे पीडयेन्मध्यदेशजान्।

-पृ.-११९

**१२) काश्यपः-**

दृष्टे तमसि पर्यन्ते शस्यानामीतिजं भयम्।

-पृ.-१२०

**१३) काश्यपः-**

भयं दुर्भिक्षरोगश्च तदा जगति जायते।

सर्वग्रस्तो यदा दृश्यो दुर्भिक्षस्तत्र जायते।।

-पृ.-१२१

**१४) काश्यपस्तु-**

अनागतमतीतं वा वेलाहीनाधिकं च यत्।

गर्भस्त्रावस्त्वनावृष्टिः फलं पुष्पं विनश्यति।।

-पृ.-१२९

**१५) काश्यपस्तु-**

प्रथमांशे विप्रपीडा क्षत्रियाणां द्वितीयके।

तृतीये चान्त्यजानां तु चतुर्थे मध्यदेशजान्।।

वैश्यानां पञ्चमे खांशे षष्ठांशे प्रमदाभयम्।

दस्युप्रत्यन्तिकान् म्लेच्छान् नाशयेत् सप्तमांशके।।

येषामंशे भवेन्मोक्षस्तज्जातीनां शुभं वदेत्।।

–पृ.–१३१

**१६) तत्र काश्यपः–**

उदितास्तमितौ ग्रस्तौ सर्वसस्यक्षयङ्करौ।

–पृ.–१३२

क.सं.–९.९

**१७) काश्यपः-**

दक्षिणे हनुभेदः स्यादाग्नेय्यां यदि गच्छति।

सस्यनाशं च कुरुते नृपभङ्गं सुदारुणम्।।

–पृ.–१३६

**१८) काश्यपः–**

दक्षिणः कुक्षिभेदः स्याद्याम्ये मोक्षो भवेद्यदि।

राजपुत्रभयं तत्र दक्षिणाशापतेर्वधः।।

–पृ.–१३७

**१९) काश्यपः-**

सौम्यायां तु यदा मोक्षो वामकुक्षिविभेदनम्।

स्त्रीणां गर्भविनाशाय सौम्याशाधिपतेर्भयम्।।

–पृ.–१३७

**२०) काश्यपः–**

पायुभेदगतो राहुर्वायव्यो निर्ऋताश्रयः।

गुदरोगभयं विन्द्याद्वामे राज्ञीभयं भवेत्।।

–पृ.–१३८

**२१) काश्यपः–**

ग्रासो मोक्षो यदा पूर्वे छर्दनं तु तदा भवेत्।

क्षेमहार्दिप्रदो ज्ञेयः सस्यनिष्पत्तिकारकः।।

–पृष्ठ–१३८

**२२) काश्यपः–**

पूर्वेण ग्रस्ते राहुरपरस्यां विमुञ्चति।

क्षुत्तस्करभयं तत्र मोक्षस्तु जरणं स्मृतम्।।

–पृ.–१३९

**२३) तथा च काश्यपः–**

यदा प्रकाशते मध्ये दुर्भिक्षमरकौ तदा।

–पृ.–१३९

**२४) काश्यपः–**

पर्यन्ते विमलत्वं स्यात्तमो मध्ये यदा भवेत्।

मध्याख्यदेशनाशः स्याच्छरच्छस्यं विनाशयेत्।।

– पृ.–१३९

**२५) तथा च काश्यपः–**

एकमासेऽर्कचन्द्राभ्यां ग्रहणं न प्रशस्यते।

परस्परवधं कुर्युः स्वबलक्षोभिता नृपाः।।

–पृ.–१४५

**अथ मङ्गलाद्भुतावर्त्तः**

**२६) काश्यपस्तु-**

महेन्द्रमलयं विन्ध्यं सिप्रा वेणा महानदी।

गोदावर्या नर्मदाया भीमायाः पश्चिमा दिशः।।

चेदिकाः कौङ्कणा दुर्गा द्रविडा वेत्रवन्नदी।

मन्दाकिनी पयोष्णी च  मालती सिन्धुपारकाः।।

सपाणड्याश्चोलदेशस्था विदेहान्ध्राश्मकास्तथा।

भासापराः कुन्तलाश्च केरला दण्डकास्तथा।।

नागराः पौरवाश्चैव कर्षकाः शस्त्रवृत्तयः।

हुताशनाजीविनो ये कुञ्जराः पशुपास्तथा।।

सांग्रामिका नृशंसाश्च सङ्कराश्चोपघातकाः।

कुमारा भूमिपतयो दाम्भिकास्तस्करा अपि।।

-पृ.-१६२-१६३

**अथ बुधाद्भुतावार्त्तः**

**२७) काश्यपस्तु-**

चित्रकूटगिरी रम्यो हिमवान् कौशिकी तथा।

मथुरायाश्च पूर्वार्धं लोहित्यः सिन्धुरेव च।।

गाम्भीरिका च सरयू रथाख्या गण्डकी नदी।

गान्धर्वा लेख्यहाराश्च दर्दुराश्चोपकृत्रिमाः।।

विदेहाः सर्वजलजाः काम्बोजाश्च सुराष्ट्रिकाः।

गन्धयुक्तिविदो ये च सौगन्धिकप्रलेपकाः।।

सुवर्णरजतं रत्नमातङ्गतुरगादि यत्।

पौरा जनपदाः सौम्याः सौमपुत्रोऽधिपः स्मृतः।।

– पृ.–१७६

**२८) तथा च काश्यपः–**

सौम्यं विष्णुं धनिष्ठां च रोहिणीं विष्णुमेव च।

शशिजश्च यदा हन्ति प्रजा रोगैश्च पीड्यते।।

–पृ.–१७७

**२९) काश्यपस्तु–**

रौद्रादीनि यदा पञ्च भेदितानि समन्ततः।

चन्द्रजेन तदा पीडा शश्वत् क्षुद्भयव्याधिभिः।।

हस्तादिषु यदा षट्सु नक्षत्रेष्विन्दुजः स्थितः।

गवामशोभनः प्रोक्तः सुभिक्षं शस्यसम्पदः।।

–पृ.–१७८

**३०) काश्यपस्तु–**

भरणीकृत्तिकार्यम्णमाहिर्बुध्नं च चन्द्रजः।

धातुद्रव्यविनाशाय धनवार्त्तांश्च पीडयेत्।।

–पृ.–१७८

**३१) काश्यपस्तु–**

पूर्वाद्यृक्षत्रये सौम्यो भेदं कृत्वा यदि व्रजेत्।

क्षुच्छस्त्रतस्करभयं करोति प्राणिनां वधम्।।

–पृ.–१७९

**अथ बृहस्पत्यद्भुतावर्त्तः**

**३२) काश्यपस्तु–**

त्रैगर्त्ताः सिन्धुसौवीराः शतद्रुर्मथुरा नदी।

शुघ्नौदीच्या विपाशा च दारुकाम्बष्ठका अपि।।

राजा पुरोहितो मन्त्री माङ्गल्यं पौष्टिकं व्रतम्।

कारुण्यकर्मसिद्धीनां विद्याशौचतपस्विनाम्।।

मत्स्याश्च वाटधानाश्च यौधेयाश्चार्जुनायनाः।

सारस्वताः पारतकाः हस्त्यश्वध्वजचामराः।।

शब्दार्थविदुषः पौरा नीतिज्ञाः शीलसंयुताः।

मांसी तगरकुष्ठं च शैलेयं लवणं सुरा।।

मधुरस्वादुवल्लीजविप्राणां चाधिपो गुरुः।

–पृ.–१८७–१८८

**३३) तथा च काश्यपः–**

कार्त्तिकादिसमा ज्ञेया द्विद्विनक्षत्रचारिणः।

त्रिभं भाद्रपदं ज्ञेयं फाल्गुनाश्वयुजौ तथा।।

त्रिभं भाद्रपदे ज्ञेयं फाल्गुने श्रावणे तथा।।(पाठान्तरम्)

–पृ.–१९१

**३४) तथा च काश्यपः–**

प्रवासान्ते समर्क्षेण तूदितो युगपच्चरन्।

तस्मात् कालात्तदृक्षाद्यो गुरोरब्दः प्रवर्तते।।

–पृ.–१९१

**अथ भार्गवाद्भुतावर्त्तः**

**३५) काश्यपस्तु**–

चन्द्रभागां वितस्तां च ऐरावतीं पिबन्ति ये।

पुष्कलावर्त्तकैकेया गान्धारं प्रस्थलास्तथा।।

तक्षशिला मालवका दशार्णा मौक्तिकं गिरिः।

धान्याढ्याः कुञ्जरा गावः प्रस्थापनविलेपने।।

सुरूपं सुभगोद्यानं कामुकाः कामचारिणः।

पेशला मधुरा हृद्याः सलिलाशयजीविनः।।

तरुणा योषितः क्रीडा विदुषां जनगोष्ठिका।

चित्राण्डजाः कुशास्तरणपत्रोर्णं नालिकामलम्।।

पिप्पल्यश्चन्दनं जातीफलमामलकं तथा।

गन्धपत्रं च लोध्रं च शुक्र एषां पतिः स्मृतः।।

–पृ.–२१५

**३६) तत्र काश्यपः**–

अश्विन्यां तुरगे पीडा याम्ये तु कृषिजीविनाम्।

–पृ.–२१७

**३७) काश्यपस्तु**–

भेदयेत् कृत्तिकां शुक्रो बहुतोयं हि पातयेत्।

रोहिणीतुरगं घोरं गृद्धाकुलभयावहम्।।

–पृ.–२१८

**३८) काश्यपः-**

मृगे तु सर्वशस्यानां क्षयं कुर्याद् भृगोः सुतः।

आर्द्रायां कलिङ्गजातान् कोशलांश्च निपीडयेत्।।

-पृ.-२१८

**३९) काश्यपः-**

पुनर्वसौ विदर्भांश्च पीडयत्युशनाः शुभः।

पुष्ये तु वृष्टिमाख्याति पुष्टां शस्यविवृद्धये।।

-पृ.-२१८

**४०) काश्यपः-**

आश्लेषासु च सर्पाणां पीडां कुर्याद् भृगोः सुतः।

मघायां तु गते घोरं भयं विन्द्यात्तु भार्गवे।।

सलिलं च भवेद्भूरि येन धात्री न दृश्यते।

-पृ.-२१९

**४१) काश्यपस्तु-**

भाग्ये पुलिन्दशवरान् नाशयेत् सलिलं पतेत्।

आर्यम्णे तु भवेत् पीडा पाञ्चालकुरुजाङ्गले।।

सुवृष्टिश्च सुभिक्षश्च चरत्यस्मिन् भृगोः सुते।

-पृ.-२१९

**४२) काश्यपः-**

हस्ते प्राप्ते कौरवाणां पीडां चित्रकरेषु च।

जलस्य तु निरोधं वै कुर्यादेवं तु भार्गवः।।

सुवृष्टिं कूपकृत्पीडां चित्राभेदं यदा व्रजेत्।

–पृ.–२२०

**४३) काश्यपः–**

स्वातिं स्थित्वा सुवृष्टिं च वणिङ्नाविकभीतिकृत्।

–पृ.–१२०

**४४) काश्यपः–**

विशाखायां सुवृष्टिश्च मैत्रे मैत्रं विकाश्यते।

ऐन्द्रे पौरविरोधः स्यान्मूले तु भिषजां भयम्।।

–पृ.–२२१

**४५) काश्यपः–**

आषाढयोर्व्याधिभयं वैष्णवे श्रवणे रुजः।

धनिष्ठायां कर्मकृतां वारुणे शौण्डिकक्षयः।

प्रौष्ठपादे व्याघ्रहिंसा आहिर्बुध्न्ये फलक्षयः।

पापिनां सनृपाणां च पौष्णे विन्द्यान्महाभयम्।।

–पृ.–२२१

**४६) तथा च काश्यपः–**

त्रिष्वश्विन्यादिकर्क्षेषु विज्ञेया नागवीथिका।

गजा तु रोहिणी चैवमादित्यैरावती स्मृता।।

मघाद्या वृषभा ज्ञेया गोवीथी हस्तसंज्ञिता।

जारद्गवी विशाखाद्या मूलाद्या मृगवीथिका।।

अजा तु विष्णुदैवत्या भाद्राद्या दहना स्मृता।

–पृ.–२२४

**४७) काश्यपः-**

कृष्णपक्षे पञ्चदशीचतुर्दश्यष्टमीषु च।

शुक्रो यदोदयं कुर्यात् तदा वृष्टिं विमुञ्चति।।

-पृ.-२३५
क.सं.-७.९

**अथ शनैश्चराद्धुतावर्त्तः**

**४८) काश्यपस्तु**

अर्बुदो रैवतगिरिः सौराष्ट्राभीरकास्तथा।

क्रतुभुजो प्रभासं सरस्वती दक्षिणा दिशः।।

आनर्त्तशूद्रविदिशः खलतैलिकनीचगाः।

वेदस्मृती शौकरिका मलिनश्च नदीतटम्।।

दुःशीलकाः शाकुनिकाः पशुपालवधास्तथा।

पाखण्डिनश्च वैतण्डा निग्रन्था शवराः शकाः।।

विरूपाः कटुतिक्ताश्च रसायनविघातकाः।

पुलिन्दास्तस्कराः सर्पा महिषोष्ट्रखरा अपि।।

चणका वातला वल्लाः पुंस्त्वसत्त्वविवर्जिताः।

काकगृध्रशृगालानां मृगाणां च शनैश्चरः।।

-पृ.-२३६-२३७

**अथ केत्वद्धुतावर्त्तः**

**४९) केतुस्वामिकान्याह काश्यपः-**

प्राकाराभ्युच्छ्रिताः शृङ्गगिरिस्थाः विजिगीषवः।

प्रत्यन्तवासनिरताः परच्छिद्रविशारदाः।।

मूर्खा विज्ञानहीनाश्च निर्मर्यादा नरास्तथा।

परदारता नीचाः केतोरेतान् विनिर्दिशेत्।।

–पृ.–२५४

**अथ ग्रहयुद्धाद्यद्भुतावर्त्तः**

**५०) यदाह काश्यपः–**

भेदोल्लेखांशुसम्मर्दा अपसव्यस्तथा परः।

ततो योगो भवेदेषामेकांशकशमापनान्।।

–पृ.–३४०

**अथाकृत्यादियोगाद्भुतावर्त्तः-**

**५१) काश्यपश्च–**

संवर्त्तसङ्गमौ मध्यौ सम्मोहौ भयदस्तथा।

कोपश्चानिष्टफलदः समाजाख्यस्तु मध्यमः।।

सन्निपाते  महावैरमन्योन्यमुपजायते।

–पृ.–३६४

**५२) काश्यपः-**

भूमिपुत्रादयः सर्वे यस्यामस्तमिते रवौ।

दृश्यन्ते सर्वककुभिः तत्रानिष्टं विनिर्दिशेत्।।

–पृ.–३६९

**अथ ऋक्षाद्यद्भुतावर्त्तः–**

**५३) काश्यपश्च–**

कृत्तिका रोहिणी चोभे संवत्सरतनुः स्मृता।

आषाढाद् द्वितयं नाभिः सार्पं हृत्कुसुमं मघा।।

क्रूरग्रहहते देहे दुर्भिक्षानलमारुताः।

